

# उमासहस्रम्

भारतसर्वकारस्य
शिक्षासचिवालय-कृत-अर्थ-साहाय्येन प्रकाशितम्

# उमासहस्रम्

श्रीवासिष्ठगणपतिमुनिप्रणीतम्



सम्पादकैः ब्रह्मश्रीकपालिशास्त्रिभिर्विरचितया
प्रभाख्यया व्याख्यया समेतम्

# विज्ञापनम्

(प्रथमावृत्तिगतम्)

प्राच्येषु काव्यकण्ठगणपतिशास्त्रीति विश्रुतो भगवान्वासिष्ठमुनिर्बहून् वेदशास्त्रसाहित्यग्रन्थान् प्राणैषीत्। तत्रेदं मुख्यतमम् उमासहस्रम् नाम स्तोत्रसाहित्यरत्नम्। अस्य प्रकाशनाय स्वर्गस्थस्य गुरोर्ग्रन्थकृत. प्रियपुत्रेभ्यः श्रीमहादेवशास्त्रिभ्यः प्राप्ताधिकारः अहं महदिदं कर्तव्य सेवनं निर्वर्तितवानस्मि। एतन्मुद्रयित्वा प्राकाश्यं नेतव्यम् इति बहूना तच्छिष्याणां चिरन्तनोऽभिलाषः सफलोऽभवदद्य। उपस्थिते विषमेऽस्मिन् मुद्रणप्रकाशनोपकरणेष्वसामान्यश्रमसाध्येषु सर्वेश्वरानुग्रहादकल्पे कर्तुमिदं कैङ्कर्यमिति गुर्वेतदस्मद्भाग्यम्। अत्र विषये बहवः सुहृदः कृतज्ञतापुरस्सरं स्मरणीयाः। तेषामिह कतिपयाना वा नामानि सप्रेमगौरवम् उल्लिख्यन्ते—

अस्मत्प्रियसुहृत् सद्दर्शनभाष्य-मातृतत्त्वप्रकाशादिग्रन्थकृत् तत्रभवान् ब्रह्मश्रीकपालिशास्त्री बाल्यादारभ्य उमासहस्रकवेरन्तेवासी (सम्प्रति श्रीअरविन्दाश्रमवासी) ग्रन्थस्य सम्पादनेन कविजीवितसङ्क्षेप-ग्रन्थोपोद्घात-व्याख्यानविरचनैश्च संस्कृतभारतीम् उपासमानान् सामान्यतः, अस्मदादीन् वासिष्ठमुनिभक्तान् विशेषतश्च अधमर्णानतानीत्॥

माननीयोऽस्माकं सुहृन्मणिः श्रीमान् सुन्दरपण्डित· (एस्. पि. पण्डित, अड्वोकेट्) असाधारणेनादरेण मुद्रणसामग्रीसम्पादनादिकार्यधुरं सुभरा विधाय मुद्रणपूरणाय नक्तंदिवं तपसेव परिश्रमं कुर्वाणः कार्याणि चालयन् प्रशंसनीया सेवामकरोत् इति महनीयमस्येदमाचरितम्॥

आर्योऽस्मदाबाल्यमित्रं विश्वामित्रो (डि. एस् विश्वामित्र, वकील) वासिष्ठमुनिप्रवरानुचराणामग्रगण्यः सोत्साहं ग्रन्थस्य प्रकाशन-प्रचारण-औपयिकप्रदर्शनेन कर्तव्येषु प्रायेण निर्णायकोऽभवत्॥

तत्रभवान् ब्रह्मश्रीपण्डितराजुशास्त्री (टि. आर्. सुब्रह्मण्यशास्त्री), आर्यः श्रीमान् विश्वनाथश्चोभौ अरुणाचलवासिनौ भगवद्रमणमहर्षिभक्तौ वासिष्ठमुनेः प्रियशिष्यौ मुद्रणपत्रशोधने भूयिष्ठं भागम् अहरताम्, अन्यथा च प्रकाशने श्रद्धामबध्नीताम् ॥

अन्ते चेदं वक्तव्यम्। अस्मदीयनन्दिनीमुद्रणालयकार्यकारिण. चिरञ्जीविनः अस्मद्दायादकुलपुत्राः सोल्लासं सभक्तिश्रद्धं शुद्धं च मुद्रणं रमणीयं निरवर्तयन्निति प्रीतोऽस्मि सुतराम् ॥

शिरसि
२२-१-१९४३

इति सतामाराधकः प्रकाशक.,
सीताराम-विघ्नेश्वर-भडति.

# निवेदनम्

अत्र प्रथम तावदुमासहस्रस्य आदर्शपुस्तकोल्लेखो भवति। ग्रन्थकृता स्वहस्तलिखितानि चत्वारि पुस्तकानि मिलितानि समवलोक्य प्रकाशनाय पुस्तकद्वयमुपात्तम्। चतुर्ष्वपि पुस्तकेषु प्रथमम् आन्ध्रलिपिषु लिखितम्। इदं च प्राचीनं, रचनकालो (क्री. श. १९०७) दत्तः। ग्रन्थकृदनुग्रहास्पदेन माननीयेनास्मन्मित्रेण आर्य-दोरस्वामिना (एस्. दोरस्वामि अय्यर, अड्वोकेट्) अत्रोपयोगाय दत्तम्। पुस्तकस्य दलानां प्रान्तेषु तत्र तत्र स्तबकाश्लोकभागानां क्वचिद् भावप्रदर्शनाय विषयाः सूचिताः। स्तबकाना सङ्ख्याः श्लोकाना पाठाः सङ्ख्याः क्रमश्च उत्तरकालीनग्रन्थाद्भिद्यन्ते ॥

द्वितीयं नागरलिपिषु लिखितम्। अत्रापि लेखनकालो (क्री. श. १९२२ संवत्सरस्य पूर्वभागः) दत्तः। 'शिरसि'-नगरात् ग्रन्थकृतः शिष्यवर्गादस्मत्प्रियसुहृदा श्रीमता सुन्दरपण्डितेन (एस्. पि. पण्डित, अड्वोकेट्) लम्भितम्। उत्तरकालीनपुस्तकात् भिन्न स्तबकश्लोकसङ्ख्याक्रमेषु। इदं पुस्तकद्वयं श्लोकानां व्याख्याने क्वचिदुपयुक्तमभूत् ॥

तृतीयं आन्ध्रलिपिलिखितम्। इदमपि द्वितीयमिव 'शिरसि'तः प्रापितम् अस्य प्रकाशनस्य आदर्शपुस्तकं भवति। अस्य लेखनकालो न दत्तः॥

चतुर्थ भगवान् श्रीअरविन्दः मयि कृपाविशेषेणात्रोपयोगाय दत्त्वा मामन्वग्रहीत्। अस्मै हि ग्रन्थकारः नागरलिपिषु स्वहस्तलिखितमिद क्री. श. १९२८ संवत्सरे समर्पितवान्। अस्मिन् पुस्तके प्रथमदलस्य शिरसि लेखनस्यारम्भदिवसः समाप्तिदिवसश्च दत्तौ। "आरम्भः– १५-८-१९२२, समाप्तिः—४-९-१९२२" इति लिखितं दृश्यते। अत्र प्रतिस्तबकं विषयाः सूचिताः। नास्त्यपरो भेदस्तृतीयचतुर्थयोः। अत्यन्तविरलः पाठभेदो दृश्यमानः व्याख्याने दलस्य पादे वा दत्तः॥

अथ च शिरसि-वकील आर्यः श्रीमान् विश्वामित्र. स्वीयं पुस्तकप्रतिलेखम् आदावेव प्रेषितवान्। अरुणाचलादन्यच्च प्रतिलेखपुस्तकमदर्शि। अनयोः

प्रायशस्तुल्य एव पाठः। क्वचित्पाठभेदोऽकिञ्चित्करः। यद्यपि प्रकाशनस्य ग्रन्थकृल्लिखितपुस्तकलाभेन प्रामाण्यमसन्दिग्धं जातं, तथाऽपि पूर्वोक्तयोस्ते पाठभेदा सूचिताः ये ग्रन्थकृल्लिखितपुस्तकद्वयस्यान्यतरेण संवादमभजन्त। अलमेतावता आदर्शपुस्तकसम्पादनमधिकृत्य ।।

अथेह सुगृहीतनामधेयाना सुहृदामुपकारिणा सामोदसमुल्लासं स्मरणं भवति—अस्मत्प्रियसुहृदार्यो विश्वामित्रः (डि एस् विश्वामित्र, वकील) प्रथममुमामहस्रस्य सव्याख्यम् अव्याख्य वा प्रकाशने बद्धपरिकरो व्याख्याविरचनाय मामुदयोजयत्। सव्याख्यस्योमासहस्रस्य प्रकाशने कुतूहली संस्कृतवाग्वनिकाग्रणीरुदारः श्रीमान् सुन्दरपण्डितः बहुप्रकारैरस्मिन् प्रकाशने स्वीय बहुमुख सत्त्व व्यलासयत्, आदर्शपुस्तकानि लम्भयित्वा तेषा शोधने साहाय्यमकरोत्, व्याख्यानप्रणयनाय मां प्रोत्साह्य अन्यच्च यावदपेक्ष कर्तव्येषु समर्थितवान्। आवयोर्बहुजन्मसञ्चितेव वर्षपूगवर्धिता मैत्री अस्य ग्रन्थस्य सम्पादनाय व्याख्यानरचनाय प्रकाशनाय च निमित्तमभूदिति दिङ्मात्रमुक्तम् ।।

अस्मत्त. सस्कृतसाहित्यग्रन्थानधीयानः सुधीर्नैष्ठिको माधवपण्डितः (एम्. पि. पण्डित, बि. ए. बि कोम्) सहोदरः सुन्दरपण्डितस्य कनीयान् प्रेयान् मम वहुविधं साहाय्यम् अकरोत्। श्लोकसूचिकापरिकल्पनादिभिः परिश्रमैः सोल्लास बहुतरा मदीयं भारमवतार्य स्वयमवाक्षीत् ।।

अस्मदीयप्रियसुहृदौ चिरञ्जीविनौ, विद्वद्वरेण्यो ब्रह्मश्रीराजुशास्त्री, नैष्ठिकः साधुमाहित्य श्री विश्वनाथश्चोभौ मुद्रणपत्रशोधने साहाय्यं कृत्वा अन्यथा च निजोत्साह फलितमकुरुताम् ।।

अन्ते चेद भवति। अस्मिन् पावने कार्ये गुरोर्ग्रन्थप्रकाशने सादरं प्रवृत्ताय भगवद्वासिष्ठगणपतिभक्तिपराय प्रकाशकाय चिरञ्जीविने श्रीमते सीताराम-विघ्नेश्वर-भडतये देवतानुग्रहप्रार्थनाभरा अस्मदाशिषो भूयस्य. सन्तु ।।

अस्य ग्रन्थस्य स्वीयं प्रकाशनाधिकारं अन्यस्मिन्वा सङ्क्रमय्य कर्तव्यं सुकृत साधितवते अस्मदाचार्यपुत्राय श्रीमते चिरञ्जीविने महादेवशास्त्रिणे सर्वेश्वरो दिशतु सर्व कल्याणम् ।।

श्रीअरविन्दाश्रमः, नवपल्ली (पाण्डिचेरी, फ्रेंच इण्डिया)
चित्रभानु सं. मार्गशीर्ष-पूर्णिमा

२२-१२-१९४२

सम्पादक.

ति वि. कपालिशास्त्री

# व्याख्यातुर्विज्ञप्तिः

अथ व्याख्यामधिकृत्येद वक्तव्यम्। आन्ध्रलिपिलिखितमादर्शपुस्तकमेव श्लोकानां व्याख्यानस्याधारोऽभवत्। कविजीवितादि विरचय्य ग्रन्थः सव्याख्यो मुद्रणाय प्रेषितः। ततो मुद्रणे प्रचलति, नागरलिपिलिखित श्रीअरविन्दीयं पुस्तकं लब्धम्। दैवाद् द्वयोस्तुल्य आसीत् पाठः, तथा स्तबकश्लोकसङ्ख्याक्रमाश्च। द्वित्रेष्वेव स्थलेषु दृष्टाः पाठभेदाः श्लोकव्याख्याने पत्रस्य पादे वा सूचिताः। एकत्र (१५ स्त ४ श्लो) 'विश्ववस्तुषु निरस्तविशेषः' इति पुस्तकद्वयेऽपि दृश्यते। तथाऽपि 'विशेषा' इति अरुणाचलस्थशिष्यवर्गपाठानुसारेण मुद्रितम्। अस्य पाठस्य ग्रन्थकृल्लिखित-आदर्शपुस्तकालाभेऽपि आप्तवाग्विश्वासात् पाठस्य सौष्ठवाच्च ग्रन्थकृता अनन्तरकाले तथा संस्कृत स्यादित्यमसि। अन्यत्र (२५ स्त २५ श्लो.) 'पूर्णाम्बरे' इति आन्ध्रलिपिलिखितम् अवलोक्य श्लोको व्याख्यातः। मुद्रणानन्तर 'पूर्णाऽम्बरे' इति अरुणाचलपाठ विज्ञाय अपरलब्धं नागरलिपिपुस्तकेऽपि तथा स्थित दृष्ट्वा पुस्तकस्यान्ते सस्करणपत्रे 'अम्बरे पूर्णा' इति तदनुसारेण व्याख्या च दत्ता॥

अथेह व्याख्याया पूर्वेषा पद्धतिमनुसृत्य व्युत्पित्सूना सुखबोधाय श्लोकानाम् अन्वयमुखेन व्याख्यान विरचितम्। तत्र तत्र निघण्टव उदाहृताः। आवश्यकेषु स्थलेषु सन्दिग्धेषु वा व्याकरण निरूपितम्। यत्र श्लोकार्थो विस्पष्टस्तत्र विग्रहवाक्यदानमात्रेण व्याख्यान समापितम्। शब्दपाकसम्पत्तिः प्रौढस्य कवेरस्य कवितायाः सर्वत्र विलसिता। तस्मात् पदप्रयोजनानि 'पर्याप्तो ह्येकः पुलाक. स्थाल्या निदर्शनाय' इति क्वचिदेव सूचितानि। तानि पुनः पाठकैरूह्यानि, विद्वद्भि. सहृदयैरास्वाद्यानीति व्याख्याया न लब्धोऽवकाशस्तेषाम्। अथ प्रतिपादिताश्चालङ्काराः। तेषां लक्षणोदाहरणे 'इति लक्षणात्' इत्युक्तस्थलेषु चन्द्रालोकलक्षणादिति बोध्यम्। अलङ्कारोपपत्तिप्रदर्शने नाल चन्द्रालोक इति यथोचितं मम्मट-विश्वनाथ-दीक्षित-जगन्नाथानां ग्रन्था आश्रितास्तत्र तत्र नामत उल्लिखिताश्च। यद्यप्येकस्मिन् श्लोके क्वचिदसङ्कीर्णालङ्कारा

अनेके दर्शयितुं शक्याः, तथाऽपि ग्रन्थविस्तरभिया न दर्शिताः। तावता न संसृष्टिसङ्करालङ्कारा नोपपादिताः। अलङ्कारनिर्णये प्रायेण कुवलयानन्दकारोऽनुसृतः। यत्रालङ्कारमीमांसकाना विप्रतिपत्तयः तत्र रसगङ्गाधरकारविमर्शोऽत्यन्तमुपयुक्तोऽभूत् ॥

अथ च दण्डिनमनुसृत्य निन्दति-आक्षिपति-जयति-प्रतिगर्जतीत्यादिसादृश्य-सूचकपदेषु प्रयुक्तेषु उपमेत्येव गृहीतं, न तु प्रतीपमिति। तावता न प्रतीपस्य पृथगलङ्कारता नोपात्ता। अत्र वक्तव्यं समासतोऽभिधीयते।

यद्यपि प्रतीपस्योपमाभेदतया पृथगलङ्कारता नाभिमतैवैकेषां, तथाऽपि अप्पय्यदीक्षितादीनां मतमादरणीयत्वेनावलम्बितम्। तन्मतखण्डनधुरीणैः रसगङ्गाधरकारैः प्रतीपस्योपमाभेदतां प्रतिपादयद्भिरपि प्राचामनुरोधेन प्रतीप निरूपितमिति चावधारितम्। अत एवेह व्याख्याया बहुषु स्थलेषु प्रतीपं प्रतिपादितम्। परन्तु हसति-निन्दति-प्रतिस्पर्धते-द्वेष्टीत्यादीनि पदान्युपमाया चमत्कारितया प्रयुज्यन्ते। तस्मान्न तादृशपदप्रयोगमात्रेण प्रतीपमिति वक्तु युक्तम्। यत्रोपमानतिरस्कार एव चमत्कारप्रयोजकतया विवक्षितस्तत्र प्रतीपमिति गृहीतं, यत्र साधर्म्यमेव चमत्कारितया विवक्षितं तत्रोपमैवेति च। चमत्कारनिदानभेदो ह्यलङ्कारभेदे निदानम्। अयं च भेद उमासहस्रश्लोकमेकमुदाहृत्य प्रदर्शयिष्यते। 'मृद्वीकां मधुरतया' (१८ स्त. २५ श्लो.) इत्यत्र कविः स्वप्रणीतप्रहर्षिणीवृत्तरचितपद्यानां द्राक्षामाधुर्यं सुधामहिमानं गङ्गागाम्भीर्यं च विवक्षु· तेषां द्राक्षादीना माधुर्यादिभिर्निर्जयं गायति। अतोऽत्रोपमैवेति कथितं, न तु प्रतीपमिति; यतः कवीश्वरेण प्रौढेन वाऽपि भक्ताग्रगण्येन बद्धा प्रहर्षिणीश्रेणी द्राक्षेव मधुरा, सुधेव महिमवती, गङ्गेव गम्भीरेति साधर्म्यमेव विवक्षित, न तु उपमानभूतद्राक्षादितिरस्करणमिति ग्रहणं सूपपन्नं भवेत्सहृदयानाम्। यदीह कविना द्राक्षा मम प्रहर्षिणीव मधुरा, गङ्गा मम प्रहर्षिणीव गम्भीरेत्याद्युपमानतिरस्कार एव विवक्षित इति ग्रहणमुपपन्न भवति सहृदयस्य, तदा प्रतीपं दुर्वारम्। एवं सहृदयहृदयसाक्षिकेण विवक्षानिर्णयेन चमत्कृतिभेदसिद्धेरलङ्कारभेदो ग्राह्यः ॥

एवं सर्वत्र प्रतीपप्रतीतिस्थले उपमैव वक्तु शक्येति मा भूत्। चमत्कारफलकतया उपमानतिरस्कारविवक्षायां प्रतीपमेवेति ग्राह्यम्। तथा च 'त्वद्विलोकितनिभैर्विलोकितैः' (१२ स्त. ४ श्लो.) इत्यत्र शृङ्गारसन्दर्भे परमेश्वरमनोमादकानां उपमेयभूतपार्वतीविलोकितानां सौन्दर्योत्कर्षकीर्तनाय प्रसिद्धोप-

मानभूत-मृगीविलोकित-तिरस्कृति विवक्षिता चमत्कृतिमादधातीति प्रतीपमेवोपपादितमिति आलङ्कारिकसरणिर्दिङ्मात्रं प्रदर्शिता। अलङ्कारतल्लक्षणनिष्कर्षोपपादनेषु आलङ्कारिकाणा विप्रतिपत्तीर्यथाश्रुतम् अवधाय तत्र यथामति साराशम् आदाय निर्णीता उपपादिताश्च तत्र तत्रालङ्काराः। इदं च स्यात् सुगममलङ्कारजिज्ञासूनां, विद्वासो रसिकाश्च आराधिताः स्युरित्याशंसे॥

कविजीवितसङ्क्षेपं उमासहस्रसम्भवसन्दर्भ समासतो ग्रन्थस्योपोद्घातं वाङ्मुख व्याख्यायाश्च पश्यता महाशयानां ग्रन्थस्य गरिमा सुगमो भवेदित्यसंशयम्। यद्यपि अस्मदाचार्यस्य भगवतो वासिष्ठमुने. लोकोत्तरवाग्विलासविवरणेनैव नीतोऽस्मि धन्यता, तथाऽपि, यदि मदीयोऽयं परिश्रमः संस्कृतवाग्रसिकानाराधयेत्, यदि च काव्याधीतिनाम् उपकाराय भवेत्, ततोऽपि यदि मुदमावहेदीषद्वा विदुषां, मन्येयैव धन्यतरमात्मानम् अनुचरोऽहं धीराणाम्।

'आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः॥'

२५-१२-१९४२ ति. वि. कपालिशास्त्री.

# विषयसूचिका



## प्रथमं शतकम्



## द्वितीयं शतकम्



## तृतीयं शतकम्

## चतुर्थं शतकम्



## पञ्चमं शतकम्



## षष्ठं शतकम्



## सप्तमं शतकम्

## अष्टमं शतकम्



## नवमं शतकम्



## दशमं शतकम्

श्रीः

# वासिष्ठो गणपतिमुनिः

उमासहस्रस्य महतोऽस्य स्तोत्रसाहित्यस्य प्रणेता काव्यकण्ठपदलाञ्छनो भगवान् अस्मदाचार्यो वासिष्ठगणपतिमुनिः। सर्वतोमुखी चास्य नैष्ठिकशिखामणेर्माननीयचरितस्य मेधामयी जीवितप्रभा। सा च यत्पथं प्राप्ताऽपि तस्य सीमानमवाप्य स्वायत्तीकरणाय प्रभुरभूत्। वेदाः शास्त्राणि तपो जपः कवितेत्येतानि प्रज्ञां निसर्गज्वलितां समुज्ज्वाल्य जीवितमपूरयन्नस्य। अत एव राष्ट्रीयविषयो लोकवार्ता सङ्घक्षेमं धर्मोद्धारः अस्पृश्यतेत्येवमादिषु सक्तमप्यस्य चित्तं कादाचित्केनैव मनस्तेषु व्यापार्य कृतवान्सङ्घस्य कैङ्कर्यम्। बहुविस्तरमस्य चरितं सङ्क्षेपेणाख्यातुमपि बहुशतपत्रात्मकः प्रबन्धो निबद्धचेत। तच्च पावनं माननीयं च कृत्यं कोऽपि पुण्यपुरुषो निपुणतरं निर्वाहयेदित्याशयाऽत्र कविजीवितस्य कतिचनांशान् समासतोऽभिधास्यामः, येनास्य महानुभावस्य लोकोत्तरकवितामुल्लासयन्ती जन्मतः सिद्धाऽसाधारणी प्रतिभा च प्रतिभायात्पाठकमहाशयानाम्॥

अयं च पित्रोस्त्रयाणां पुत्राणां मध्यमः। अस्य जन्मनः प्राक्काशीक्षेत्रं गतवतः पितुर्नरसिंहशास्त्रिणः किमपि देवताप्रसादभरं दिव्यं दर्शनमभूत्। तत्र विघ्नेश्वरसन्निधौ स्थितस्य तस्योपकण्ठमागतः कोऽपि शिशुः। स च गणाधिपतेर्देवान्निर्गतस्तमुपगम्यान्तर्धानमगमत्। ततो वाराणस्याः प्रत्यागतात्पितुरयं मध्यमः पुत्रोऽजायत। बहुभिर्निदर्शनैर्गणपतेरेवागतोऽयं शिशुरिति दृढधीर्नरसिंहशास्त्री गणपतिरित्यस्य नाम चकार। जातस्य गणपतेराषष्ठवर्षं बालग्रहदोषजो मूर्च्छादिर्विकारः प्लीहरोगो ज्वरबाधेत्यामयानां बहूनामालवालमभूच्छरीरम्। प्राप्ते तु षष्ठे वर्षे, निमित्तमात्रेण चिकित्साविशेषेण

सर्वबाधाविनिर्मुक्तस्य बालस्य बुद्धिभासः सपदि व्यक्तं विलसितुमारभन्त। पूर्वे * वंशजा इवास्य पिताऽप्यायुर्वेदे दैवज्ञतन्त्रे तन्त्रशास्त्रे च विशारदः। श्रीविद्योपास्तिरेतत्कुलजानां कुलधनम्। साधुव्युत्पन्नानां नानाशास्त्राभिज्ञानामस्मिन्कुले सम्भूतमिमं काले ज्यौतिषादिविद्याः प्राक्तनाः संस्कारा इव स्वयं प्रपेदिरे। दशमे वर्षे पञ्चाङ्गं गणयितु प्राभवत्। द्वादशे मेघसन्देशानुकरणेन भृङ्गसन्देशमिति काव्यमरीरचत्। अन्यानि च पद्यानि कवयन् कवितामविरतमुपास्त। सा च वशिता मनोरमा चतुर्दशवार्षिकं बालकविं मोहादिव वव्रे। वयोऽनुरूपं कवितायामौद्धत्यं रामणीयकं च तदानीमेव दृष्टे। अत्रेदं निदर्शनं भवति॥

"इह केषाञ्चिदेषा चेन्न सन्तोषाय का क्षतिः।
किमानन्दाय काकानां बालकोकिलकाकली॥"

इत्यादि। काव्याधीतिं समाप्य व्याकरणमलङ्कारशास्त्रं च शिक्षमाण एव वाल्मीकि-व्यासनिबन्धौ सविस्तरं व्यचारयत्। महाभारतं तु बहुकृत्वोऽपाठीत्। अनेन सुव्यक्तधीविक्रमो जातः। तपसा सर्वं साध्यमिति दृढोऽभून्निश्चयः। तदा तपोऽभिलाषी बालो महत्त्वाकाङ्क्षी पितुरनुमत्या तीर्थयात्रामारभत। बाल्य एव कृतोद्वाहोऽप्यष्टादशवर्षदेशीयो देशान्तरेषु तत्र तत्र क्षेत्रेषु भुवनेश्वरादिषु तपश्चरन्नवात्सीत्। प्रागेव पितुर्महोपासकात् श्रीविद्यादिमन्त्रदीक्षां प्राप्तस्यास्य मन्त्रबलात्तपसा स्तोत्रेण चाराधनेन प्रत्यक्षो भवेत्साम्बमूर्तिः सर्वेश्वरो भगवानित्याबाल्यरूढा श्रद्धा वयसा सहावर्धिष्ट। ततः काशीक्षेत्रं गतवतोऽस्य तस्मिन्काले विश्रुतपाण्डित्यैः शिवकुमारपण्डितैः सह परिचयो जातः॥

---

*आन्ध्रराष्ट्रे विशाखपत्तनमण्डले 'बोब्बिलि'-संस्थानगः कुमुदोपलनामा (कलवरायि)ग्रामोऽस्मत्कवेर्जन्मस्थलम्। अस्य पूर्वे चोलदेशीयकुम्भघोणनगरोपान्त-'वलङ्गिमान्'-अग्रहारवासिनः। ऋग्वेदिनः कौण्डिन्यसगोत्राः। तेषामान्ध्रदेशमागतानां याताः परश्शतद्वयाः संवत्सराः। अय्यलसोमयाजिकुलोपाधय एते॥ कवेर्जननकालः बहुधान्यकार्तिकबहुलाष्टमी (क्री. श. १८-११-१८७८)

अथ काश्यां वसतोऽस्योपगता वार्ता "गौडेषु विश्रुते नवद्वीपनगरे पाण्डित्यपरीक्षायै प्रचलिष्यति पण्डितपरिषद्"इति। सुहृदां प्रेरणया तत्र परीक्षिष्यमाणवर्गे प्रवेशलाभाय पत्रमेकं शिवकुमारपण्डितेभ्यो लब्ध्वा नवद्वीपं प्रस्थितः। स च लेखः परिषत्कार्यनिर्वाहकेभ्यः शितिकण्ठवाचस्पतिभ्यो दत्तः। दलस्य शिरसि हनूमन्तं कीर्तयद्रामायणश्लोकार्धं "देवासुरसमीकेषु बहुशो दृष्टविक्रमः" इति लिखितमवलोक्य तृप्तो वाचस्पतिरनुमतिमस्य परीक्षायै लम्भयामास। आगतः परिषद्दिवसः। शरीरेण कृशोऽस्माकं युवा समृद्धः साहित्यसंपदा भुवनमेव तृणीकुर्वत्या दृष्ट्या दीप्तः सभां प्रविष्टः। प्रविशन्नेवायमेकविंशतिवर्षो वर्षिष्ठं कञ्चन गम्भीराकृतिं समुपविष्टं निर्दिश्य पार्श्वगं प्रवेशकपुरुषमप्राक्षीत् "कोऽसौ महाशय" इति। स त्वम्बिकादत्तो नामाशुकविरिमं प्रश्नमाकर्ण्य स्वयमुत्तरदानव्याजेनास्य परीक्षां परीक्षकः प्रारब्धवान्। बाल्य एव सिद्धकवेरस्य महान्तमनुभावमाविष्कुर्वन्नयं रसवान्कथाघट्टः। तं किञ्चिदिव सविस्तरमावेदयामः॥

अम्बिकादत्तः "सत्वरकवितासविता गौडोऽहं कश्चिदम्बिकादत्तः" इति स्वकवितासामर्थ्यं स्वं देशं नाम च सप्रासं पद्यार्धेन प्रोक्तवान्। अस्माकं युवा कविश्च तत्सदृशमेव पद्यं पूरयेदिति परीक्षकस्य भावमवबुद्धवान्। ततः सपदि प्रत्युत्तरदानाय कवेर्मुखात्सदोगतहृदयसमावर्जनपटुः कोकिलकाकलीमञ्जुला निर्गता भारती॥

गणपतिः "गणपतिरिति कविकुलपतिरतिदक्षो दाक्षिणात्योऽहम्" इति पद्यं पूरयित्वा "भवान् दत्तः, अहं त्वौरसः" इति चमच्चकार। भवानम्बिकादत्तो दत्तपुत्रः, अहं गणपतिरौरस इत्यभिप्रायेणैवमभाणीत्॥

ततः परीक्षोपक्रान्ता। पद्यपूरणाय दत्ताः समस्याः। द्वयोरनुष्टुभोरुत्तरार्धे दत्ते परीक्षकैः। पूर्वार्धाभ्यामेवं पूरितवान् परीक्षितः॥

हिडिम्बा भीमदयिता निदाघे घर्मपीडिता। (पूरणम्)
स्तनवस्त्रं परित्यज्य वधूः श्वशुरमिच्छति॥ (किन्त्वनवद्यचरिता)

इति समस्या॥

चतुर्थ्यां भाद्रशुक्लस्य चन्द्रदर्शनशङ्कया। (इति पूरितम्)
वत्सरस्यैकदा गौरी पतिवक्त्रं न पश्यति। इति समस्या॥

तृतीया समस्या। अत्र चतुर्थः पादो दत्तः त्रिभिः पादैरेवं पूरिता ॥
राहुस्त्रिकोणे च गुरुस्तृतीये कलत्रभावे च धरातनूजः।
लग्ने च कोष्ठे यदि बालकः स्यात् सूर्यः शशाङ्केन समं विनष्टः ॥
(न त्वमावास्या)

चतुर्थ्यां समस्यायां च अन्त्यः पादो दत्तः, एवं श्लोकः पूरितः ॥
सतीवियोगेन विषण्णचेतसः प्रभोः शयानस्य हिमालये गिरौ।
शिवस्य चूडाकलितं सुधाशया पिपीलिका चुम्बति चन्द्रमण्डलम् ॥

एवं झटिति समस्यापूरणे जाज्वल्यमानाऽस्य प्रतिभाविजृम्भिता निरर्गलकविताधारा विद्वत्समाजं सम्मोहयामासेति किमत्र चित्रम् ?

ततः परीक्षायां प्रचलन्त्यां द्वौ श्लोकौ व्याख्यानाय परीक्षकैर्दत्तौ। तत्रैकः "स्तुमः कं वामाक्षि" इति काव्यप्रकाशोदाहृतरसाभासश्लोकः। अन्यस्तु रघुवंशनवमसर्गस्थः "न मृगयाभिरति" रिति। उपक्रान्ता च व्याख्या अनर्गलया धारया वाग्वीर्यमृतमाविष्कुर्वाणा कर्णकुहरैः सभासदां हृदयानि प्रविश्य बहुतरां रसार्द्राणि व्यतानीत्। वयसा यवीयसः तेजसा प्रवृद्धस्याशुधाराकवेरस्य रसनाग्ररङ्गे नृत्यन्ती वाणी क्षणमेकत्र स्खलितेव दृष्टा परिषदग्रासनमलङ्कुर्वता स्वयमाशुकविनाऽम्बिकादत्तेन। सर्वासामिति स्थले सर्वेषामिति स्खलितम्। लब्धावसरः परीक्षको "विरम तावत्" इत्यवोचत् ॥
अम्बिकादत्तः—

अनवद्ये ननु पद्ये गद्ये हृद्येऽपि ते स्खलति वाणी।
तत्किं त्रिभुवनसारा तारा नाराधिता भवता ॥"

(किं सरस्वती नोपासिता त्वया यदेवमपशब्दं प्रयुञ्जस इतीममर्थमभिदधति तदीयश्लोके दोषमद्राक्षीद्दोषज्ञोऽस्माकं युवा। एवमभियुक्तः प्रत्यभियोगेनेदमाह ॥)

गणपतिः—"नेह सारशब्दो विशेष्यलिङ्गः सार इति वक्तव्ये सारा तारा इति प्रासायासाधु प्रयुक्तं भवता" इति ब्रुवन्नेवमप्राक्षीत् ॥

"सुधां हसन्ती मधु चाक्षिपन्ती यशो हरन्ती दयिताधरस्य।
न तेऽलमास्यं कविता करोति नोपास्यते किं दयितार्धदेहः ॥"

(स्त्री तारा नोपासिता किमिति मां पृच्छसि, त्वया किं पुमान्नोपासितः ? इति प्रतिप्रश्नः)

अम्बिकादत्तः —
"उच्चैः कुञ्जर मा कार्षीर्बृंहितानि मदोद्धतः।
कुम्भिकुम्भामिषाहारी शेते सम्प्रति केसरी ॥"

गणपतिः —पुनश्च दोषः। न कर्मधारयान्मत्वर्थीयः (कुम्भिकुम्भामिषाहार इति बहुव्रीहिः स्यात्। हारी केसरी इति प्रासायासाधु प्रयुक्तम्)

"समासीनो रसाले चेन्मौनमावह मौकले।
लोकः करोतु सत्कारं मत्वा त्वामपि कोकिलम् ॥"

अम्बिकादत्तः —
"ज्योतिरिङ्गण न किन्नु मन्यसे यत्त्वमेव तिमिरेषु लक्ष्यसे।"

गणपतिः —
"किन्नु दीप भवने विभाससे वायुना बहिरहो विधूयसे ॥"

अत्रान्तरे शितिकण्ठवाचस्पतिरिमं वादमुपसंहर्तुं द्वारमदर्शयत्। परस्परव्यक्तिगतां निन्दामपवर्ज्य, गौड-दाक्षिणात्यावुभावपि परस्परजातिदूषणेनोपसंहरतामिमं घट्टमिति माध्यस्थ्यमकरोत् ॥

अम्बिकादत्तः —
"भट्टोऽखिलोऽट्टोपरि वारवध्वा निपीय मध्वारभते विहारम्।"

प्रत्युत्पन्नमतिर्गणपतिः —
"असुव्ययो वाऽस्तु वसुव्ययो वाऽप्यमी न मीनव्यसनं त्यजन्ति ॥'

अथ परीक्षायाः समाप्तौ रसिकाग्रणीरम्बिकादत्तः परीक्षां तीर्णवन्तं वृद्धो युवानं गणपतिमाश्लिष्यन्नामोदवचनैः सन्तृप्तिं प्राचीकटत्। गणपतिश्च सविनयमवोचत् "वादेऽस्मिन् ममापराधाः क्षन्तव्याः" इति। "सर्वानपराधान्

तव 'मी'द्वयं पर्यमार्क्षीत्" इति सोऽभणत्। (अमी न मीनेत्यत्र मीद्वयम्) *तदानीमेवास्मै 'काव्यकण्ठ' इत्युपहारः पण्डितपरिषदा दत्तः‡ ॥

पञ्चविंशे वर्षे प्रचलति द्रविडदेशमागतः पञ्चषान् वत्सरान् यात्रास्वयापयत्। प्रथमं काञ्चीक्षेत्रं ततोऽरुणाचलं चागमत्। तत्रैकं वत्सरमवात्सीत्। तत्रान्तरेऽरुणाद्रौ वसन्तं "ब्राह्मणस्वामिनं" प्रसङ्गतो द्विरद्राक्षीत्। अरुणाचलात्प्रस्थाय तदुपकण्ठप्रदेशेषु कञ्चित्कालमुवास। ततः परमेवास्य

---

*क्री. श. १९०० सं.

‡नवद्वीपपण्डितैर्दत्तं प्रशंसापत्रम् अस्मदाचार्याणां प्रियशिष्यैः श्रीमद्भिः के. जि. सुब्रह्मण्यशास्त्रिभिः (अप्पु) सुरक्षितं सादरप्रेम्णाऽत्रोपयोगाय प्रदर्शितम्। मूलपत्रस्यायं प्रतिलेखो भवति ॥

॥ **प्रशंसापत्रम्** ॥

। श्रीमद्गणपतिशास्त्रिन् ।

संसारे खल्वस्मिन् कवित्वमित्यसमुद्रसमुत्थममृतम्। सुदुर्लभं च तत् लोकाधिकसौभाग्यवशात् सुप्रसन्नदैवानुकम्पया वा यः कश्चिदिह समधिकुरुते स च भूस्थोऽपि स्वर्गीय इति सस्पृहमालोक्यमानो गुणपक्षपातिभिर्विद्वद्भिर्नितरामाद्रियते ॥

अतो यदद्य श्रीमद्भिरसाधारणकवित्वमिह प्रकटय्य सुधियः सर्वे सन्तोषमापादिताः तेनैव चरितार्था नवद्वीपवासिनः कोविदा वयमशेषगुणैकधाम्ने विशाखपट्टनप्रदेशान्तर्गतकलवराईग्रामवसतये श्रीमद्गणपतिशास्त्रिणे तुभ्यमाशीर्वादपूर्वकमिमं श्लोकमुपहरामः ॥

प्राचीनैस्तैः कविकुलवरैः कालिदासादिभिर्या
लब्धा कीर्तिर्भवदनुगता सैव भूयादिदानीम्।
सद्भिर्दत्तो य इह रुचिरः 'काव्यकण्ठो'पहारः
तेन श्रीमानिह भुवि भवानुज्ज्वलश्चापि भूयात् ॥

१८२३ शकाब्दीयसौरज्येष्ठस्याष्टमदिवसे। **श्रीयुतराजकृष्णतर्कपञ्चाननः।**
उपहारपत्रस्याधस्तात् चतुर्दशानां पण्डितानां नामानि स्वहस्तलिखितानि दृश्यन्ते ॥

जीवितस्यापरः काण्डः। द्रविडदेशक्षेत्राणि गच्छन् तत्र तत्राष्टावधाननैपुणीं बुधजनगोष्ठीष्वभिज्ञसभासु प्रदर्शयामास। राजते स्म नित्यसन्नद्धा सद्गुणालङ्कारा सरसकविता वशंवदा काव्यकण्ठस्य। अस्मिन्नेव काले "अग्निमीळ" इत्यारभ्य "सुसहासती" त्यन्तम् ऋग्वेदं सस्वरमधीत्य सायणीयं भाष्यं च समवलोकितवान्। गूढान् मांत्रवर्णिकभावांस्तपःप्रभावादवबुद्ध्य गहनानि देवतातत्त्वानि च विज्ञाय क्वचिदन्तेवासिभ्यः सहृदयेभ्यश्च न्यरूपयत्। जैमिनीयतर्कवार्त्तिकादिशास्त्रग्रन्थाननन्तरमेव व्यरीरचत्। अस्मिन्नेव समयेऽस्य महानुभावस्य प्रभावो बहुधा व्यजृम्भत। भगवतो रमणस्य महर्षेः करुणाकटाक्षस्यास्पदं चाभूत्। स्वयं च बहुभ्यः शिष्येभ्यो मन्त्रदीक्षामदत्त। मन्त्रमूर्तेरस्योपदेशप्रभावः केषाञ्चिदस्मास्वभूतपूर्वेणानुभवात्मना व्यलासीत्। अद्भुतमासीदिदं यदस्यैव कण्ठस्वरः जप्तर्युपदिष्टे शिष्ये श्रूयमाणो जपभारमवतार्य जपं स्वयं निरवर्तयत्।

अनुचराणामन्येषां वा रसिकानां मध्ये समासीनस्य कथाप्रसङ्गेष्वस्य वक्त्रारविन्दान्मुहुर्मुहुरच्छन्दोबद्धैव गैर्वाणी वाणी वहन्ती सम्मदतरङ्गप्लावितानस्मदादीन् पवित्रान् वीर्यवत्तरांश्च व्यधासीत्। इह स्थालीपुलाकन्यायेन कानिचित्प्रास्ताविकानि पद्यान्युदाहरामः। उपविष्टेष्वस्मास्वेकस्तमप्राक्षीत् "किमपि ध्यायतीव भवान्" इति। सपद्युत्तरमिदमदत्त— "दशां देशस्यतां प्रतिपदमयं ध्यायति जनः" इति तुरीयः पादः प्रथमं निर्गतः। ततः क्षणात् शिखरिणीबद्धमिदं पद्यं पूरयित्वा, हरिण्या द्वे पद्ये गीते। तत्रेदमेकं भवति ॥

"अरिभिरदयैः क्रान्तायै ते मुहुर्मुहुरुद्धतैः
करमविकलं दातु धीरो न कोऽपि विलोक्यते।
क्व तव दयितास्ते ते पूर्वे धरे भरतादयो
यदजितभुजादुर्गस्थायास्तवाम्ब न भीरभूत् ॥" इति ॥

अथ मद्रपुर्यामासीद्विश्रुतो विद्वत्कुलशेखरो वेदं-वेङ्कटरायशास्त्री। सह तेन संल्लापे प्रस्तावनवशात् किमपि पृष्टोऽयं झटित्येवमुत्तरमब्रवीत्—

"स्यतु सर्वज्ञशिरोमणिदीधितिदोषप्रदर्शनेऽपि पटुः।
भवतां शङ्काः शङ्करहरिणदृशो हासनवशास्त्री ॥"

इति ॥ (अत्र सर्वज्ञ-शिरोमणि-दीधितिपदेषु श्लेषः। सर्वज्ञस्य महाविदुषः शिरोमणिभट्टाचार्यस्य दीधित्याख्यनैयायिकग्रन्थेऽपि दोषप्रदर्शने पटुरयं शास्त्री। पक्षे, सर्वज्ञस्य शिवस्य शिरोमणेश्चन्द्रस्य दीधितौ दोषदर्शने पटुर्मन्दहासो देव्याः)

अथैकदाऽष्टावधाने घण्टाशतके प्रणीयमाने, घण्टादशांशेन पद्यानां पञ्चविंशतिमगासीत्। लेखकाश्च लिखितुं नाशक्नुवन्। कीर्तिशेषो महामनाः वि. कृष्णस्वाम्यार्यः तमदृष्टपूर्वं वाग्विक्रममवलोक्य जाताश्चर्योऽस्मदाचार्यं बहुधा बहु मेने। अन्यदा "षेक्स्पियर"-प्रणीतस्य "माक्बेत्"आख्यस्य आङ्गलनाटकस्य कथामनधीताङ्गलगिरोऽस्याख्यायाशुधारया तस्याः संस्कृतपदान्यस्माकमेकेन पृष्टमात्रः, "'डन्कन्' नाम महीपतिः समभवत् स्काट्लाण्डुदेशे पुरा" इत्यारब्धवान् ॥

क्री. श. १९०७ संवत्सरात्प्रागेवाष्टावधानक्रीडां समाप्य तपसि गाढासक्तमभूदस्य चित्तम्। तस्मादस्मत्समागमसमये काव्यालापानवर्जयन्नपि तीव्रे तपसि बद्धदृष्टिरभूत्। प्रसङ्गवशात् अष्टावधानकथा आचक्षाणेऽस्मिन् सकृद्वा द्रष्टव्यमष्टावधानमिति कुतूहलं क्षणं मामाविष्टम्। तद्विदित्वा शिष्यवत्सलेऽस्मदाचार्यं "एषोऽहं प्रदर्शयामि कांश्चनांशान्" इति ब्रुवत्येव कश्चन विदितपूर्वः संस्कृताभिज्ञ आन्ध्रविद्वानागतः। कुशलप्रश्नात्परं "कवितामधिकृत्य भवदभिप्रायो वसन्ततिलकया वक्तव्य" इत्यभ्यर्थितवान्। लेखफलके षट्पञ्चाशत्स्थानात्मकं कोष्ठं विलिख्य यथानिर्दिष्टं स्थानेष्वक्षरविन्यासायाचार्यहस्ते फलकं न्यधात्। स्वयं स्थानानि निर्दिष्टवान्। पौर्वापर्यव्यतिक्रमेण निर्दिश्यमानेषु स्थानेषु एकैकमक्षरं यथास्थानं न्यास्थदाचार्यः। एकत्रैव क्षणं विरम्याक्षरं न्यस्तम्। तच्च "नूत्न" इति स्थले। तत्रैव कवितामुद्दिश्य स्वं मुख्यमभिप्रायमाविरकार्षीत्। तदिदं पद्यं भवति ॥

"प्रीतिं ददाति विपुलां श्रियमातनोति
निर्माति नूत्नसमयं दुरितं धुनोति।
आर्द्रीकरोति हृदयान्यपि देवतानां
कस्मै शुभाय न भवेत्कविता विदोषा ॥"

"काव्यं यशसेऽर्थकृत" इत्यादि काव्यस्य प्रयोजनमाहुः। तस्य नूतनसमयनिर्मातृत्वं च भवतीत्ययं कवेर्मुख्योऽभिप्रायः प्रायेणाधुनिकानामत्यन्तमभिमतो



भगवान् श्रीरमणमहर्षिः

भवति। "राजा कालस्य कारणम्" इत्याहुः। "कविः कालस्य कारणम्" इति च बहुदेशचरित्रशोधनैरुपपादनक्षममित्याचार्यस्याशयः॥

अवधानप्रणयनेषु कविसार्वभौमेऽस्मिन् तत्र तत्र सभासु पद्यानि ब्रुवति, लेखकैर्लिखितेषु पद्येषु इदानी द्वे खण्डकाव्ये एकं घण्टाशतकं च लभ्यान्यवशिष्टानि सुरक्षितानि भवन्ति। अत्र* तत्त्वघण्टाशतकस्थमुपसंहारश्लोकमुदाहृत्य कविवैभवघट्टमुपसंहरामः। स एष श्लोको भवति॥

वेदान्तसशास्त्रशतकान्त्सकलान्विचार्य
प्राचामृगागमदृशां मतमाददानः।
क्षेत्रे फणीश्वरकलाजनितस्य पुंसो
घण्टाशतं गणपतिः कविराडकार्षीत्॥

## ॥ अथ महर्षेर्दर्शनम्—उपदेशलाभः ॥

क्री. श. १९०७ संवत्सरे, अरुणाचलक्षेत्रे तपश्चरत्याचार्ये संशयार्तमिव मुहूर्तमात्रमस्य चलितं चित्तम्। "अकरवं बाल्यादारभ्य शतलक्षजपेन पञ्चाक्षरपुरश्चर्याम्। जप्ताः श्रीविद्याद्याश्च मन्त्राः। एकवाराशनोपवासादिकृच्छ्रव्रतैरपि नाद्यापि भगवान् प्रसन्नोऽभूत्। शास्त्राणि न मृषा भवन्ति। कोऽपि स्यान्मम साधनविधाने लोपः। किं करवाणि? अथवा निगमागमशास्त्रपुराणेतिहासान् सम्यग्विचारितवतः श्रद्धावतोऽपि मम तपःस्वरूपमेव न विदितं भवेत्" इति अस्य ध्यायत एव, ज्वलिता काचन धीरिममाविवेश। "इह गिरौ गुहायां स वसति ब्राह्मणस्वामी। बहोः कालान्मौनमवलम्ब्य तपसि तिष्ठति। तपसः स्वरूपं तस्य विदितमेव भवेत्। भवतु, अधुनैव त दृष्टवा प्रक्ष्यामि" इति सद्य एव जपस्थलं विहायोत्थितः। स सोमवासरः कार्त्तिकशुक्लचतुर्दशीदिवसः (क्री. श. १८. ११. १९०७), नभोमणेर्नभोमध्यात्पश्चिमाभिमुखं चलितस्य गतं घटिकाद्वयम्। अनेन गिरिमारुह्य बहिर्गुहायाः समुपविष्टो दृष्टो ब्राह्मणस्वामी। अरुणाचलक्षेत्रे ते कृत्तिकोत्सवदिवसाः।

---

*पश्चिमाब्धितीरे "वडभाण्डेश्वरा" ख्ये बलरामक्षेत्रे तत्त्वघण्टाशतकं प्रणीतम्॥

तेषु ब्राह्मणस्वामिनो वासस्थलमपि जनसङ्कुलं भवेत्। तस्मिन् दिवसे तु विजनमासीत्। दैवमनुकूलमिति धैर्यमवलम्ब्योत्साहवान्विनयेन स्वामिनं तमुपासर्पत्। निकटं गत्वा दृष्टमात्रस्य तस्य मौनीन्द्रस्य दक्षिणं चरणं दक्षिणेन हस्तेन, वामं वामेन चोभावप्युपसङ्गृह्य साष्टाङ्गं प्रणिपत्योत्थाय व्यजिज्ञपत्—"अधीतानि शास्त्राणि। बहुशस्तपश्चरितम्। जप्ताश्च मन्त्राः तपसः स्वरूपं त्वजानन्तमिवात्मानं पश्यामि। भवानिह तपसि स्थितो वेदेति श्रद्दधे। अनुगृह्यतामयं जन" इति॥

तदा स मुनिपुङ्गव इमं प्रत्यभिजज्ञे आन्ध्रोऽयं विद्वान् काव्यकण्ठगणपति-शास्त्रीति। यतोऽत्र द्वित्रेभ्यः संवत्सरेभ्यः पूर्वम् उषितो मौनस्वामिनमेनं द्विरदर्शत् किलास्मदाचार्यः। तदानीमेकदा *शुक्लाम्बरधरमिति श्लोकस्य ब्राह्मणस्वामिपरतया तत्सन्निधावेवानेन व्याख्यानमस्मार्षीत् गुहावासी। तदानी हरसहस्रं नाम स्तोत्रं विरच्यारुणाचलेश्वरसन्निधौ गीतवतोऽस्य मधुरविचित्रो वाणीविलासस्तत्क्षेत्रवासिनां विदितचरोऽभूत्। आबालवृद्धं कीर्तितकाव्यवैभवमेनं क्षणादभिज्ञाय, बहोः कालादन्तरिव बहिश्च मौनी स्वामी कञ्चित् कालं करुणार्द्रदृशा सिञ्चन्नेवेममद्राक्षीत्। तत उभयोरपि जीवितयोर्नूतनं काण्डं सम्प्रवर्तयन्ती मौनिसार्वभौमस्य हृदयादुपदेशभारती काव्यकण्ठाय मुक्तकण्ठकवाटा द्राविड्या निस्ससार। अयमस्याः संस्कृतानुवादो भवति— "अहमहमिति कुत आयातीति विचारयन्नुदयस्थले लीयते, तदेव तपः। जप्यमानस्य मन्त्रस्य ध्वनिः कुत उदेतीति विचारिते, उदयस्थले मनो लीनं भवेत्। तदेव तपः।" इति। इमं च गुरूपदेशं "अहमिति स्मृतिः क्व नु विभासते। इदमनुस्मरन्त्सपदि लीयते॥" इत्यनेन गीतेन अनन्तरं निबद्धवान् कविः। गृहीत्वेममुपदेशं तृप्तोऽयमानन्दमग्नः कतिपयघटिकास्तत्र ब्राह्मणस्वामिनोऽधुना मुक्तबाह्यमौनस्य स्वगुरोः प्रत्यग्रलब्धयोः पादारविन्दयोः सन्निधाने ध्यानमास्थायोदस्थात्तपोधनोऽयमस्मदाचार्यः। प्रस्थानसमये पार्श्ववर्तिनं कञ्चन

---

* अयं च प्रसिद्धो गणेशश्लोकः॥ ब्राह्मणस्वामी च शुक्लाम्बरधरः शुभ्रकौपीनधरः। अखण्डस्वरूपावस्थितो व्यापनशीलो विष्णुः। शशीव रोचमानोऽस्य देहवर्णः। मनश्चित्तं बुद्धिरहंकार इत्यन्तःकरणचतुष्टयं भुङ्क्ते तस्मात् चतुर्भुक्॥ उत्तरार्धे न विशेषः॥

पुरुषममुष्य नामधेयमप्राक्षीत्। तस्मादुत्तरं वचः पूर्वाश्रमे वेङ्कटरामार्य इत्याकर्ण्य 'रमण' इति सङ्क्षेपरमणीयं नाम चकार। महानयं परतत्त्वस्य द्रष्टेति हेतोर्महर्षिरिति निजेष्वनुयायिवर्गेष्वख्यापयत्। तदारभ्य रमणो महर्षिरिति प्रसिद्धिः प्रसरन्ती जयति ॥

ततो देव्याः प्रसादादेवायं सिद्धो गुरुर्लब्ध इति कृतज्ञो भक्तिपरवशतयोमां देवीमधिकृत्य पद्यानां सहस्रेण 'उमासहस्रं' नाम स्तोत्रकाव्यमरीरचत्। तच्च विंशत्या दिवसानां समाप्तिं नेतव्यमिति धृतव्रतेन समारब्धम्। दिने दिने चलदेवाभूद्रचनम्। विंशे तु दिवसे शतद्वयाधिकानि पद्यानि रचयितव्यान्यवशिष्टान्यभूवन्। गिरेरङ्के बहिराम्रगुहायाः स्वगुरोर्महर्षेः सन्निधावुपविष्टस्तत्कालनिबद्धान् द्विशताधिकश्लोकांल्लेखकैः चतुर्भिः शिष्यैरलेखयत्। रात्रेर्द्वितीये मुहूर्ते प्रारभ्यार्धरात्रे समाप्तवान्। विजृम्भिताऽस्याऽऽशुधारा सारस्वतप्रभावस्य। तावन्तं कालं निमीलितनेत्र उपविष्ट एवासीद् भगवान् महर्षिः। ग्रन्थे सम्पूर्णे त्विदमुन्मीलितलोचनः प्राह "किं मयोक्तं सर्वं लिखितम्" इति। आचार्यस्येतरेषां चायमाश्चर्यमजीजनन्महर्षेः प्रश्नः। भगवान् महर्षिः करुणामूर्तिरगाधान्तर्ध्यानात् सद्यो निर्गतः बाह्यस्य भुवनस्य अन्तरस्य च विशेषमपश्यन्नेवं पृच्छति। अस्यानुग्रहविशेषादेव प्रेरितो दिव्यावेश एव निदानमर्धरात्रान्तरेव ग्रन्थसमापनस्येति प्रश्नस्य भावमवबुद्ध्य "अथ किम्। सर्वमनुगृहीतं गृहीत्वा ग्रन्थमिदानी समाप्तवानस्मी" ति गुरोः प्रश्नस्योत्तरमवोचदन्तेवासी। अत एव प्रथमं प्लवङ्गसंवत्सरे निबद्धस्योमासहस्रस्यान्ते लिखितेषु श्लोकेष्वयं दृश्यते—

"यदस्य महतः काले पारं यातोऽस्मि कर्मणः।
अनुग्रहोऽयमाचार्यरमणस्य महात्मनः॥"

इति। तत्रैव रचनकालोऽपि दत्तो द्वाभ्याम्।

"प्लवङ्गे कार्त्तिके कृष्णे षष्ठ्यां मङ्गलवासरे।
स्तोत्रमेतत्समारब्धं तटे शोणधराभृतः॥
एकादश्यां शुक्लपक्षे मार्गशीर्षे रवेर्दिने।
नीतं समाप्तिं विंशत्या दिनानां व्रतिना मया॥"

इति। इमं पावनं ग्रन्थं कालान्तरेषु तपसोऽङ्गतया सप्तवारं संस्कृतवान्कविकुलेश्वरः। ग्रन्थमधिकृत्यान्यत्र विचार्यते। प्रकृतमनुसरामः॥

अथैकदाऽस्मिन्नेव काले रात्रौ भगवतो महर्षेः सन्निधौ स्वशिष्यैः सहाचार्ये समुपविष्टे, स्तोत्राणि गायति, श्रीमहर्षेर्मस्तकादूर्ध्वं नभस्तः किमपि ज्योतिर्नक्षत्राकृति षट्कृत्वस्तस्मिन्नवतीर्णमदृश्यत। अनेनासाधारणदर्शनेन भगवान्रमणः साक्षात्कार्त्तिकेयस्यांशतो भुवि सञ्जात इत्यस्मदाचार्यस्य प्रत्यभासीत्। ततः परमेव "यानायात्र न केकिनां कुलपति"रिति श्लोकाष्टकेन स्वगुरुं रमणमस्तौषीत्। ततः क्षेत्रान्तराणि जिगमिषुररुणाचलात् प्रस्थानसमये महर्षिं गुरुमिदं किलापृच्छत् "किमलम् अहंमूलान्वेषणमिष्टार्थसिद्धये, उत मन्त्रध्यानमवश्यम्?" इति। 'आद्यमेव पर्याप्त'मिति प्रतिवचो गृहीत्वा प्रतस्थे॥

दक्षिणदेशे कन्याकुमारीक्षेत्रावधि बहूनि तीर्थानि गत्वा तत्र तत्र मूर्तीरस्तौषीत्। पश्चिमाब्धितीरे गोकर्णे कञ्चित्कालमुवास। दीर्घकालवासक्षेत्रेषु विश्रुतम् उत्कलेषु भुवनेश्वरक्षेत्रं प्रथमं गणनीयम्। अत्र हि बाल्ये मन्त्रसाधनेन भुवनेश्वरीं किलाराधितवान्। अत्र ह्येव स्वप्ने काचन स्त्री जिह्वायामस्य मधु निक्षिप्यान्तर्धानमगात्। अनन्तरमेव कविता वशिताऽभूदित्याचार्यमुखादस्माभिः श्रुतम्। आन्ध्रोत्कलमध्ये मध्ये वयसि महेन्द्रपर्वते च तपस्तप्तम्। गोकर्णप्रान्तेषु चिरमवात्सीत्। द्रविडेषु आदाविवान्तेऽप्यरुणाचलस्थलमेव चिरकालवासभूरभूदस्य। अत्र हि स्वगुरोर्महर्षेरावासः। अत्र ह्येव पुनः पुनर्गुरुसन्निधिमागत्योषितः। अत्रैव महत्यो योगानुभूतयः समपद्यन्त। अत्रैवाम्रगुहायां तपसि स्थितस्य महानुभावस्य शिरोग्रन्थिभेदेन शीर्षकपाले भिन्ने। अस्मात् कपालभेदादेव "व्यपोह्य शीर्षकपाले भूरित्यग्नौ प्रतितिष्ठति" इति श्रुतेर्गहनो भावः तन्मुखादेवास्माभिरवबुद्धः॥

अथास्यायुषोऽपरार्धं प्रायेण ऋग्वेदार्थविचारादिना सम्पूरितम्। मन्त्रार्थविचारे विलक्षणो भवत्यनेन दर्शितः पन्थाः। सर्ववेदभाष्यकृतं सायणमाचार्यं बहुमन्यमानोऽपि तद्भाष्यसाहाय्येनैव बहुषु स्थलेषु संहितासु मन्त्रार्थान् अन्यथा व्याख्यासीत्। मान्त्रवर्णिकानां गहनार्थबोधनाय ऋग्भाष्योपोद्धातं न्यबध्नात्। वेदमन्त्रेषु मन्त्रद्रष्टृषु चाद्वितीयाऽस्य भक्तिः। वेदेषु क्वचिद् गुप्तान् अस्त्रमन्त्रान् दृष्ट्वा, 'अलौकिकोपायप्रदर्शका मन्त्रा' इति शिष्येषु वैदिकीं भक्तिं श्रद्धां च प्रत्यतिष्ठिपत्। वेदानधिकृत्य आचार्याशयस्येदं वशिष्ट्यं द्रष्टव्यम्॥

ब्राह्मणानाम् उपनिषदां च मूलं मन्त्रसंहिता इत्याचार्यस्य सिद्धान्तः। उपनिषदां विधिशेषत्वं यथाऽस्य नाभिमतम्, तथा मन्त्राणा कर्माङ्गत्वनियमोऽपि नाभिमतः। मन्त्रमूलादेव द्वे शाखे भवतः। तत्रैका कर्मकाण्डात्मिका अपरा ज्ञानकाण्डात्मिका चेति। कर्मसु विनियुक्ता बहवो मन्त्रा अध्यात्मपरतया व्याख्येयाः। सर्वेषां मन्त्राणां कर्मपरतया व्याख्यानमसमञ्जसमित्येवमादयो भावाः स्वप्रणीतेषु ग्रन्थेषूपपाद्यन्ते ॥

आचार्यः पूर्वोत्तरमीमांसयोर्विमर्शं कृत्वा ग्रन्थान् न्यबध्नात्। ज्योतिषायुर्वेदतन्त्रशास्त्रीयग्रन्थाश्च प्रणीताः। भाववैशिष्ट्यं तु सर्वत्र प्रणीतेषु स्फुटं दृश्यते। भारतचरित्रविमर्शने विक्रान्तोऽसौ भारतसङ्ग्रहं नाम विमर्शग्रन्थम् अत्यन्तसरलया रीत्या व्यरीरचत्। चरित्रकथावस्तु निर्माय "पूर्णा" इति कथां नवीनकथाशैल्या सर्वगुणशोभितया भाषया हृदयङ्गमया निबद्धवान्। अत्र नवीना संस्कृतवचनशैली दीर्घसमासजटिलवाक्यविवर्जिता आधुनिकानामामोदमादधीत। अथोमाशतकं, शिवशतकं, इन्द्राणीसप्तशती, प्रचण्डचण्डीत्रिशती, अग्निवाय्वादिगीतमालेत्यादिपरस्सहस्राणि पद्यानि स्तोत्रगिरां सन्दर्भस्याभिनवानि प्रतिमानानि व्यतानीत् ॥

अथ संस्कृतवाङ्मयेऽस्यात्यन्तप्रियपूज्यौ द्वौ कोशौ। तत्रैको ब्रह्मकोशः ऋग्वेदसंहिता, अन्यस्तु वेदादिशास्त्ररहस्यकोशो महाभारतसंहिता। महाभाष्यं वा पठनीयं राज्यं वा शासनीयमित्यभियुक्तानां प्रशस्तिरस्य सुतरामभिमता। त्रीणि भाष्याणि रचनरीत्यपेक्षया प्रियतमान्यस्य। तत्रापि पातञ्जलं महाभाष्यम् अग्रं स्थानमवहदस्य हृदये। शाबरं भाष्यं द्वितीयं, शारीरकभाष्यं भगवत्पादानां तृतीयम् ॥

सङ्घोद्धारो देशक्षेमं सर्वसमयसामरस्यं मान्त्रवर्णिकदेवतातत्त्वप्रकाशनमित्येतेष्वाचार्यस्यासीज्जीवितसहचरी ज्वलन्ती महती काङ्क्षा। तदर्थाः स्तुतयश्शतशो दृश्यन्ते तदीयग्रन्थेषु। बहोः कालात्पूर्वम् एवमगासीत्—

"आनने त्वदीयनाम पावनाच्च पावनं यस्य पुण्यपूरुषस्य पूरुषार्थविग्रहे।
सैरिभासुरेन्द्रहन्त्रि सम्मदाय भूयसे बन्धनालयोऽपि तस्य नन्दनं वनं यथा ॥"

इति। महती काचन दैवी विभूतिर्मानुषीं तनुमाश्रित्य भूमौ कञ्चित्कालं विलसितेत्यसंशयम्। अथवा वैष्णवसमयजयस्तम्भो निगमान्तदेशिकः

आत्मानं [1]हरेर्घण्टाया अवतारमाह। तथा बुधैरुपपत्तिभूम्नोत्प्रेक्ष्यत इति चमत्कारेण स्वं भावमाविश्चकार। आनन्दतीर्थ आचार्यस्तु आत्मानं वायोस्तृतीयं रूपमाह[2]। गणपतिराचार्यः गणाधिपतेरंशतो जात इति स्वयमेवोमासहस्रेऽन्यत्र च ब्रूते। अतिमानुषवाग्वीर्यसमृद्धस्तपोधनो बहुलविद्याविलासी भगवान् वासिष्ठो गणपतिमुनिराचार्यः स्वीयभूविलासलाञ्छनानि सजीवानि स्वीये भक्तवृन्दे गद्यपद्यात्मके वाङ्मये च निधाय [3]स्वस्थानमुत्क्रान्तो विजयते। अन्ते चास्य महनीयं भावमुच्चैर्दधता जयवादेनोमासहस्रपद्येनोपसंहरामः॥

जयतु भरतक्षोणीखण्डं विषादविवर्जितं
जयतु गणपस्तस्य क्षेमं विधातुमना मुनिः।
जयतु रमणस्तस्याचार्यो महर्षिकुलाचलो
जयतु च तयोर्माता पूता महेशविलासिनी॥

(उमासहस्रे स्त. ३४ श्लो. २४)

## ॥ उमासहस्रम् ॥

महदिदं स्तोत्रकाव्यम्। उमां देवीमधिकृत्य दशभिः पद्यशतकैर्निबद्धम्। नैष्ठिको महाकविस्तपसोऽङ्गतया स्तोत्रैरगासीद् भगवतीं सर्वेश्वरीम्। अतो मन्त्रप्रायाणि भवन्त्येतानि पद्यानि। एषां केषाञ्चिद्वीर्यवत्तरत्वं दृष्टफलक-

---

[1]वित्रासिनी विबुधवैरिवरूथिनीनां
पद्मासनेन परिचारविधौ प्रयुक्ता।
उत्प्रेक्ष्यते बुधजनैरुपपत्तिभूम्ना
घण्टा हरेः समजनिष्ट यदात्मनेति॥ (सङ्कल्पसूर्योदयम्)

[2]महाभारततात्पर्यनिर्णये (अ. ३१ श्लो. ८१)
"यस्य त्रीण्युदितानी"त्यारभ्य "मध्वो यस्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे" इति॥

[3]२५-७-१९३६ धातृसंवत्सर-श्रावणशुद्धसप्तमी।

तया प्रस्फुटं भवति भक्तानाम्। सहजनिष्ठस्य सद्गुरोः सन्निधौ तपस्तपता कविना निर्मितोऽयं पावनः पारायणग्रन्थो भवति भक्तानां श्रद्धालूनाम्। अत एव प्रथमं ग्रन्थे समाप्तिं नीते सिद्धगिरा कवीश्वरेणैवमुक्तम्—

"यदि गायन्निमं ग्रन्थमुत्तरेदापदः कृती।
महिमा स महेश्वर्याः शीर्षं स्यादुन्नतं न मे॥
अयमम्बापदप्रीतेरुद्गारो वाङ्मयाकृतिः।
अर्थः कश्चिदनेनापि सतां यदि मया जितम्॥"

पञ्चविंशतिपद्यात्मकानां स्तबकानां चत्वारिंशता निबद्धेयं स्तोत्रसाहस्री। एकवृत्तनिबद्ध एकैकोऽपि स्तबकः। अत्र सर्गप्रकारः, सर्वेश्वर्याः परमार्थ-स्वरूपं, वैदिक-तान्त्रिकदेवतानां स्वरूपाणि, देवतानुग्रहोपायः, देव्याः प्रसादाद्योगानुभूतयः, दशमहाविद्यानां तत्त्वं, तासामुपास्तिविधिफलानि, औपनिषद-विद्यासाधनानि—इत्यादीनि गहनानि तपसा शास्त्रचर्चया अनुभूत्या चान्तः प्रविश्य लब्ध्वा रसोत्तरकवितया स्फुटानि सम्पादितानि जेजीयन्ते। अनेन "कान्तासम्मिततयोपदेशयुजे" इत्यालङ्कारिकानामभिमततमं प्रधानं काव्यप्रयोजनं रिरंसोः कान्तस्य कान्तेव रहस्योपदेशात्सहृदयस्य रतिं कुर्वाणा साध्नोति कवेर्भारती॥

अथास्य ग्रन्थस्य विषयान् कविगीतैः श्लोकैर्ब्रूमः॥
"दर्शितं रमणस्यर्षेर्यावद्वाक्यैर्मिताक्षरैः।
यावच्च पितृपादानां विज्ञातमुपदेशतः॥१॥
तन्त्रेभ्योऽवगतं यावत्प्राचामाचारशासिनाम्।
यावत्परमपुण्यासु कुलगोष्ठीषु च श्रुतम्॥२॥
विदितं विविधं यावदितिहासविलोकनात्।
यावदप्यात्मना दृष्टं तपता विपुलं तपः॥३॥
अधिकृत्य महामायां भुवनानामधीश्वरीम्।
अत्र स्तोत्रे प्रसङ्गेषु समस्तं तत्प्रदर्शितम्॥४॥"

यद्यपि वेदवेदान्तयोगतन्त्रादिरहस्यानि भेषजानि मधुरानुपानेनेवानेन स्तोत्रसाहित्येन रोचयन् साधुलोकं वीतशोकं विदधानो रमयति रमणशिष्यः, तथापि न शास्त्रीया एव विषयाः कवितया समाख्याताः। सर्वेश्वर्या अनु-

ग्रहार्थलीलाचारित्रकीर्तनैः काव्यशोभापोषकैः व्युत्पित्सूनां साहित्यसरणौ बोधाय व्युत्पन्नानां प्रमोदाय च प्रभुरयं रसोज्ज्वलसाहित्यसन्दर्भः। तथा चात्रोमादेव्याः पर्वतराजपुत्र्याः सम्भवबाल्यपरिणयशृङ्गारकथाः श्रूयन्ते। मन्दस्मितकरुणाकटाक्षनामवैभवानि रसावहाभिर्वाग्भिर्वर्णितानि भवन्ति। ओजःप्रसादमाधुर्यैरर्थतः शब्दतश्च समन्ततो व्याप्तान्येतानि पद्यान्यास्वाद्यतमानि सहृदयाः स्वयमुपादायास्वाद्यानुभवेयुः॥

"अत्रापि गुणलेशाश्चेदालङ्कारिकसम्मताः।
स प्रतापः सरस्वत्या निर्गच्छन्त्या अनर्गलम्॥"

इति गीतं कविना। ग्रन्थमवलोकमानानां निर्मत्सराणामेतत्सत्यं स्फुरेदित्यसंशयम्॥

बहुषु स्तबकेषु प्रवहन् काव्यरसो रसिकानाप्लावयन् विलसतीत्यत्र दिङ्मात्रं प्रदर्शयामः। पार्वतीपरमेश्वरयोः शृङ्गारघट्टो द्वादशे स्तबके वर्णितः। अयं च कुमारसम्भवाष्टमसर्गं स्मारयति। उभयत्र शृङ्गारो विषयो रथोद्धता च वृत्तम्। किंतु जगद्गुर्वोः सम्भोगवर्णनेऽनौचित्यं पश्यन् परिहरति चमत्कारेण कविचक्रवर्ती॥

"ब्रह्मचर्यनियमादचञ्चला नायिका यदि लुलायमर्दिनी।
नायकश्च सुमबाणसूदनो वेद को रतिरहस्यमेतयोः॥"

(स्त. १२ श्लो. २०)

सेयं फक्किका जगत्पितृसम्भोगो वर्णनविषयतां न गच्छतीति समर्थयति। अर्धाङ्गस्तबकस्यादिमं पद्यं पश्यामः॥

"इतः पीत्वा कुचं स्कन्दे प्रसारितकरे ततः।
जयति स्मितमुद्भूतं शिवयोरेकदेहयोः॥" (स्त. २१ श्लो. १)

प्रशस्तेऽस्मिन्निबन्धे एकैकमपि पद्यमुदाहार्यं पाठ्यमास्वाद्यं च दृश्यते। तत्किं वा ग्राह्यं किं च त्याज्यम्? तदिदमभिनवं माननीयं निदर्शनं स्तोत्रसाहित्यस्य, अमूल्यफलं विविदिषूणां, अनल्पबलं भजकलोकस्य, सहृदयानां साधूनां हृदयान्यावर्जयन्मुदावहं विदामिदमुमासहस्रं विजयतेतरां विजयतेतराम्॥

# ॥ उमासहस्रप्रभा-व्याख्या ॥

ऽयं रसोज्ज्वलः संस्कृतसाहितीशेखरायमाण उमासहस्रनामा पावन-
यस्येयं प्रभाख्या व्याख्या विरच्यते। अत्रैते श्लोका भवन्ति ॥

उमासहस्रसाहित्यं सौरं मण्डलमुज्ज्वलम् ॥
स्वतःसिद्धा प्रभा तस्य कस्तां दीपेन दर्शयेत् ॥१॥

अथवा भास्करार्चायां दीपोऽङ्गं मुख्यमिष्यते ॥
उमासहस्रमप्येवं प्रभयाऽऽराध्यते मया ॥२॥

इयमाचार्यपादानां शिष्यसङ्क्रान्ततेजसाम् ॥
प्रभा भवति सद्व्याख्या गुरुभावप्रदर्शिनी ॥३॥

गङ्गायास्तीर्थमादाय तस्यां तस्यै जलाञ्जलिः ॥
दत्तमर्घ्यं प्रशस्तं चेन्न प्रशस्ता कथं न्वियम् ॥४॥

रसिकानां प्रमोदाय व्युत्पित्सूनां च बुद्धये ॥
आराधनाय साधूनामेषा भाषा भवेद्यदि ॥५॥

आचार्यवाग्विलासस्य विवृत्या कृत्यकारिणः ॥
मम भूयो भवेद् भाग्यं द्विरुक्ता चरितार्थता ॥६॥

इहान्वयमुखेनैव क्वचिदाकाङ्क्षया पुनः ॥
रचिता नातिसङ्क्षिप्ता रुचिरा न च विस्तृता ॥७॥

व्याख्या प्रभाख्या शिष्येण वासिष्ठस्य महात्मनः ॥
भारद्वाजेन सद्विद्यां बिभ्राणेन कपालिना ॥८॥

# उमासहस्रम्

[ प्रभाख्यया व्याख्यया समेतम् ]

## प्रथमः स्तबकः

**अखिलजगन्मातोमा तमसा तापेन चाकुलानस्मान् ॥**
**अनुगृह्णात्वनुकम्पा- सुधार्द्रया हसितचन्द्रिकया ॥१॥**

अथोमासहस्रस्यायमादिमः श्लोको भवति। अखिलेति— उमाऽस्माननुगृह्णात्विति विशदं वाक्यम्। तमसा अज्ञानेन तापेन आध्यात्मिकादित्रिविधदुःखानुभवेन च आकुलानभिभूतानविद्यातिरस्कृतान् तापत्रयार्तानस्माननुगृह्णात्विति शेषः। अनुग्रहसाधनीभूतम उमाहसितम् चन्द्रिकात्वेनारोपितम् अनुकम्पासुधार्द्रयेति विशिनष्टि। अनुकम्पा दयैव सुधा तया आर्द्रया अत एव शीतलया, हसितचन्द्रिकया हसितमेव चन्द्रिका तया। यथा सुधार्द्रा चन्द्रिका तथा दयार्द्रं हसितमित्यर्थः। चन्द्रिकया तमो ध्वान्तं नश्यति, तापश्च घर्मः शान्तो भवति। हसितप्रकाशेन अज्ञानहानिर्दुःखनिवृत्तिश्च। एवं तमस्तापहरत्वं हसितचन्द्रिकयोः समानो धर्मः श्लेषानुगृहीतः। प्राधान्येनानयोः साधर्म्यं तु आह्लादकत्वं, तच्च गूढं व्यङ्ग्यम्। चन्द्रिकापक्षे अमृतकिरणशीतलसुखस्पर्शतया व्यञ्जितं, हसितपक्षे दयारूपामृतमयत्वेन। तापार्तेरमृतं हि भेषजम्। चिदावरकं तमो जाड्यलक्षणम्, आनन्दप्रतिबन्धकश्च तापः। अनयोरुभयोरुमाहसितानुग्रहान्निवृत्तिरिष्यते। सा च हसितस्य प्रकाशरूपचिन्मयत्वेन अमृतमयानन्दगर्भितत्वेन च निर्वा-

ह्येति व्यज्यते। चिदानन्दस्वरूपमुमाहसितं ज्ञानप्रकाशस्पर्शेनास्माकं जाड्यम् अमृतानन्दप्रवेशेन दुःखं च ध्वंसयत्विति तात्पर्यम् ॥

अनुगृह्णातु, अनुग्रहश्च अनुसृत्य ग्रहणम्। उमायाः अस्माकं च अन्तरं यथा न स्यात्तथा अविच्छिन्नधारया हसितधोरणी करोतु व्यापारमित्यर्थः। हसितचन्द्रिकया उमामुखचन्द्र आक्षिप्यते। स च नित्यपूर्णकलः, न चेत् सर्वत्र व्याप्य अस्माननुगम्य कथं गृह्णीयात्?

अस्मान् अस्मदादीन् भूजुषः सर्वानित्यर्थः, नेदं प्रायिकाभिप्रायम्। विरलानां निर्धूततमस्तापानां सिद्धानामपि सिद्धत्वम् उमाहसितानुग्रहबलादेवेति बोध्यम्। अखिलजगन्मातृत्वम् उमाविशेषणम् अनुग्रहक्रियाप्रकर्षकम्।

स्तावकलोकप्रतिनिधेः कविसार्वभौमस्य ग्रन्थस्यादौ उमाहसितनिर्वहणीयलोकानुग्रहाशासनं कवेर्दृष्टिवैशाल्यं महासत्त्वतां च द्योतयति। कविगतपरदेवताविषयकरतिभावध्वनिश्चायम्। श्लेषोज्जीवितं रूपकमलङ्कारः तेनानुप्राणितं वस्तु। आर्यावृत्तम् ॥१॥

**निखिलेषु प्रवहन्तीं निरुपाधिविमर्शयोगदृश्योर्मिम् ॥**
**अजरामजाममेयां कामपि वन्दे महाशक्तिम् ॥२॥**

प्रथमश्लोकेन सामुदायिकमाङ्गल्यमाशासितम्। उमायाः अखिलजगत्प्रसूत्वेन स्वरूपबृहत्त्वम् अनुमेयतया ज्ञापितम्। इह तु द्वितीये वन्द्यमानाम् उमां महाशक्तिस्वरूपिणीं विशिनष्टि ॥

निखिलेष्विति—निखिलेषु सर्वेषु वस्तुषु इह अमुत्र वा प्रवहन्तीम् अविच्छेदेन स्रवन्तीं, यथा तरङ्गिणीतोयप्लावनेन क्षेत्राणि नदीमातृकाणि फलितानि भवन्ति, तथा सृष्टौ सकलानि वस्तूनि महाशक्तिमातृकाणि भवन्ति, सर्वेषां वस्तूनां जीवनाधारत्वेन क्षरन्तीं महाशक्तिं वन्दे इति शेषः ॥

निरुपाधिविमर्शयोगदृश्योर्मिं निर्गत उपाधिरवच्छेदः देशकालादिः यस्मात्स विमर्शः आलोचनरूपः स एव योगो युक्तावस्थाविशेषः तस्मिन् दृश्याः सूक्ष्मदृग्गोचराः ऊर्मयस्तरङ्गाः यस्यास्तां, देशकालाद्यनवच्छिन्नाखण्डस्वरूपपर्यालोचनात्मको यो निर्विषयध्यानयोगः ध्यातृध्यानयोर्निरन्तरधारात्वेन युक्तत्वविशिष्टः तस्मिन् योगे महाशक्त्याः सर्वत्र निरन्तरं क्षरन्त्या अपि अप्रत्यक्षायास्तरङ्गाः प्रत्यक्षा भवन्तीत्यर्थः। ऊर्मीणामेव योगचक्षुर्लभ्यत्वं न तूर्मिमत्याः पूर्णाया महाशक्तेः। ऊर्मयश्च भङ्गाः प्रवाहरूपिण्या

महाशक्तेः चलनात्मकाल्पांशद्योतकाः। निर्विषयध्याने उन्मीलितचक्षुषः शक्तिभङ्गानां गोचरीकृतत्वात्, सत्यदृष्टौ महाशक्तेः सद्भावः प्रतिपाद्यत्वेन गम्यः। अनेन परमार्थदृष्टौ शक्तेरसद्भावं प्रतिपादयतामेकेषां मतं कवेर्नाभिमतमिति सिद्धम्। आह चान्यत्र 'न तेऽस्ति भावता न शक्तिरूपिणी हि विद्यसे' इति॥

अजराम् अविकार्यत्वप्रतिपादनपरमिदं विशेषणं सततपरिचलत्प्रवाहरूपिण्याः शक्तेर्व्ययशङ्का मा भूदिति च, अक्षय्यामित्यर्थः। अजां कालत्रयसद्भावतया जन्मराहित्यं कथितं, नित्यामित्यर्थः। अमेयां मातु न शक्याम् 'इयद् बहुलगोलं जगल्लघु दधाना' इत्यन्यत्रापि स्तूयमानाया महाशक्तेरियत्तापरिच्छेदो नास्तीत्यर्थः। अत एव निरुपाधीति विशेषणेन महाशक्तेः केषाञ्चिदंशविशेषाणामेव दृश्यत्वमुक्तम्, न तु महाशक्तिः साकल्येनावगन्तुं शक्येति। कामपि अनिर्वाच्यां निखिलवस्तुजीवनाधारत्वेऽप्यंशेष्वेव तस्या योगचक्षुषा गृह्यमाणत्वात्। जरा-जन्मरहितां मानातीतां महतीं शक्तिं वन्दे स्तौमि॥

एवं महतोऽस्य स्तोत्रकाव्यस्यादौ आद्येन श्लोकेन लोकानुग्रहाभ्यर्थनं पुरस्कृत्य द्वितीयेन स्वीयध्यानपरिचितस्वरूपव्यापारां महाशक्तिम् अभिष्टुत्य च कविनैवं श्लोकद्वयेन शिष्टसम्मतं ग्रन्थारम्भमङ्गलमाचरितम्॥

चतुःस्तबकेऽस्मिन्नाद्यशतके परदेवतामुमामधिकृत्य निगमागमेतिहासपुराणाधारान् समयभेदानुदाहरन् तत्र तत्र यावदवकाशं तेषां गूढार्थान् प्रकाशयन्, उमास्वरूपस्य विवरणं तत्साक्षात्कारपथावतीर्णानुभवविशेषान् व्याचष्टे। तदिह प्रथमे स्तबके परार्धशब्दवाच्यस्य सत्य-तपो-जनाभिधस्य नित्यत्रैलोक्यस्य तत्त्वकथनेन परदेवतास्वरूपं प्रस्तूयते, तदधिकृत्य प्रवृत्तानां कथानां तात्पर्यं च॥२॥

**सा तत्त्वतः समन्ता- त्सत्यस्य विभोस्तता तपश्शक्तिः॥**
**लीलामहिलावपुषा हैमवती तनुषु कुण्डलिनी॥३॥**

सा तत्त्वत इति—या महाशक्तिः प्रक्रान्ता सा तत्त्वतः वस्तुतः विचारदृष्ट्या परिशीलनेनेत्यर्थः। सत्यस्य विभोः पुरुषस्य ईश्वरस्य समन्तात् परितः सर्वत्र तता व्याप्ता तपश्शक्तिः भवतीत्यध्याहार्यम्। लीलामहिलावपुषा लीलया महिलायाः स्त्रियाः वपुषा शरीरेण हैमवती हिमवतः पुत्री भवति, तनुषु अस्मदादीनां शरीरेषु कुण्डलिनीशक्तिः योगिनां विदिता तन्त्रशास्त्रेषु

प्रसिद्धा। महाशक्तेरत्र त्रैविध्येनावस्थानमुक्तम्। अद्वितीयस्यैकस्य सत्यात्मन ईश्वरस्य भास्करस्य प्रभेव निसर्गसिद्धा सर्वव्यापिनी तपश्शक्तिर्महाशक्तेराद्यं मूलं स्वरूपम्। अनुग्रहार्थं लीलाविग्रहस्वीकारात् हैमवतीरूपं द्वितीयम्। अत्र देव्याः प्रत्येकव्यक्तित्वम् अनङ्गीकुर्वाणान् प्रति उत्तरत्राह। 'एकान्तविदेहौ तौ चेदतिसूक्ष्मौ। लीलातनुबन्धाशक्तावभिधेयौ ॥' इति। अनुग्रहार्थं लीलया शरीरस्वीकारासामर्थ्यं कथं सर्वशक्ते पुरुषे परस्यां शक्तौ वा आरोप्येत? एवमध्यण्डं अधिदैवतं चोक्ते, अध्यात्मं तु कुण्डलिनी तृतीयं रूपम्। उमाया हैमवतीनामग्रहणस्वारस्यं तु 'भासुरहेमाभरणां' 'तस्य प्रथमः साक्षी' इति श्लोकद्वयव्याख्याने प्रपञ्चयिष्यामः ॥३॥

**परमः पुरुषो नाभिर्लोकानां सत्य उच्यते लोकः ॥**
**परितस्ततः सरन्ती सूक्ष्मा शक्तिस्तपो लोकः ॥४॥**

अथ परमपुरुषस्य तच्छक्तेश्च सत्य-तपो-जनलोकात्मनावस्थितत्वप्रकारं निरूपयति द्वाभ्यां श्लोकाभ्याम् ॥

परम इति—परमः पुरुषो लोकाना नाभिः सत्यो लोक उच्यते। उत्तरार्धं क्रमान्वयम्। सत्यो विभुरिति पूर्वश्लोकोक्तः परमः पुरुष उच्यते। स एव सत्यो लोकश्च आख्यातः। सत्यस्वरूपस्य तस्य अखण्डत्व-बृहत्त्वद्योतनाय सर्वेषां लोकानाम् आद्यत्वज्ञापनाय च स लोकशब्दवाच्य इति ग्राह्यम्। यथा रथचक्रस्य नाभौ मध्ये मूलस्थानभूते सर्वे अराः अर्पिताः तथा परमपुरुषे सत्ये लोके सर्वे लोकाः प्रतिष्ठिता इत्यर्थः। वृत्तस्य मूलं मध्यमिव लोकजालस्य मूलं केन्द्रं सत्यलोकापरपर्यायः परमपुरुष इति विशदं भवति। तं परितः तस्य समन्तात् सरन्ती या वितता भूत्वा प्रसरन्ती राजते सा शक्तिः तपोलोक उच्यते। प्राणिनः प्राण इव परमपुरुषात् तच्छक्तिर्न वियोज्या। सत्यस्य शक्तस्य सूक्ष्मा शक्तिस्तपश्शब्दवाच्या निसर्गसिद्धा। पुरुषस्य तच्छक्तेश्च सत्य-तपो-लोकात्मकत्वमुक्त्वा जनलोकस्वरूपं विवृणोति ॥४॥

**अन्तर्गूढार्थानां पुरुषाग्नेर्धूमकल्प उद्गारः ॥**
**शक्तिज्वालाः परितः प्रान्तेष्वभवज्जनो लोकः ॥५॥**

अन्तरिति— पुरुषाग्नेः पुरुष एवाग्निस्तस्माद् धूमकल्पः ईषदसमाप्तो धूमः धूमोपम इत्यर्थः। अन्तर्गूढार्थानां परमपुरुषस्यान्तः गूढानाम् अस्पष्टानाम् अव्यक्तावस्थानां सृज्यमानजगज्जालबीजभूतानां नानाविधजगज्जीवोपाधि-

भूतानां भूतानां भवतां भव्यानां चोपादानतां दधतां परमपुरुषादाविष्क्रियमाणानां पदार्थानाम् उद्गारो निर्गमः शक्तिज्वालाः परितः परमपुरुष-तपोज्वालानां समन्तात् प्रान्तेषु पर्यन्तेषु जनो लोकोऽभवत् स्थित इत्यर्थः। यथा ज्वलनाद् धूमो निर्गत्य तज्ज्वालाः परित आवृणोति, तथा सत्यलोकात् परमपुरुषात् व्यञ्जिष्यमाणाः गूढार्थाः निर्गम्य तदीयशक्तितरङ्गान् परितः प्रदेशेषु सरन्तीति भावः। एष एव जनलोक उच्यते यः सत्यलोकात् तपोलोकद्वारा सर्वलोकोपादानत्वेनावस्थितः। अत्रेदमवधेयम्। इदं जन-तपः-सत्याख्यं लोकत्रयम् अवियोज्यं नित्यं च भवति। परमस्य सर्वशक्तेर्निसर्गसिद्धत्वात्, तस्याश्च परमपुरुषान्तर्गूढार्थाविष्कारकस्वभावाच्च। अत एव लोकसंस्थानवेदिनः सप्तलोकवादिनः सत्यादिलोकत्रयं नित्यमकृतकमाहुः। पराशरोऽप्याह 'जनस्तपस्तथा सत्यमिति चाकृतकत्रयम्' इति। तथा च त्रैविध्येन वेदान्तिभिः प्रतिपाद्यमानं सच्चिदानन्दलक्षणम् एकमेवाद्वितीयं परं वस्तु सर्गसम्बन्धापेक्षया लोकत्रयात्मनाऽवस्थाय जयतीति कवेराशयः। एवं च सदेव सत्यं, चिदेव तपश्शक्तिरूपा, जनश्चानन्द इति ग्राह्यम्। सन् परमः पुरुष एव सर्गस्य उपादानं निमित्तं चेति अद्वैतिसम्मतं तत्त्वमभ्युपगम्य तस्य त्रिरूपत्वात् तपश्शक्तिरूपचिदात्मना निमित्तकारणत्वं, जनयितृत्वधर्मकानन्दात्मना उपादानकारणत्वं च एकस्यैव परस्योक्तम् इति ज्ञेयम्। पुरुषस्य प्राण इव तपः क्रियाकारकं, शरीरमिव आनन्दश्च स्वरूपं भवतीत्येतावताऽलम् ॥५॥

**अतिसूक्ष्मधूमकल्पं लोकं ततमाख्ययाऽन्यया नाकम् ॥**
**एतं ततोऽपि सूक्ष्मा व्याप्ताऽन्तरतः परा शक्तिः ॥६॥**

अथ त्रिभिः श्लोकैः तपो-जनलोकयोः सम्बन्धं विवृण्वन् तयोर्नामभेदेन व्यवहारं च निर्दिशति ॥ अतिसूक्ष्मेति—

अतिसूक्ष्मधूमकल्पम् अत्यन्तसूक्ष्मतया धूमाकारमिव स्थितम् अन्यया आख्यया नाकं ततम् एतं लोकं नाकः स्वर्ग इति नामान्तरेणाभिहितम् इमं जनलोकं ततोऽपि सूक्ष्मा परा शक्तिः अन्तरतः व्याप्ता धूमकल्पात् जनलोकादपि सूक्ष्मतरा परा शक्तिः तस्यान्तरवस्थाय तमखिलं जनलोकं अन्तर्व्याप्य राजत इत्यर्थः। धूमस्यान्तर्ज्वालेव जनस्यान्तस्तप इति तस्याः सूक्ष्मत्वं गरीयस्त्वरूपं ज्ञेयम्। नाकः स्वर्गवाची, न विद्यते अकम् असुखं दुःखमस्मिन्निति नाकस्य निर्वचनमाहुः। अत एव जनलोकमानन्दमयं केषाञ्चिद् भाषया नाकं प्राहुः ॥६॥

**धूमान्तरोष्मकल्पा शुद्धज्वालोपमा च या शक्तिः ॥**
**तां दिवमाहुः केचन परमं व्योमापरे प्राहुः ॥७॥**

केचन धूमान्तरस्थां शक्तिज्वालां तपश्शक्तिकलां स्वर्गमाहुरिति मतभेदमाह धूमान्तरेत्यादिना— धूमान्तरोष्मकल्पा धूमस्यान्तरे यथा ऊष्मा घर्मः तथा उद्गीर्यमाणस्य गूढार्थसङ्घातस्य जनलोकस्य अन्तः शुद्धज्वालोपमा या च शक्तिः तां दिवं स्वर्गमाहुरेके केचन, परमं व्योमापरे प्राहुः। प्रथमम् एकैव शक्तिस्तपोरूपा परस्य पुरुषस्योक्ता, अनन्तरं सा पुरुषं परितः सरन्तीत्युदिता, ततश्च तस्याः परितः प्रान्तेषु पुरुषान्तर्गूढार्थमयोद्गारो जनलोको भवतीत्युक्तम्। इह तु जनलोकान्तःप्रचाराम् अत एव सोपाधिकां शक्तिं निरुपाधेर्मूलशक्तेर्विविच्य विसृज्यमानगूढार्थरूपजनलोकोपाधिकां शक्तिं स्वर्गमाहुरेके, अपरे तु इमामेव परमं व्योमेति कथयन्तीत्युक्तम्। परमं व्योम तु ऋग्वेदप्रसिद्धं 'ऋचो अक्षरे परमे व्योमन्' इत्यादौ, तथोपनिषत्सु च। तैत्तिरीयकाश्चामनन्ति 'यो वेद निहितं गुहायां परमे व्योमन्' इति। तस्मादिदमवगतम्। एके सृष्ट्युपादानद्रव्यमयं जनलोकाख्यं परमपुरुषान्निर्गच्छदर्थजालं स्वर्गमाहुः। केचित्तु तदुपहितज्वालोपमशक्तिं स्वर्गमाहुः; तां च पुनः परमाकाशपदवाच्यां मन्यन्ते ॥७॥

**उद्गीर्णधूमकल्पो योऽयमपारो महाञ्जनो लोकः ॥**
**व्योमान्तरिक्षगगन- प्रभृतिभिरभिधाभिराहुस्तम् ॥८॥**

यदि जनलोकोपाधिकायाः शक्तेः परमव्योमपदवाच्यत्वमुच्यते, तर्हि जनलोकस्य व्योमपदवाच्यत्वं चेत्यनयोर्भेदमाह ॥

उद्गीर्णेति— उद्गीर्णधूमकल्पः उद्गीर्णो धूम इवेत्यर्थः। यो जनो लोकः अयमपारो निरवधिः महान् बृहत्त्वलक्षितः। तं जनलोकं व्योमअन्तरिक्ष-गगनप्रभृतिभिः अभिधाभिः नामभिरित्यर्थः आहुः। जनलोकस्याकाशपदवाच्यत्वे सिद्धे तस्य आनन्दस्वरूपत्वेन प्रतिपाद्यमानत्वात् आनन्द एवाकाश इत्युक्तं भवति। श्रूयते च 'यदेष आकाश आनन्दो न स्यात्' इति 'आकाशशरीरं ब्रह्म' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादि। अत एव छन्दोगश्रुतिः आकाशस्य अनुत्पन्नत्वमाह ब्रह्मशरीरत्वात्। तस्यैव सर्वजगदुपादानत्वं चेह बोध्यम्। टुनदि समृद्धौ इति समृद्ध्यर्थकान्नन्दतेर्धातोर्निष्पन्नस्य आनन्दशब्दस्य समृद्धिमत्त्वं वाच्यम्, एवं पूर्णत्वमुक्तं भवति।

आकाशश्च आङ समन्तात् काशते इति व्युत्पत्त्या सर्वत्र प्रकाशमानतया विभुः पूर्णः समृद्ध इति गम्यते। व्योम्नः जनलोकस्य तदुपहितशक्तेः परमव्योम्नश्चैष भेदः। एकत्र आकाशे शक्तिप्रकाशो गूढः, अन्यत्र परमाकाशे स्पष्टः। किं च आकाशः केवलदेशवाचकत्वेन न ग्राह्यः, तस्य सर्वमूलकारणावस्थितपरमपुरुषशरीरभूतदिव्यद्रव्यत्वात् ॥८॥

एवं तपोजनलोकयोः सृज्यमानलोकानां क्रमशः निमित्तोपादानभूतयोः शक्त्याकाशयोर्विवेकमाख्याय प्रसङ्गवशात् सर्गपद्धतिं निरूपयन् परमात् पुरुषात् पृथक् स्फुरन्नात्मा जनलोकात् सर्गमनुगृह्णातीत्याह॥

**प्रान्तेषु कोऽपि शक्तेः पृथगात्मा वियदुपाधिसङ्गेन॥**
**परमात्मनो विभक्तः स्वयमभिमन्ता विनिष्पेदे ॥९॥**

प्रान्तेष्विति— शक्तेः प्रान्तेषु उक्तलक्षणायाः शक्तेर्ज्वलन्त्याः उपान्तेषु तीरेषु तपोलोक-जनलोकयोः सन्धिप्रदेशेष्वित्यर्थः। वियदुपाधिसङ्गेन जनलोकाकाशोपाधिसम्बन्धेन कोऽपि पृथगात्मा परमात्मनो विभक्तः ईदृशोऽसाविति निश्चेतुमशक्यः परमपुरुषात् अव्यक्तात् पृथक् व्यक्तिमापन्नः स्वयमभिमन्ता विनिष्पेदे स्वाभिमानवान् स्फूर्तो जातः। परमः पुरुष एव परमात्मा, स सर्वस्मात् परस्तादव्यक्तः सत्यः, तस्मादात्मव्यक्तिः शक्तिप्रान्तेषु आकाशोपाधिसम्पर्कात् स्वाभिमानितया सृष्टेरध्यक्षोऽभवदिति भावः। अभिमानश्च अभितः स्वीयत्वेनावबोधनं, अहमस्मि इदं मदीयमिति ज्ञानं, इदमेव सर्गमूलं भवति। अभिमानी स्फुरन्नात्मा परमात्मनः पृथग्व्यक्तिरित्यभिप्रायः। परमात्मा सर्वस्यापि मूलपुरुषः, तस्य पृथगात्मा व्यक्तिस्तु साक्षादध्यक्षत्वं सर्गस्य धत्ते इति ज्ञेयम् ॥९॥

अथ यत्र आकाशस्वरूपे जनलोके शक्तिज्वालया स्फुरन्नात्मा व्यक्तः स एव दक्ष इति प्रोक्तः, तच्छक्तिर्दाक्षायणीति च त्रिभिः श्लोकैराह॥

**दक्षः परोक्षमुदितः पन्था एष त्विषां जनो लोकः॥**
**तद्गर्भे लब्धात्मा कथिता दाक्षायणी शक्तिः ॥१०॥**

दक्ष इति— त्विषामर्चिषामेष पन्थाः मार्गः ज्वलिताकाशो दक्षः परोक्षम् अप्रत्यक्षं गूढभाषयेत्यर्थः। उदितः तद्गर्भे ज्वलिताकाशदक्षात्मनो गर्भे उदरे अन्तरित्यर्थः लब्धात्मा प्राप्तस्वरूपा तथाविधोपहितसत्ताका दाक्षायणी

**धूमान्तरोष्मकल्पा शुद्धज्वालोपमा च या शक्तिः ॥**
**तां दिवमाहुः केचन परमं व्योमापरे प्राहुः ॥७॥**

केचन धूमान्तरस्था शक्तिज्वालां तपश्शक्तिकलां स्वर्गमाहुरिति मतभेदमाह धूमान्तरेत्यादिना— धूमान्तरोष्मकल्पा धूमस्यान्तरे यथा ऊष्मा घर्मः तथा उद्गीर्यमाणस्य गूढार्थसङ्घातस्य जनलोकस्य अन्तः शुद्धज्वालोपमा या च शक्तिः तां दिव स्वर्गमाहुरेके केचन, परमं व्योमापरे प्राहुः। प्रथमम् एकैव शक्तिस्तपोरूपा परस्य पुरुषस्योक्ता, अनन्तरं सा पुरुषं परितः सरन्तीत्युदिता, ततश्च तस्याः परितः प्रान्तेषु पुरुषान्तर्गूढार्थमयोद्गारो जनलोको भवतीत्युक्तम्। इह तु जनलोकान्तःप्रचाराम् अत एव सोपाधिकां शक्तिं निरुपाधेर्मूलशक्तेर्विविच्य विसृज्यमानगूढार्थरूपजनलोकोपाधिकां शक्तिं स्वर्गमाहुरेके, अपरे तु इमामेव परमं व्योमेति कथयन्तीत्युक्तम्। परमं व्योम तु ऋग्वेदप्रसिद्धं 'ऋचो अक्षरे परमे व्योमन्' इत्यादौ, तथोपनिषत्सु च। तैत्तिरीयकाश्चामनन्ति 'यो वेद निहितं गुहायां परमे व्योमन्' इति। तस्मादिदमवगतम्। एके सृष्ट्युपादानद्रव्यमयं जनलोकाख्यं परमपुरुषान्निर्गच्छदर्थजालं स्वर्गमाहुः। केचित्तु तदुपहितज्वालोपमशक्तिं स्वर्गमाहुः; तां च पुनः परमाकाशपदवाच्यां मन्यन्ते ॥७॥

**उद्गीर्णधूमकल्पो योऽयमपारो महाञ्जनो लोकः ॥**
**व्योमान्तरिक्षगगन- प्रभृतिभिरभिधाभिराहुस्तम् ॥८॥**

यदि जनलोकोपाधिकायाः शक्तेः परमव्योमपदवाच्यत्वमुच्यते, तर्हि जनलोकस्य व्योमपदवाच्यत्वं चेत्यनयोर्भेदमाह ॥

उद्गीर्णेति— उद्गीर्णधूमकल्पः उद्गीर्णो धूम इवेत्यर्थः। यो जनो लोकः अयमपारो निरवधिः महान् बृहत्त्वलक्षितः। तं जनलोकं व्योम-अन्तरिक्ष-गगनप्रभृतिभिः अभिधाभिः नामभिरित्यर्थः आहुः। जनलोकस्याकाशपदवाच्यत्वे सिद्धे तस्य आनन्दस्वरूपत्वेन प्रतिपाद्यमानत्वात् आनन्द एवाकाश इत्युक्तं भवति। श्रूयते च 'यदेष आकाश आनन्दो न स्यात्' इति 'आकाशशरीरं ब्रह्म' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादि। अत एव छन्दोगश्रुतिः आकाशस्य अनुत्पन्नत्वमाह ब्रह्मशरीरत्वात्। तस्यैव सर्वजगदुपादानत्वं चेह बोध्यम्। टुनदि समृद्धौ इति समृद्ध्यर्थकान्नन्दतेर्धातोर्निष्पन्नस्य आनन्दशब्दस्य समृद्धिमत्त्वं वाच्यम्, एवं पूर्णत्वमुक्तं भवति।

आकाशश्च आङ समन्तात् काशते इति व्युत्पत्त्या सर्वत्र प्रकाशमानतया विभुः पूर्णः समृद्ध इति गम्यते। व्योम्नः जनलोकस्य तदुपहितशक्तेः परमव्योम्नश्चैष भेदः। एकत्र आकाशे शक्तिप्रकाशो गूढः, अन्यत्र परमाकाशे स्पष्टः। किं च आकाशः केवलदेशवाचकत्वेन न ग्राह्यः, तस्य सर्वमूलकारणावस्थितपरमपुरुषशरीरभूतदिव्यद्रव्यत्वात् ॥८॥

एवं तपोजनलोकयोः सृज्यमानलोकानां क्रमशः निमित्तोपादानभूतयोः शक्त्याकाशयोर्विवेकमाख्याय प्रसङ्गवशात् सर्गपद्धतिं निरूपयन् परमात् पुरुषात् पृथक् स्फुरन्नात्मा जनलोकात् सर्गमनुगृह्णातीत्याह ॥

**प्रान्तेषु कोऽपि शक्तेः पृथगात्मा वियदुपाधिसङ्गेन ॥**
**परमात्मनो विभक्तः स्वयमभिमन्ता विनिष्पेदे ॥९॥**

प्रान्तेष्विति— शक्तेः प्रान्तेषु उक्तलक्षणायाः शक्तेर्ज्वलन्त्याः उपान्तेषु तीरेषु तपोलोक-जनलोकयोः सन्धिप्रदेशेष्वित्यर्थः। वियदुपाधिसङ्गेन जनलोकाकाशोपाधिसम्बन्धेन कोऽपि पृथगात्मा परमात्मनो विभक्तः ईदृशोऽसाविति निश्चेतुमशक्यः परमपुरुषात् अव्यक्तात् पृथक् व्यक्तिमापन्नः स्वयमभिमन्ता विनिष्पेदे स्वाभिमानवान् स्फूर्तो जातः। परमः पुरुष एव परमात्मा, स सर्वस्मात् परस्तादव्यक्तः सत्यः, तस्मादात्मव्यक्तिः शक्तिप्रान्तेषु आकाशोपाधिसम्पर्कात् स्वाभिमानितया सृष्टेरध्यक्षोऽभवदिति भावः। अभिमानश्च अभितः स्वीयत्वेनावबोधनं, अहमस्मि इदं मदीयमिति ज्ञानं, इदमेव सर्गमूलं भवति। अभिमानी स्फुरन्नात्मा परमात्मनः पृथग्व्यक्तिरित्यभिप्रायः। परमात्मा सर्वस्यापि मूलपुरुषः, तस्य पृथगात्मा व्यक्तिस्तु साक्षादध्यक्षत्वं सर्गस्य धत्ते इति ज्ञेयम् ॥९॥

अथ यत्र आकाशस्वरूपे जनलोके शक्तिज्वालया स्फुरन्नात्मा व्यक्तः स एव दक्ष इति प्रोक्तः, तच्छक्तिर्दाक्षायणीति च त्रिभिः श्लोकैराह ॥

**दक्षः परोक्षमुदितः पन्था एष त्विषां जनो लोकः ॥**
**तद्गर्भे लब्धात्मा कथिता दाक्षायणी शक्तिः ॥१०॥**

दक्ष इति— त्विषामर्चिषामेष पन्थाः मार्गः ज्वलिताकाशो दक्षः परोक्षम् अप्रत्यक्षं गूढभाषयेत्यर्थः। उदितः तद्गर्भे ज्वलिताकाशदक्षात्मनो गर्भे उदरे अन्तरित्यर्थः लब्धात्मा प्राप्तस्वरूपा तथाविधोपहितसत्ताका दाक्षायणी

शक्तिः दक्षजातत्वाभिप्रायेण कथिता। अथ कथमिदं दक्षस्य स्वरूपं कविः स्वकपोलकल्पितं प्राहेति मा भूद्विचिकित्सा। परोक्षमित्युक्तम्। गूढभाषया तत्त्वान्याहुर्वेदे मन्त्राः, 'परोक्षप्रिया देवा' इति ब्राह्मणं च भवति। मन्त्रेष्वेव दृश्यते 'निण्या वचांसि' इति। निण्यानि अन्तर्हितानि गूढानीत्यर्थः। 'प्रजापतिरात्मनो वपामुदक्खिदत्' इति तैत्तिरीयश्रुतिः शबरस्वामिभिः जैमिनीयसूत्रभाष्ये एवं व्याख्याता "नित्यः कश्चिदर्थः प्रजापतिः स्यात् वायुराकाश आदित्यो वा, 'स आत्मनो वपामुदक्खिदत्' इति वृष्टिं वायुं रश्मिं वा, 'तामग्नौ प्रागृह्णात्' इति वैद्युते आर्चिषे लौकिके वा, 'अजः' इत्यन्नं बीजं वीरुद्वा, 'तमालभ्य' तमुपयुज्य प्रजाः पशूनाप्नोति इति गौणाः शब्दाः" (मी. भा. १-२-१)। अथ प्रकृतमनुसरामः। दक्षमधिकृत्य क्वैतत् परोक्षवचनं मन्त्रेषु दृश्यते? 'अदितेर्दक्षो अजायत दक्षाद्वदितिः परि' इति। इदं चोत्तरत्र प्रपञ्च्यते ॥१०॥

**सत्याः प्रागपि शक्तेः प्रादुर्भावः स कीर्त्यते प्रथमः ॥**
**ईशाभिमानमय्याः पृथगभिमानित्वनिष्पत्त्या ॥११॥**

अथ शक्तेर्दाक्षायण्याः प्रादुर्भावमुपपादयति॥ सत्या इति— ईशाभिमानमय्याः मयट् प्राचुर्ये परमपुरुषस्वीयाभिमानप्रचुरायाः प्रागपि सत्याः दक्षाख्यपृथगात्मस्फूर्तेः पूर्वमपि स्थितायाः शक्तेः पृथगभिमानित्वनिष्पत्त्या व्यक्तात्माभिमानवत्त्वाद्धेतोरित्यर्थः। 'तद्गर्भे लब्धात्मा' इत्युक्तत्वात्, स प्रथमः प्रादुर्भावः अभिव्यक्तिविशेषः कीर्त्यते। ईशाभिमानमय्याः अजायाः शक्तेः पृथगभिमानितया जन्मोपपद्यत इति भावः। सतीनामधेयां दाक्षायणीमाहुः पुराणानि। एवमपि सतीशब्दप्रयोगोऽत्र स्वरसतामापादयति॥

एवं जनन्या एव सुतात्वोपपत्तिं लाक्षणिकभाषया वेद आह॥११॥

**आकाशस्य सुतैवं लक्षणया वस्तुतः प्रसूः शक्तिः ॥**
**अदितेर्दक्षो दक्षा- ददितिरिति श्रुतिरबाधैवम् ॥१२॥**

आकाशस्येति— वस्तुतः याथार्थ्येन प्रसूः जनयित्री दक्षात्मन आकाशस्यापीति शेषः, शक्तिः एवं लक्षणया वृत्त्या, प्रसुवः सुतात्वे प्रतिपाद्यमाने मुख्यार्थबाधाल्लक्षणा वृत्तिः, आकाशस्य सुता भवतीत्यध्याहार्यम्। एवम् अनेन प्रकारेण अदितेर्दक्षो जातः, दक्षाददितिः जातेति श्रुतिः मन्त्रदृष्टिः

अबाधा उपपन्ना भवति। 'अदितेर्दक्षो अजायत दक्षाद्वदितिः परि ॥ अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव। तां देवा अन्वजायन्त भद्रा अमृत-बन्धवः' (ऋ. १०, ७२-४, ५)॥ अथ भाषाभेदेन पुरुषं शक्तिं च व्यवहरन्ति पण्डिता इत्याह॥१२॥

**जगतां माता-पितरौ सती-भवौ केऽपि पण्डिताः प्राहुः॥**
**अदिति-प्रजापती ता- वपरेषां भाषया विदुषाम् ॥१३॥**

जगतामिति— जगतां माता-पितरौ उद्देश्यौ सती-भवौ विधेयौ सती दाक्षायणी, भवः शिवश्च तौ केऽपि एके पण्डिताः प्राहुः तौ जगन्माता-पितरौ अपरेषां विदुषां भाषया अदिति-प्रजापती अदितिश्च देवमाता, प्रजा-पतिश्च कश्यपः तौ भवत इति शेषः। एतच्च पुराणमतम्॥१३॥

अथ लीलार्थं स्त्री-पुरुषाकारतां स्वीकृतवन्तौ सर्वशक्तौ शक्तः पुरुषस्त-च्छक्तिश्चेत्याह॥

**दिव्यपुमाकृतिमीशे बिभ्रति लीलार्थमस्य रमणाय॥**
**दिव्यवनिताकृतिं सा बभार माता च भुवनानाम् ॥१४॥**

ईश इति— ईशे ईश्वरे पुरुषे लीलार्थं दिव्यपुमाकृतिं बिभ्रति दिव्यं द्युलोकोचितं पुरुषरूपं न त्वस्मदादीनां परिचितं चक्षुर्गोचरं भावनागम्यं वा धारयमाणे सति, सा च भुवनानां माता दिव्यवनिताकृतिं बभार। स्पष्टम् ॥१४॥

तामेवोमामाहुरिति बहुशोभामित्यौपनिषदभाषां प्रयुञ्जानस्तां विशिनष्टि।

**भासुरहेमाभरणां बहुशोभामीश्वरप्रमोदकलाम्॥**
**मूर्तिं पावनकीर्तिं तां हैमवतीमुमामाहुः ॥१५॥**

भासुरेति— ताम् भासुरहेमाभरणां जाज्वल्यमानसौवर्णालङ्काराम् ईश्वर-प्रमोदकलां ईश्वरानन्दाविर्भूतरसिकताविष्कारकरतिरहस्यविद्यारूपां मूर्तिं सविग्रहां पावनकीर्तिं विमलश्लोकां हैमवतीम् उमामाहुः। स्पष्टमन्यत्। उमापदस्य निर्वचनभेद उत्तरत्र कथ्यते। इह तु अवतेरुमाशब्दनिष्पत्तिरुप-पन्ना शब्दशास्त्रसम्मता। वेदेऽपि 'ओमासो' रक्षका देवा इति अवतेर्धातो-रेव निष्पद्यते। हैमवती यद्यपि हिमवतोऽपत्यं स्त्रीति साध्वेव निष्पादनं,

तथाऽपि प्रकृतमनुसृत्य हैमं सौवर्णं ज्योतिरस्याः अस्तीति वक्तव्यम्। कथम्? उच्यते। ग्रन्थकृत् प्रथमं ऋग्वेदाद् दक्षादितिप्रादुर्भावमुल्लिख्य ततस्तवलकारशाखिभिराम्नाताम् उमाकथां स्मारयति। अग्निवाय्वोः किं तद्यक्षमित्यज्ञात्वैव निवृत्तयोः, इन्द्रो ज्ञातुं प्रवृत्तः, तत्तु यक्षरूपम् अन्तर्दधे। तदा तस्मिन्नेवाकाशे स उमां स्त्रियमपश्यत्। सा तं ब्रह्मेत्यवोचत्। तथा च केनोपनिषदि 'स (इन्द्रः) तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवती तां होवाच किं तद्यक्षमिति। सा ब्रह्मेति होवाच॥' अत एव हैमवतीमुमां बहुशोभामिति प्रयुक्तम्। विशदतरं भवतीदमुत्तरश्लोके॥१५॥

**तस्य प्रथमः साक्षी भुवनजुषां नयनशालिनां मध्ये॥**
**वपुषः किलादिसुदृशो निरुपमपुण्यो निलिम्पपतिः॥१६॥**

तस्येति— भुवनजुषां जगति प्राप्तस्थितिकानां नयनशालिनां चक्षुष्मतां मध्ये निरुपमपुण्यः असमानः सुकृती निलिम्पपतिः देवराडिन्द्रः आदिसुदृशः आदिस्त्रियाः तस्य वपुषः प्रागुक्तस्य बहुशोभस्य देदीप्यमानविग्रहस्य प्रथमः साक्षी अभूदित्यध्याहार्यम्। इन्द्र एव तां प्रथमं दृष्टवानिति केनोपनिषद्वाक्यबलेनोक्तम्॥१६॥

अथ तामेव स्वाभिमतामुमामाह॥

**पल्लवमृदु वेदिगत- ज्वलनपवित्रं महार्घमणिकान्तम्॥**
**नवचन्द्रखण्डसौम्यं शिवसुदृशस्तत्स्मरामि वपुः॥१७॥**

पल्लवमृद्विति— शिवसुदृशो वपुः स्मरामि स्पष्टं वाक्यम्। अन्यानि उमावपुषो विशेषणानि सुबोधानि। मार्दव-पावनत्व-कमनीयता-प्रसन्नतानां क्रमशः किसलयादिगतैर्गुणविशेषैः सादृश्यं निर्वर्ण्य तद्वपुः स्मरामीत्याह। योगबलात्स्वभावसिद्धसामर्थ्याद्वा जन्मान्तरे लोकान्तरे वा दृष्टपरिचितम् उमावपुः कविः स्मरति॥१७॥

अथेमामेवोमां पुराणेषु प्रसिद्धां हिमाचलपुत्रीं गौरीं वदन्त्येक इत्याह॥

**केचन गौरीं देवीं शीताद्रेर्देवतात्मनो जाताम्॥**
**कथयन्ति स्त्रियमुत्तम- लावण्यास्वादितो गण्याम्॥१८॥**

केचनेति— शीताद्रेः देवतात्मनः जातां गौरीं देवीम् उत्तमलावण्यासु उत्तमं प्रशस्तं लावण्यं रामणीयकं यासां तासु लोकोत्तरसुन्दरीषु आदितः आदौ सार्वविभक्तिकस्तसिल् गण्यां गणयितुं योग्यां, रसोत्तरसौन्दर्यसम्पन्नानाम् अग्रे माननीयां स्त्रियं केचन कथयन्ति ॥१८॥

अचलपुत्री गौरीति भक्तगीता कथा सत्याऽप्यस्तु, तस्या मूर्तेर्याथार्थ्यं तु तेजोंशविशेष इत्याह ॥

**सत्यैव भवतु सेयं कथा तथाऽपि प्रभाषितां भक्तैः ॥**
**तां मूर्तिमादिसुदृशो जानीयात्कमपि तेजोंशम् ॥१९॥**

सत्यैवेति— यद्यपि सेयं कथा सत्यैव भवतु, तथाऽपि भक्तैः प्रभाषितां ताम् आदिसुदृशो मूर्तिं कमपि तेजोंशं जानीयात् इति योजना ॥१९॥

अथ कथं सा पार्वती वेदे तेजोंश उच्यत इत्याह ॥

**मन्यन्ते केऽपि घनं पर्वतमुक्तं निगूढया वाचा ॥**
**प्रादुर्भवति गभीर- ध्वनिरविषह्या यतः शक्तिः ॥२०॥**

मन्यन्त इति— केऽपि केचन निगूढया रहस्यया वाचा वेदभाषया उक्तं घनं मेघं पर्वतं गिरिं मन्यन्ते। निरुक्ते निघण्टौ त्रिंशन्मेघनामसु पर्वतपदं नवमं पठितम् । यतः यस्मान्मेघात् गभीरध्वनिः गम्भीरघोषा अविषह्या दुर्भरा शक्तिः विद्युद्रूपा प्रादुर्भवति प्रकाशतां गच्छति ॥२०॥

अथ दक्षयागपुराणकथांशस्य उपपत्तिं गूढार्थविवरणेन द्वाभ्यां प्रदर्शयति ।

**आकाशो गोलेभ्यो यद्वितरति निजरजश्चयादन्नम् ॥**
**नेशाय कीर्त्यते सा संसारे दक्षयागकथा ॥२१॥**

आकाश इति— दक्षस्य प्रजापतेर्यजने शिवो नाहूतः, अन्येभ्यो देवेभ्यो हवींषि दत्तानि। रुद्रः क्रुद्धोऽभूत्। पितुर्यागे सन्निहिता दाक्षायणी तत्र

नष्टाऽभवत्। अयं कथासारः। आकाशः सर्वोपादानद्रव्यभूतः गोलेभ्यः खगोलेभ्यः ज्योतिर्मण्डलेभ्यः निजरजश्चयात् अन्नं वितरति ईशाय न इति यत् उक्तप्रकाराकाशगतरेणुसमूहात् आहारं जनन-जीवन-पोषणसाधनीभूतं द्रव्यं ददातीति यत् सा संसारे दक्षयागकथा उत्पत्ति-विनाशस्वभावे जगति दक्षप्रजापतियजनवृत्तान्त इति भावः। परस्यात्मनो विभक्तः पृथगात्मा यत्र स्फूर्तः स आकाशो दक्ष इति पूर्वमेवोक्तम्। तस्मादेव समस्तजगदाधायक-सामग्री विसृष्टा भवति, सा च सर्गाय दीयते, न तु ईश्वराय परस्मै पुरुषाय। ततश्च दक्षाख्याकाशोदरस्था शक्तिः व्यापिन्यपि अन्तर्निगूढत्वात् बाह्यदृष्टय-पेक्षया नष्टेति तत्राप्युपपत्तिं दर्शयति व्याप्ताऽपीत्यादिना ॥२१॥

**व्याप्ताऽपि यन्निगूढा बहिरीक्षकबुद्ध्यपेक्षया नष्टा ॥**
**शक्तिर्यागे तस्मि- न्नवसानं तदुदितं सत्याः ॥२२॥**

व्याप्ताऽपीति— यत् यस्मात् व्याप्ताऽपि शक्तिः बहिरीक्षकबुद्ध्य-पेक्षया नष्टा, तत् तस्मात् तस्मिन् दक्षयागे सत्याः सतीदेव्याः दाक्षा-यण्याः अवसानं निर्याणं उदितम्॥२२॥

वेदभाषायां पार्वतीशब्दार्थमाह॥

**पर्वतनाम्नो वैदिक- भाषायां यदियमतिबला शक्तिः ॥**
**घनतो भवति व्यक्ता तदभिहितं पार्वतीजननम् ॥२३॥**

पर्वतेति— यत् यस्मात् इयमतिबला शक्तिः वैदिकभाषायां पर्वत-नाम्नो पर्वताभिधानात् घनतः मेघात् व्यक्ता स्पष्टा भवति, तत् तस्मात् पार्वतीजननम् अभिहितं कथितम्। वैद्युतज्योतिःस्वरूपिणीत्याशयः ॥२३॥

अस्त्वेवं सर्वं गूढार्थविवरणम्; तत्तु हिमाचले भूजुषामनुग्रहाय शिव-शक्तिभ्यां कृतं सान्निध्यं न बाधत इत्याह तेजोंश इत्यादिना॥

**तेजोंशतः शिवाविह हिमाचलेऽनुग्रहाय भूमिजुषाम् ॥**
**दत्तो यत्सान्निध्यं लीलाचारित्रमन्यदिदम् ॥२४॥**

तेजोंश इति— इह भूतले हिमाचले देवतात्मनि पर्वतराजक्षेत्रे भूमिजुषाम् अस्मदादीनां अनुग्रहाय तेजोंशतः दिव्यज्योतिषः कलाविशेषेणावस्थितौ तौ शिवौ पार्वती-परमेश्वरौ सान्निध्यं दत्तः वितरतः उपस्थितौ प्रसन्नौ भवत इत्यर्थः इति यत् तदिदं अन्यत् लीलाचारित्रम् चरित्रमेव चारित्रं लीलया भक्तानुग्रहाय कृता चर्येत्यर्थः। तेजोमयदेहौ सूक्ष्मदृग्गोचरौ हिमाचलक्षेत्रकृताधिष्ठानाविति तात्पर्यम् ॥२४॥

स्तबकमुपसंहरति ॥

**एतासामार्याणां जानन्तः शास्त्रसम्मतं भावम् ॥**
**जानीयुर्भवमहिषीं भुवनानामम्बिकां देवीम् ॥२५॥**

एतासामिति— एतासामार्याणां आर्यावृत्तनिबद्धानां पद्यानां शास्त्रसम्मतं भावं वेदादिशास्त्रानुरोधेनोपपादितमाशयं जानन्तो विद्वांसः भवमहिषी शिवललनां भुवनानामम्बिकां देवीं जानीयुः जगन्मातुरुमायाः स्वरूपमवगच्छेयुरित्यर्थः ॥२५॥

प्रथमः स्तबकः सव्याख्यः समाप्तः ॥

# द्वितीयः स्तबकः

अस्मिन् प्रथमशतकस्य द्वितीयस्तबके ईश्वर-शक्त्योः भेदाभेदस्वरूपम्, अन्योन्यसम्बन्धं समयभेदकथनद्वारा उपपादयति। सङ्क्षेपेण सृष्टिप्रकारं निरूप्य अध्यात्माधिदैवतविचारेण त्रिमूर्ति-पञ्चमूर्त्तिसिद्धान्तोपपादनेन च महाशक्तिरुमा कवेरिष्टदेवता स्तूयते ॥

**सहादरेण यो वलक्षपारिजातमालया**
**गलस्थलीविभूषया ध्वनिं विनैव भाषते ॥**
**महेशपुण्ययोषितो मनोज्ञहास एष मे**
**विभूतये प्रकल्पतां विधूतये च पाप्मनाम् ॥१॥**

सहेति --यः उमाहासः गलस्थलीविभूषया कण्ठहाराभरणभूतया वलक्षपारिजातमालया सह आदरेण ध्वनिं विनैव भाषते पारिजातस्य शुभ्रवर्णत्वं प्रसिद्धम्; तस्य वर्णान्तरासत्त्वेऽपि नामतः कथनं हासोऽपि वलक्ष इति गमयितुम्। उभयोः सावर्ण्यान्मैत्री, तया सिद्धया, हासो मालया सह रहस्यभाषिते प्रवर्तते। हासांशुविलासः कण्ठभूषायाः पारिजातमालायाः वक्षःस्थले विश्रान्तायाः शुभ्रायाः प्रान्तेषु बहुमानपुरस्सरं व्याप्रियते। हासस्य विलास एव निश्शब्दभाषणम्। आदरोऽत्र बहुमानः। उमाहासस्य पारिजातमालायांमादरः औचित्यपोषकः। पारिजातस्य द्युलोकसम्भवत्वं, हासस्येव शुभ्रत्वं, वक्षस्थलस्थित्या हृदयसमीपवर्तित्वं चादरास्पदं व्यङ्ग्यम्। महेशपुण्ययोषितः एषः यच्छब्देन परामृश्यमानः मनोज्ञहासः मे विभूतये प्रकल्पतां, पाप्मना विधूतये च प्रकल्पतां शिवसुन्दर्याः रमणीयो हासः ममैश्वर्याय, पापविधूननाय च प्रभवत्विति प्रार्थ्यते। पुण्ययोषित् सुन्दरस्त्री 'पुण्यं तु चार्वपि' इति पुण्यशब्दस्य सौन्दर्यपर्यायत्वात्। इह पुण्यं सुकृतवाचकं वा स्यात्, तर्हि अयमर्थः, महेशस्य पुण्यं सुकृतमेव योषित् पार्वतीति। एवमेके प्राहुः ईशस्य तपःफलमुमा, उमायास्तपःफलमीशश्चेति, 'परस्परतपः-

सम्पत्फलायितपरस्परौ। प्रपञ्चमाता-पितरौ प्राञ्चौ जायापती स्तुमः इति जयदेवः। हासस्य मालायाश्च आनुरूप्यात् समालङ्कारः॥१॥

पुनश्च पापफलप्रध्वंसं प्रार्थयते ॥

**निरन्तरश्रिते सदा कृपारसप्रवाहिनी**
**विलासिनीतनुर्विभोः पुमाकृतेर्विमोहिनी ॥**
**सुधातरङ्गकल्पहासभासुरानना शिवा**
**पदाब्जलम्बिनो धुनोतु पाप्मनः फलं मम ॥२॥**

निरन्तरेति— शिवा पदाब्जलम्बिनो मम पाप्मनः फलं धुनोतु इति सरलं वाक्यम्। शिवां विशिनष्टि। निरन्तरश्रिते निरन्तरम् अविच्छेदं यथा तथा श्रिते आश्रिते जने विषये सदा कृपारसप्रवाहिनी अविरतदया-मृतप्रवाहायते भगवतीत्यर्थः। पुमाकृतेः विभोः विमोहिनी विलासिनीतनुः पुरुषाकारस्येश्वरस्य मोहजननी कमनीयस्त्रीशरीरेत्यर्थः। विलासिनीतनुरेकं पदं, विलासिन्यास्तनुरिव तनुर्यस्याः सेति। पुमाकृतिर्विभुः, विलासिनीतनुः शिवेति वैलक्षण्यम् आकारस्वीकारेण कथितम्। सुधातरङ्गकल्पहासभासु-रानना ईषदूनाः सुधातरङ्गाः सुधातरङ्गकल्पाः हासाः तैः भासुरम् आननं यस्याः सा अमृतवीचिमयहासांशुभिर्भासमाना चन्द्रमुखीत्यर्थः। एकस्या एव द्विधोल्लेखनात् उल्लेखालङ्कारः॥२॥

अथ सृष्ट्यादिविधात्रीं सर्वत्र भासमानामपि गुर्वनुग्रहेण विना ज्ञातुं विज्ञा अपि न शक्नुवन्तीत्याह॥

**करोति या बिभर्ति या निहन्ति या जगत्त्रयं**
**समन्ततो विभाति या न दृश्यते क्वचिच्च या ॥**
**अतीव गुप्तरूपिणी गुरूपदेशमन्तरा**
**न शक्यते बुधैश्च बोद्धुमन्धकारिसुन्दरी ॥३॥**

करोतीति— जगत्त्रयं या करोति, या बिभर्ति, या निहन्ति, या समन्ततो विभाति यद्यप्येवं त्रिलोकसर्जन-रक्षण-संहरणानि विदधती सर्वत्र भासमाना वर्तते, तथाऽपि या क्वचिच्च न दृश्यते क्वचिदपि दृष्टिगोचरा न भवतीत्यर्थः।

कुतः ? अतीव गुप्तरूपिणी अत्यन्तसूक्ष्मरूपत्वान्न स्थूलचक्षुषो दृश्या। तर्हि कोऽभ्युपायो वेत्तु जगन्मातरम् ? गुरूपदेशादन्तश्चक्षुष्युन्मीलिते, सा बोद्धुं शक्यते। तदेवाहोत्तरार्धेन। तच्च स्पष्टम्। अन्धकारिः शिवः तस्य सुन्दरी शिवा ॥३॥

सर्वेषां भूतानां प्रबोधनादि देव्यैव क्रियत इत्याह ॥

**महान्धकारबन्धुरस्य भूतसञ्चयस्य या**
**विनिद्रितस्य सर्वबीजधाम्नि मौनमुद्रिते ॥**
**समन्ततो विजृम्भणाय भासनाय चाभव-**
**न्महद्विधाय चेष्टितं ममेयमिष्टदेवता ॥४॥**

महान्धेति— या देवी मौनमुद्रिते मौनेन निश्शब्देन नादातीताक्षर-नैश्चल्येन मुद्रिते अनुद्घाटचतयाऽवस्थिते निष्कम्पलक्षणे सर्वबीजधाम्नि सर्वस्यापि कारणावस्थानिधानभूते स्थाने सूक्ष्माकाशे परमपुरुषशरीरभूते विनिद्रितस्य निश्चेष्टस्य महान्धकारबन्धुरस्य महति अन्धकारे बन्धुरस्य विषमस्य सर्वलयावस्थायाम् अप्रकाशतया गाढान्धकारे व्यवस्थाविरहं वैषम्यं गतस्य, निष्क्रिय-निष्प्रकाशस्य भूतसञ्चयस्य सर्वप्राणिसमूहस्य जगज्जीवराशेर्वा समन्ततो विजृम्भणाय भासनाय च तं सर्वं समन्तात् सर्वत्र स्पष्टतां गमयित्वा स्वोचितक्रियाकरणे नियोजयितुं तथा प्रकाशयितुं च महत् चेष्टितं विधाय महत्कार्यं कृत्वा, अभवत् प्राभवत् शक्ताऽभूदित्यर्थः। इयं या सर्वं निद्रितं लयदशातः प्रबोध्य, विजृम्भयितुं भासयितुं च स्वीयचेष्टितविशेषेणाशकत्। सेयं ममेष्टदेवता महाशक्तिरुमा न केवलं पुराणप्रसिद्ध-देश-कालपरिच्छिन्नाकार-चरित्रेति कवेरभीष्टदेवीस्वरूपमुक्तम् ॥४॥

तस्याः आदिमं चेष्टितं स्तौति ॥

**महेशगर्भतः समस्तभूतबीजकोशतः**
**किरन्त्यशेषविश्वमप्यपारदिव्यवैभवा ॥**
**विचित्रचेष्टयाऽऽद्यया विधूतनाथनिद्रया**
**जगद्भृता जयत्यसावनादिशक्तिरद्भुता ॥५॥**

महेशेति— अनादिशक्तिरसौ जयति प्रागभावो नास्त्यस्या इत्यर्थः। जयति उत्कर्षेण वर्तते। अमूमम्बिकां विशिनष्टि। समस्तभूतबीजकोशतः महेशगर्भतः अशेषविश्वं किरन्ती सर्वेषां भूतानां उपादानसामग्रीनिधानात् महेश्वरस्यान्तरात् कारणावस्थाकाशात् समस्तं जगज्जालम् उद्धृत्य निर्गमय्य विक्षिपन्ती, अपारदिव्यवैभवा अपारम् अनन्तं दिव्यं वैभवम् ऐश्वर्यं यस्याः सा, विधूतनाथनिद्रया आद्यया विचित्रचेष्टया विधूता अपास्ता नाथस्येश्वरस्य निद्रा योगनिद्रा यया तया आद्यया सृष्टयारम्भार्थया विचित्रचेष्टया अद्भुतक्रियया उपलक्षिता अत एव अद्भुता जगन्नुता समस्तलोकस्तुता जयतीति वाक्यशेषः। ईश्वरस्य योगनिद्रातोऽप्रबोधे सति, ईश्वर्याः विश्वविक्षेपकं चेष्टितं न सम्भवति। अत एव तच्चेष्टितमद्भुतं येन सर्वेश्वरः समाधितः प्रबुद्धः ईश्वर्याः विश्वसृष्टिविधानमनुगृह्णाति ॥५॥

अथ द्वाभ्यां श्लोकाभ्यां शिव-शक्त्योर्नामभेदोपपत्तिं दर्शयति, तयोर्भेदाभेदसम्बन्धं च ॥

**भवं भणन्ति तान्त्रिकास्त्वदाश्रयं तमव्ययं**
**समामनन्ति वैदिकाः सदर्चिते सदाह्वयम् ॥**
**न कश्चिदर्थभेद एतदाख्ययोर्द्वयोर्भवे-**
**ल्लिङ्गभिदेयमादिमं पदं पुमान्परं नपुंसकम् ॥६॥**

भवमिति— सदर्चिते सद्भिः पूजिते भगवति, तान्त्रिकाः तन्त्रशास्त्रप्रमाणका आगमिकाः त्वदाश्रयम् अव्ययं तं भवं भणन्ति तवाश्रयत्वेन स्थितम् अक्षयं तं पुरुषं भव इति नाम्ना व्यवहरन्तीत्यर्थः। वैदिकाः सदाह्वयम् आमनन्ति वेदसमयानुगास्तं पुरुषं त्वदाश्रयं सत् इति गायन्ति। सत् आह्वयः यस्य तं सदाह्वयम्। द्वयोरेतदाख्ययोः सत् भव इति एतयोर्नाम्नोः अर्थभेदो न कश्चिद् भवेत्, भवतीति भवः भू सत्तायामिति धातोर्निष्पन्नः, अस्तीति सत् अस भुवीति धातोर्व्युत्पन्नम्। तस्मात् सच्च भवश्च सत्तार्थकौ अर्थभेदरहितौ, तयोर्लिङ्ग एव भेदः भिदेयम् इयं भिदा अयं भेद इत्यर्थः। आदिमं पदं भवः पुमान् पुँल्लिङ्गः परं नपुंसकम् अन्यत् पदं सत् नपुंसकलिङ्गम् ॥६॥

**स चेद्भवोऽभिधानतो भवान्यसि त्वमव्यये**
**समीर्यते स सद्यदि त्वमम्ब भण्यसे सती ।।**
**न तेऽस्ति भावता न शक्तिरूपिणी हि विद्यसे**
**न वेद्मि कालिके कथं सतोऽसतश्च भिद्यसे ।।७।।**

स चेदिति—अव्यये सम्बोधनं, सः अभिधानतः भवश्चेत् त्वं भवानी असि तस्य भव इति नाम चेत् तव भवानीति नाम। स सत् समीर्यते यदि, अम्ब, त्वं सती भण्यसे स सच्छब्दवाच्यश्चेत् त्वं सतीशब्दवाच्या भवसि ते भावता नास्तीति न तव सत्ता अस्त्येव हि यतः शक्तिरूपिणी विद्यसे। कालिके सम्बुद्धिः कथं सतोऽसतश्च भिद्यसे? न वेद्मि। सदसद्विलक्षणा शक्तिरित्येके प्राहुः, कथं तदुपपद्यते? शक्तिरूपिण्याः तव सत्ता अस्ति। असद्भावो नास्ति। तस्मात् तव सदसद्वैलक्षण्यस्यासम्भवं पश्यामीति भावः ।।७।।

केषाञ्चिन्मते जगन्मूलम् असत्, अन्येषां चितिः, पुनरितरेषां आनन्दः, एवमेकैव देवी वहुधा प्रोच्यत इत्याह।।

**जगद्विधानकार्यतः पुरा सुरासुरस्तुते**
**त्वमम्ब जीवितं भवस्यभावमूलवादिनाम् ।।**
**विकल्पवर्जिता मतिः प्रबोधमूलवादिनां**
**रसोऽनपेक्ष उत्तमः प्रमोदमूलवादिनाम् ।।८।।**

जगदिति— अम्ब सुरासुरस्तुते सम्बोधनं, जगद्विधानकार्यतः पुरा विश्वसर्जनव्यापारात्पूर्वम् अभावमूलवादिनां मते त्वं जीवितं भवसि देवानां पूर्व्ये युगे, 'असतः सदजायत' 'असद्वा इदमग्र आसीत्' 'असदेवेदमग्र आसीत्' इत्यादिमन्त्रवर्णोपनिषद्वाक्यानि जगन्मूलम् अभाव एवेति मन्यमानैराधारतया स्वीक्रियन्ते। तेषाम् अभावमूलवादिनां मते किमपि जगत्क्रियाकारकम् अभिमतम्। तच्च प्राणापरपर्यायं क्रियाधायकं जीवितं भवति, यदेवासि त्वं, येन विना अण्वपि जगत् न चलेत्। नासदीयसूक्ते 'आनीत्' इति पठितं प्राणनपदम् इह स्मर्तव्यम्। अथ प्रबोधमूलवादिनां मते विकल्पवर्जिता मतिः चित्स्वरूपं सत् जगत्कारणं पश्यतां मते चितिरेव तव स्वरूपम्।

प्रमोदमूलवादिनाम् अनपेक्ष उत्तमो रसः आनन्दाज्जगज्जन्म विदतां मते, इतरानपेक्षः स्वतन्त्रः रसपदवाच्य आनन्दस्तव स्वरूपम् ॥८॥

ईश्वरस्य परा चितिः भवानी, उमा, शिवा इति त्रिभिर्नामभिरभिधीयत इति सहेतुकमाह ॥

**भवत्यसावतो भवान्यनादिरन्तवर्जिता**
**जगन्ति माति नित्यमोरसौ तदभ्यधाय्युमा ॥**
**रसात्मिकोश्यतेऽखिलैरसौ ततः शिवोच्यते**
**परैवमीशितुश्चितिस्त्रिधा बुधैरुदीर्यते ॥९॥**

भवतीति— असौ भवति अतः भवानी एषा महाशक्तिः सत्स्वरूपिणी भवतीति भवानी इति व्युत्पत्तेः अनादिः अन्तवर्जिता आद्यन्तवर्जिता कालत्रयेऽपि तस्याः सद्भावादित्यर्थः। ओः उपदवाच्यात् शिवात् असौ महाशक्तिः जगन्ति नित्यं माति भुवनानि परिमाति, बहुसङ्ख्यानि भुवनानि शिवादमेयादुत्पाद्यमानानि मितानि भवन्ति देव्या। मातीति मा मानशक्तिः तत् तस्मात् उमा अभ्यधायि उमेत्युक्तेत्यर्थः। उमा उः शिवः, ओः तस्य शिवस्य मा मानशक्तिः। उमापदनिर्वचनम् इदम् अपूर्वं कविकल्पितमपि तत्त्वबोधकतया रसावहं भवति। कविनाऽन्यत्र उम् आ इति वर्णद्वयात्मकः उमाशब्द एव आ उम् इति व्यत्यस्तो भूत्वा ओङ्कारः प्रणवात्मा जात इति चमत्कृतम्। कालिदासस्य निर्वचनं 'उमेति मात्रा तपसो निषिद्धा, तस्मादुमाख्यां सुमुखी जगाम' इति प्रसिद्धम् ॥

अखिलैः असौ रसात्मिका उश्यते, ततः शिवा उच्यते रसः आनन्दः उश्यते काम्यते वश कान्तौ इति धातोः वर्णव्यत्ययतः सिद्धः शिवशब्दः, आनन्दस्वरूपतया सर्वैरप्यसौ काम्यमानत्वात् शिवा इत्युच्यते। एवम् ईशितुः परा चितिः बुधैः त्रिधा उदीर्यते । स्पष्टम् ॥९॥

अथ परा चितिः इच्छा-क्रिया-ज्ञानात्मकं त्रैविध्यं भजत इत्याह ॥

**चितिः परैव कामना रसेन केनचिद्युता**
**चितिः परैव सर्वदाऽप्यनन्त्यजस्य तु क्रिया ॥**

**चितिः परैव गोचरावभासिका मतिः स्मृता**
**त्रितैवमन्यथा चितेश्चिरन्तनैरुदीर्यते ॥१०॥**

चितिरिति— परा चितिरेव केनचिद्रसेन युता कामना भवतीति शेषः। रसेन आनन्देन अनुभवयोग्येन युता चित् इच्छा भवति सैव कामना, इच्छात एव आनन्दात्सर्जनस्य सम्भवः। अत एव प्राक् सृष्टेः 'सोऽकामयत' इति श्रूयते। केनचित् अनिर्वाच्येन रसेन भोगेच्छाविषयभूतेनेत्यर्थः॥

क्रिया तु सर्वदाऽपि अनन्ती अजस्य परा चितिरेव, तु भेदार्थकं कामनातो भिन्ना क्रिया, सर्वदा अनवरतम् अनन्ती प्राणन्ती अजस्य पुरुषस्य परा चिदेव नान्या। सृष्टेः पूर्वमपि प्राणन्नेवासीत्पुरुषः, तच्च अननं चिद्व्यापार एव। अत्र मन्त्रवर्णो भवति—'आनीदवातं स्वधया तदेकम्' इति तदेकं सत् अवातं सृष्टेः पूर्वं वायोरसत्त्वात् श्वसितसाधनवायुनिरपेक्षं रसरूपया स्वधयोपलक्षितम् आनीत् श्वसदेवासीदित्यर्थः। एवम् इच्छात्मिकां क्रियात्मिकां च परां चितिम् उक्त्वा ज्ञानात्मिकामाह। परा चितिरेव गोचरावभासिका मतिः स्मृता गोचरावभासिका विषयप्रकाशिका परा चितिरेव मतिः स्मृता ज्ञानशब्दवाच्या भवतीत्यर्थः। एवं चिरन्तनैः बहोः कालाद् वृद्धैर्विज्ञैः चितेः त्रिता त्रित्वं त्रिप्रकारत्वम् अन्यथा उदीर्यते प्रकारान्तरेणोच्यते। पूर्वश्लोके भवानी, उमा, शिवेति एकः त्रित्वप्रकारश्चितेरुक्तः। इह अन्यः प्रकारः। अत एव अन्यथेति उक्तम्॥१०॥

देव्याः ईश्वरशक्तित्वात् ईश्वरादभेदे सिद्धेऽपि तस्याः पृथग्भावस्य लक्ष्यमाणत्वमाह॥

**चिकीर्षति प्रभौ ज्वलत्त्वदीयकीलसन्तते-**
**र्विकीर्णधूमजालमेतदम्बरस्थलं ततम्॥**
**विसृष्टितः पुराऽसि या शिवप्रभुत्वरूपिणी**
**पृथक्प्रभुश्च लक्षिताऽसि सा सवित्रि पुष्करे ॥११॥**

चिकीर्षतीति— प्रभौ ईश्वरे ततम् एतदम्बरस्थलम् उद्देश्यं व्याप्तं अस्मदक्षिप्रत्यक्षं स्थितं ज्वलत्त्वदीयकीलसन्ततेः अपादानं, ज्वलन्त्यास्तव ज्वालामालातः विकीर्णधूमजालं विधेयं, विकीर्णानि विक्षिप्तानि धूमजालानि

यस्मिन् तत् चिकीर्षति कर्तुमिच्छति सति, यदा ईश्वरः सर्वत्र नभःस्थले अतिसूक्ष्मधूमोपमं स्वीयं द्रव्यं विक्षेप्तुमिच्छति इत्यर्थः, तदा विसृष्टितः पुरा प्राक् सृष्टेः या प्रभुत्वरूपिणी असि ईशितृत्वसामर्थ्यरूपेण स्थिताऽसि। सा त्वं हे सवित्रि जगज्जनयित्रि, पुष्करे पृथक् प्रभुश्च लक्षिताऽसि स्वयं प्रभुरूपेणापि प्रत्येकं सृष्ट्याधारे आकाशे लब्धरूपाऽसि। सृष्टेः पूर्वं पुरुषादपृथग्भावेन प्रभुत्वरूपेण स्थिता शक्तिः सृष्टौ प्रवर्तमानायां पृथग्भावेन प्रभ्वी अभ्यलक्षीति भावः ॥११॥

काव्यभाषया सृष्टिपद्धतिं रूपयिष्यति। तत्र प्रथमं नक्षत्रमण्डलविधानमाह ॥

**पुनर्विपाकतो घनीभवद्भिरक्षिगोचरै-**
**स्ततस्ततः समुज्ज्वलैः खसूक्ष्मरेणुगोलकैः ॥**
**अजाण्डवृक्षकोटिकन्दवृन्दवद्व्यधाः पुरा**
**महेशदृष्टिमय्युमेऽम्ब मण्डलानि भास्वताम् ॥१२॥**

पुनरिति— पुनः विपाकतः पूर्वश्लोकोक्तानां धूमसदृशसूक्ष्मद्रव्याणाम् अम्बरे विसृष्टानां पाकवशात् परिणामविशेषेणेत्यर्थः। घनीभवद्भिः घनभावं प्राप्तैः अक्षिगोचरैः दृश्यैः ततस्ततः उपर्युपरि पाकप्रभावात् क्रमेणेत्यर्थः। समुज्ज्वलैः दीप्यमानैः खसूक्ष्मरेणुगोलकैः खम् आकाशः तत्र सूक्ष्मरेणवः अणवः तेषां गोलाकाराः पिण्डाः तैः गोलकैः उपादानभूतैः भास्वतां मण्डलानि सूर्याणां मण्डलानि, दीप्तिमतां नक्षत्राणां मण्डलानि वा, सूर्याणामेव अत्यन्तविप्रकृष्टत्वात् नक्षत्रात्मना दृश्यमानत्वं कवेरभिमतम्। अजाण्डवृक्षकोटिकन्दवृन्दवत् अजाण्डा एव वृक्षाः तेषां कोटीनां बहुसङ्ख्याकानां कन्दानां मूलांशानां वृन्देन तुल्यं व्यधाः त्वं विहितवतीत्यर्थः। वृक्षकोटीनां कन्दवृन्दानीव ब्रह्माण्डकोटीनां मूलमण्डलानि आकाशे नक्षत्रमण्डलाकारेण व्यवस्थापितवतीत्यर्थः। बहुग्रहात्मकस्य एकैकस्यापि सूर्यकुटुम्बस्य तत्तत्कुटुम्बमूलभूतः सूर्य एवेति हेतोः वृक्षस्य कन्द इव सूर्यो ब्रह्माण्डस्येति रूपितम्। अम्ब, उमे, महेशदृष्टिमयि इति सम्बोधनानि। महेशदृष्टिमयि, 'तदैक्षत' इति ईक्षैव सृष्टेर्निमित्तम् आहुरौपनिषदाः। सा दृष्टिः जगन्निमित्तकारणं तपश्शक्तिरिति प्राग्व्याख्यातम्। तस्मान्महेशदृष्टिमयीति महा-

शक्तिसम्बोधनमुपपन्नम्। अत्र मयटः प्राचुर्यम् अर्थः विकारो वा स्यात्। प्राचुर्ये आनन्दमयवत् स्वरूपपरं भवति। विकारार्थे तु सुवर्णस्य कटककुण्डलादिवत् महेशदृष्टेर्नानाविधकृत्यपरायणा महाशक्तिरित्यलं विस्तरेण ॥१२॥

अथ छन्दोगैराम्नातां तेजोऽबन्नमयीं सृष्टिमनूद्य स्वाभिमतमाह। आकाशादिपञ्चभूतसिद्धान्तदृशस्तैत्तिरीयकाः, तेजः, अप्, अन्नमिति त्रिधातुरूपं सर्गं पश्यन्ति छन्दोगाः। कवेराचार्यस्य द्वितीयमिष्टम्। इदं त्विहावधेयम्। तेजश्शब्देन प्रकाशकत्वगुणकद्रव्यविशेषो ग्राह्यः, अप्छब्देन क्षरणधर्मकः द्रुतिशीलो द्रव्यविशेषः, अन्नपदेन प्रकाशकत्व-द्रुतिमत्त्वविवर्जं घनं द्रव्यं यदेव पार्थिवमुच्यते ॥

**तपोऽग्निधूमजालके भवन्ति तैजसाणवो**
**भवन्ति जीवनाणवो भवन्ति पार्थिवाणवः ॥**
**क्रमेण तद्विसृष्टिरीशशक्तिपाकवैभवे**
**सहस्रभानुमण्डलं तु गोचरादि गृह्यताम् ॥१३॥**

तप इति— तपोऽग्निधूमजालके तैजसाणवो भवन्ति अग्नेर्धूम इव तपसोऽम्बरक्षेत्रे सृष्ट्यादौ तैजसाः अणवः अत्यन्तसूक्ष्माः आविर्भवन्ति। जीवनाणवः भवन्ति आप्याणवः जायन्ते, जीवनम् अप्पर्यायः, पार्थिवाणवो भवन्ति घनाः भौमाणव उत्पद्यन्ते। क्रमेण तद्विसृष्टिः प्रथमं तैजसाणवः, ततो जीवनाणवः, ततः पार्थिवाणव इति क्रमशः तेषां सृष्टिः। कथमिमानि जायन्ते? आह। ईशशक्तिपाकवैभवे निमित्तसप्तमी, ईशशक्तिकार्यपरिपाकप्रभावादित्यर्थः। सहस्रभानुमण्डलं तु सूर्यमण्डलमेव गोचरादि गोचराणां प्रत्यक्षविषयाणाम् आदि मूलं गृह्यताम् इति ज्ञायताम् ॥१३॥

कुजादीनां ग्रहाणां सूर्यमण्डलादेवोत्पत्तिरित्याशयेन सूर्यमण्डलस्य गोचरादित्वमुक्तम्। तदुत्तरश्लोकेनाह ॥

**मयूखमालिमण्डले निधाय पादमुग्रया**
**मयूखशक्तिरूपया त्वयाऽम्ब चेष्टमानया ॥**
**खकोशतः समाहृतैः पुनस्त्रिरूपरेणुभि-**
**र्व्यधायि मङ्गलादिभिः सह ग्रहैरियं मही ॥१४॥**

मयूखेति— अम्ब, मयूखमालिमण्डले सूर्यमण्डले उग्रया तीव्रया चेष्टमानया व्याप्रियमाणया मयूखशक्तिरूपया रश्मिशक्त्याकारया त्वया पादं निधाय चरणं निक्षिप्य खकोशतः आकाशनिधानात् समाहृतैः पुनः सङ्गृहीतैः त्रिरूपरेणुभिः तेजोऽबन्नाणुभिः उपादानद्रव्यैः इयं मही पृथ्वी मङ्गलादिभिः ग्रहैः सह कुजादिग्रहैः सह व्यधायि निरमायि। सूर्यमण्डले पादनिक्षेपः महाननुग्रहः येन तद्द्वारा ग्रहाणामुत्पत्तिरुक्ता। वस्तुतस्तु पादोऽत्र अंशवाचकः एकेनांशेन विश्वसृष्टिं प्रतिपादयितुं प्रयुक्तः 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति मन्त्रवर्णश्च भवति ॥१४॥

पृथ्व्याः सृष्टिमुक्त्वा चन्द्रस्याह ॥

**विसर्जनेन भूयसाऽपि देव्यतृप्तयेयता**
**विचेष्टितं विलक्षणं पुनर्व्यधीयत त्वया ॥**
**इहान्तरे वसुन्धरा-मयूखमालिबिम्बयो-**
**रमुष्य कर्मणः सवित्रि चन्द्रमण्डलं फलम् ॥१५॥**

विसर्जनेनेति— देवि, इयता भूयसाऽपि विसर्जनेन अतृप्तया त्वया विलक्षणं विचेष्टितं पुनः व्यधीयत। अम्ब, ईदृशं बृहन्तं सर्गं विधायापि त्वं न तृप्ताऽभवः। अतः असाधारणं किमपि कर्म त्वयाऽऽचरितं, सृष्टिरेव विसृष्टिर्विसर्जनं वोच्यते। ईश्वरस्य स्वात्मनः कस्याप्यर्थस्य विसर्जनमेव सृष्टिरित्यभिधीयते, सैषा प्राचां भाषया विसृष्टिर्भवति 'इयं विसृष्टिर्यत आबभूव' इति पारमेष्ठिने सूक्ते, अन्यत्रापि ऋक्संहितायां गीयते। किमपि विलक्षणं विचेष्टितं पूर्वार्धे कथितम्। तस्य फलं चन्द्रमण्डलमित्यपरार्धेनाह। वसुन्धरा-मयूखमालिबिम्बयोः अन्तरे इह चन्द्रमण्डलम् अमुष्य कर्मणः फलम् अभूदित्यध्याहार्यम्। तस्य विलक्षणचेष्टितस्य फलमेव चन्द्रमण्डलं यद् भूलोकसूर्यमण्डलयोर्मध्ये प्रादुर्भूय राजते। एवं महाशक्तेः विश्वसर्गविधानं सङ्क्षेपेणोक्तम् ॥१५॥

अथ लीलास्वीकृतस्त्री-पुरुषाकृत्योः ईश्वरयोः अवस्थानमुपन्यस्यते ॥

**वधू-पुमाकृती ततो बभूवथुर्युवां शिवे**
**त्वमीश्वरश्च लीलया विहर्तुमत्र विष्टपे ॥**

**अहो प्रभुं नभस्तनुं त्वदीयगर्भसम्भवा-**
**द्भणन्ति कालि तत्र चित्रभाषणास्त्वदात्मजम् ॥१६॥**

वधू-पुमिति– ततो युवां त्वमीश्वरश्च अत्र विष्टपे लीलया विहर्तुं बभूवथुः स्पष्टम्। विष्टपे जगति। वधू-पुमाकृती स्त्री-पुरुषाकारौ। अत्र आकारस्य दिव्यत्वं बोध्यं, न तु भौतिक-करचरणाद्यवयवत्वं, व्यक्तित्व-मभिप्रेतम्। तत्र तस्मिन् विषये हे कालि चित्रभाषणाः विचित्रवचनाः नभस्तनुं प्रभुम् आकाशशरीरम् ईश्वरं त्वदात्मजं भणन्ति तव पुत्रं वदन्ति। कुतः? त्वदीयगर्भसम्भवात् ईश्वरस्य पुरुषाकृतिस्वीकारेण आदित्यमण्डला-न्तरहिरण्मयः पुरुषः अभिप्रेतः, उत्तरश्लोकेषु स्पष्टो भवति। अदितिपुत्र-त्वादादित्यस्य, महाशक्तेश्चादितिनाम्नाऽऽख्येयत्वात् च आदित्यमण्डलस्थ-पुरुषस्य महाशक्तिसम्भवत्वमाहुः। महान्तम् आकाशशरीरं प्रभुं पतिं पुत्रं वदन्तीति चित्रमेवैतत्। नभस्तनु इति पाठे आकाशशरीरे अम्ब इति सम्बोधनम्॥१६॥

पुरुषं हिरण्मयम् आचष्टे॥

**पुमानथो स बिम्बतो हिरण्मयो दिवाकरे**
**धियाऽपि नैव केवलं हिरण्मयेन वर्ष्मणा॥**
**इदं तु कार्यरूपमन्यदुच्यते बुधैः प्रभो-**
**रिहान्तरे नृणां पुनर्वपुस्तदम्ब बिम्बितम् ॥१७॥**

पुमानथो इति– अथो अथ स दिवाकरे पुमान् बिम्बतो हिरण्मयः धियाऽपि ज्ञानेनापि हिरण्मयः न केवलं हिरण्मयेन वर्ष्मणैव आदित्यमण्डले यः पुरुषः श्रुतिषु गीयमानः भ्राजते स बिम्बतः आकारेण ज्ञानेन वपुषा च सौवर्ण इति भावः। हिरण्मयत्वं सौवर्ण दिव्यत्वाभिप्रायम्, अस्मदादि-परिचितभौतिकाकृत्यादिवैलक्षण्यादि-द्योतनार्थकं ग्राह्यम्। यास्कस्तु हित-रमणीयं हिरण्यमिति निर्वक्ति। एवमपि न बाधः दिव्यत्वस्य हितत्वाद्र-मणीयत्वाच्च। आदित्यमण्डलस्थः ब्रह्माण्डस्य मध्यवर्ती कारणपुरुषः तस्य वपुः कार्यरूपं मानवेषु हृदये प्रतिफलितमित्युत्तरार्धेनाह। अम्ब, इदं तु अन्यत् कार्यरूपं प्रभोः वपुः इह नृणाम् अन्तरे पुनः बिम्बितं बुधैरुच्यते

कारणरूपस्य हिरण्मयपुरुषस्य सौवर्णं तैजसं शरीरं मनुष्यहृदये प्राप्ताकारं भवतीत्यर्थः। अत एव सर्वासां विद्यानां दहरविद्यायाः प्राधान्यम् उपनिषत्सु श्रूयते। 'मध्ये वामनमासीनं विश्वे देवा उपासते' इति हृदयस्थं पुरुषमधिकृत्य स्तुवदेवंजातीयकं वाक्यमुपपद्यते ॥

पुनः कारणरूपादन्यद्रूपं सृष्टं कथयितुम्। अन्तरं हृदयवाचि। बिम्बितम् घनम् आकृतिमज्जातं, न त्वादर्शबिम्बमिव घनत्वादियाथार्थ्यरहितम् ॥१७॥

यद्येवं पुरुषो बिम्बितः, शक्तिरपि तेन सह बिम्बितेत्याह ॥

**स्वयं च काञ्चनप्रकाशवर्ष्मणा प्रभाकरे**
**तथाऽन्तरे नृणां च तस्य बिम्बिताऽसि सन्निधौ ॥**
**रसस्य देवताऽसि देवि पुष्करे दिवाकरे**
**मयूखदेवताऽसि भोगदेवताऽसि देहिषु ॥१८॥**

स्वयमिति– देवि! स्वयं प्रभाकरे काञ्चनप्रकाशवर्ष्मणा, तथा नृणामन्तरे च तस्य सन्निधौ बिम्बिताऽसि अमुत्र आदित्ये इह नृहृदये च पुरुषस्य सन्निधौ उभयत्र हिरण्मयप्रकाशदेहेन बिम्बिता, दीपस्य दीपिकेव शक्तस्य शक्तिस्त्वं राजसे। भूर्भुवःस्वराख्यत्रैलोक्ये देव्याः देवतारूपभेदं कथयत्युत्तरार्धेन। पुष्करे रसस्य देवताऽसि आकाशे भुवर्लोके अन्तरिक्षे. पृथ्वीभास्करयोर्मध्ये रसाधिदेवतारूपेण वर्तसे, सोमकलारूपेणावतिष्ठस इत्यर्थः। सोमो भूत्वा रसात्मकः इति हि स्मर्यते। पवमानं रसात्मकं सोममधिकृत्य ऋग्वेद एव स्तौति नवमे मण्डले। तान्त्रिकाश्च श्रीविद्यां नित्यचन्द्रकलामुपासते।

दिवाकरे मयूखदेवताऽसि जगज्जीवनाधारभूतधर्मप्रकाशाद्याविष्कर्त्री रश्मिदेवता दीप्यसे स्वर्लोके इत्यर्थः। भोगदेवताऽसि देहिषु भूलोके अस्मदादिषु भोक्तृत्वसामर्थ्यविशिष्टाग्निशक्तिस्वरूपा ज्वलसीत्यर्थः। रसापरपर्यायस्य अमृतात्मनः सोमस्य भोग्यत्वम् अग्नेर्भोक्तृत्वं च श्रुतिमतम्। 'सोमो वा अन्नम् अग्निरन्नाद' इति हि ब्राह्मणम्। पृथ्व्याः अग्निदेवताकत्वात् भूजुषामध्यात्ममग्निर्भोक्तेत्युपपद्यते ॥१८॥

एवं सोमसूर्याग्निशक्तिदेवतामयीं त्रिलोकव्यापारां प्रतिपाद्य ईश्वरेण सहेश्वर्याः पुनः मनुष्यलोक-पितृलोक-देवलोकाधिष्ठानमाह ॥

**विसर्जनेन भूयसा नभस्यमुत्र भास्करे**
**महीषु चाम्बिके युवां विधाय देहिनो बहून् ॥**
**क्षितेः सुधाकरं गतान्पितॄन्विनेतुमव्यये**
**तनू च तत्र बभ्रथुः प्रपञ्चराज्ञि मायया ॥१९॥**

विसर्जनेनेति– नभसि अन्तरिक्षे भुवर्लोके अमुत्र भास्करे आदित्यलोके महीषु पृथ्वीलोकेषु च बह्वृचो भुवः वेदेषु गीयन्ते तिस्रः पृथिव्यः इति, कुजादिग्रहाणामुपलक्षणं वा स्यात्। हे अम्बिके युवाम् ईश्वरौ भूयसा विसर्जनेन भूरिसृष्ट्या बहून् देहिनो विधाय तत्तल्लोकोचितान् जीवराशीन् देवसमूहान्वा उत्पाद्य, क्षितेः पृथ्व्याः अपादानं, सुधाकरं गतान् पितॄन् चन्द्रलोकम् इतः प्रेत्य धूमादिमार्गेण प्राप्तान् पितॄन् विनेतुं सम्यक् शासनाय तनू च बभ्रथुः पुरुषः शक्तिश्च पृथक् स्वं स्वम् उचितं देहं स्वीकृतवन्तावित्यर्थः। मायया लीलाशरीरग्रहणाभिप्रायमेतत्। अव्यये सम्बोधनम्, अक्षय्ये प्रपञ्चराज्ञि सम्बोधनं, जगदधीश्वरि ॥१९॥

भर्भुवःस्वर्लोकेषु अधिष्ठानतया विराजमानं पुरुषमूर्तिभेदं त्रिमूर्तिवादिनामाशयानुसारेणाह ॥

**नभोऽन्तरे हिरण्मयं विभुं प्रचक्षते हरं**
**दिनेशबिम्बबिम्बितं भणन्ति पङ्कजासनम् ॥**
**इहास्मदन्तरालयं वदन्ति विष्णुमच्युतं**
**सवित्रि जन्मिनामियं त्रिमूर्तिवादिधोरणी ॥२०॥**

नभोऽन्तरे इति– जन्मिनां सवित्रि देहिनां जनयित्रि! नभोऽन्तरे अन्तरिक्षान्तरे आकाशादपि सूक्ष्मं विभुं व्यापकं हिरण्मयं पुरुषं हरं प्रचक्षते शिवमाहुः। दिनेशबिम्बबिम्बितं पङ्कजासनं भणन्ति सूर्यमण्डलान्तर्वर्तिनं पुरुषं ब्रह्माणं ब्रुवन्ति। इह अस्मदन्तरालयम् अच्युतं विष्णु वदन्ति अत्र भूलोके अस्माकं हृदयमाश्रित्य तिष्ठन्तं विष्णु गायन्ति। इयं त्रिमूर्तिवादिधोरणी। स्पष्टम्। धोरणी सम्प्रदाय इत्यर्थः ॥२०॥

पौराणिकमूर्तित्रयमुक्तम्। वेदान्तिनां मतमुपपादयति॥

**नभोऽन्तरे प्रचक्षते हिरण्मयाङ्गमीश्वरं**
**दिनेशबिम्बपूरुषं हिरण्यगर्भमाख्यया॥**
**विराजमानमक्षरं विराजमन्तरे नृणां**
**सवित्रि तत्त्ववेदिनामियं तु नामकल्पना॥२१॥**

नभोऽन्तरे इति– नभोऽन्तरे हिरण्मयाङ्गम् ईश्वरं प्रचक्षते दिनेशबिम्बपूरुषम् आख्यया हिरण्यगर्भं नृणाम् अन्तरे विराजमानम् अक्षरं विराजं प्रचक्षत इति शेषः। विराट् हिरण्यगर्भ ईश्वरः त्रयः पुरुषाः क्रमशः हृदये आदित्ये अन्तरिक्षे च कीर्तिताः। सवित्रि सम्बोधनम्, इयं तु तत्त्ववेदिनां नामकल्पना। स्पष्टम्॥२१॥

अथ प्राचीनं वैदिकं मतमनुसृत्य मूर्तित्रयमुपपादयति॥

**हिरण्मयाङ्गमम्बरे वदन्ति सोममम्बिके[1]**
**दिवाकरस्य मण्डले तु बिम्बितं पुरन्दरम्॥**
**शरीरिणामिहान्तरेऽग्निमालपन्ति भासुरं**
**चिरन्तनोक्तिदर्शिनामियं शिवे प्रणालिका॥२२॥**

हिरण्मयेति– अम्बरे अन्तरिक्षे भुवर्लोके हिरण्मयाङ्गम् ज्योतिर्मयं पुरुषं सोमं वदन्ति, हे अम्बिके! दिवाकरस्य मण्डले बिम्बितं तु पुरन्दरम् इन्द्रं वदन्तीति शेषः, इन्द्रस्य सूर्यात्मनाऽवस्थितत्वं वेदे प्रसिद्धम्। मन्त्रदृष्टिश्च भवति 'यदद्य कच्च वृत्रहन् उदगा अभि सूर्य। सर्वं तदिन्द्र ते वशे'॥ इति। इह शरीरिणामस्माकमन्तरे हृदये भासुरं पुरुषम् अग्निमालपन्ति। हे शिवे! चिरन्तनोक्तिदर्शिनां मन्त्रद्रष्टॄणामियं प्रणालिका पद्धतिरित्यर्थः। अतीतेषु सर्वत्र श्लोकेषु हिरण्मयत्वं दिव्यत्वगमकज्योतिर्मयत्वेन ग्राह्यम्॥२२॥

अथ पञ्चमूर्तिवादिनां मतमुपपादयति॥

---

[1]'लोकधात्रि कम्' इति पाठभेदः। 'कं' प्रजापतिम्।

**सरोरुहाक्ष-वाग्वधूमनोहरौ तु पूर्वव-**
**त्सुधांशुबिम्बपूरुषस्तु रुद्रसंज्ञकः शिवे ।।**
**हिरण्मयोऽन्तरिक्षजात ईश्वरः सदाशिवः**
**सदेव वस्तु काञ्चनाङ्गि पञ्चमूर्तिवादिनाम् ।।२३।।**

सरोरुहेति— ब्रह्म-विष्णु-रुद्र-महेश्वर-सदाशिवाख्याः पञ्चमूर्तयः शैव-शाक्तागमप्रसिद्धाः। सरोरुहाक्ष-वाग्वधूमनोहरौ तु पूर्ववत् सरोरुहाक्षः विष्णुः वाग्वधूमनोहरो ब्रह्मा च पूर्ववत् आदित्यालयो ब्रह्मा अस्मदन्तरालयश्च विष्णुरिति भावः। हे शिवे! सुधांशुबिम्बपुरुषस्तु रुद्रसंज्ञकः सोममण्डलस्थः रुद्रमूर्तिरित्यर्थः। अन्तरिक्षजातः हिरण्यमयः ईश्वरः भुवर्लोकाधिष्ठाता व्यापको महेश्वरः। सदेव वस्तु परं ब्रह्म सदाशिवः। हे काञ्चनाङ्गि हिरण्मयगात्रि! पञ्चमूर्तिवादिनां सिद्धान्त इत्यर्थः ।।२३।।

अथ प्रथम-द्वितीयस्तबकयोः प्राधान्येन प्रतिपादितानि महेश्वर्याः षड्-रूपाणि क्रमेणाह प्रभोरित्यादिना ।।

**प्रभोः प्रमाऽऽदितस्ततः प्रमावती स्वयं पृथ-**
**ग्विहायसा शरीरिणी प्रभौ ततो हिरण्मये ।।**
**हिरण्मयाङ्गनाकृतिर्नभोऽन्तरे च भास्करे**
**तथाऽन्तरेषु देहिनां महेश्वरी जयत्युमा ।।२४।।**

प्रभोरिति — तत्र प्रथमं त्रिरूपं प्राक्सृष्टेः, द्वितीयं रूपत्रयं सृष्टिसापेक्षमिति च ज्ञेयम्। आदितः आदौ प्रभोः पुरुषस्य प्रमा चित्, ततः स्वयं पृथक् प्रमावती ज्ञानवती, प्रथमम् अव्यक्तात्पुरुषात्परस्मादभिन्ना तस्य चित्तपस्स्वरूपिणी, द्वितीयं स्वरूपं तु पृथगात्मतया सर्गनिमित्तभूता शक्तिः, तृतीयं तु विहायसा शरीरिणी आकाशेन शरीरवती, 'दक्षाददिति'रिति प्रथमस्तबके पठितम्। ततो नभोऽन्तरे भूर्भुवःस्वराख्यत्रैलोक्यसर्गान्तःपातिन्यन्तरिक्षे हिरण्मये प्रभौ पुरुषे हिरण्मयाङ्गनाकृतिः, तथा भास्करे आदित्ये देहिनामन्तरेषु हृदयेषु च उमा महेश्वरी जयति उत्कर्षेण वर्तते ।।२४।।

स्तबकमुपसंहरति ।।

**मदीयमम्बिकाऽखिलस्य विष्टपस्य दुष्टधी-**
**दविष्ठपादपङ्कजा धुनोतु कष्टजालकम् ॥**
**इमे च कोमलैः पदैरमूल्यतल्पशालिन-**
**स्तदीयमञ्चरूपतां भजन्तु पञ्चचामराः ॥२५॥**

मदीयमिति— अखिलस्य विष्टपस्य अम्बिका सकलभुवनमाता, कीदृशी ? दुष्टधीदविष्ठपादपङ्कजा दुर्बुद्धीनां दूरतमे दुर्लभे अस्याः पादारविन्दे इत्यर्थः। मदीयं कष्टजालकं धुनोतु हरत्विति भावः। कोमलैः ललितैः पदैः रचिताः अमूल्यतल्पशालिनः अनर्घशय्याशोभिनः पञ्चचामराः एतदाख्यवृत्तकल्पिताः श्लोकाः तदीयमञ्चरूपतां भजन्तु तस्याः मञ्चाकारतां प्राप्नुवन्तु। तल्पः शय्यावाचकः, पदानां याऽन्योन्यमैत्री सा शय्येत्याहुः। बन्धस्य परिवृत्तिसहिष्णुत्वाभावः शब्दपाकः, पदान्तरासहिष्णुत्वं शय्या इत्येके। शय्याशब्दपाकयोर्भेदः सौरभ-परिमलयोरिव सूक्ष्मोऽवगन्तव्यः। पञ्चचामराणां मञ्चस्थानीयत्वं काव्यबन्धविशेषरूपशय्या तल्पस्थानीया। एवं तल्पे श्लेषो बोध्यः। कोमलैः पदैरित्यत्रापि सरलवर्णसमुदायनिर्मितः काव्यबन्धविशेषः शय्यावाच्यः। ललितैः अङ्कैः कलाचित्रितैः रचितस्तल्पः, एवं सरलवर्णसमुदायानां ललितकलाचित्रिताङ्कस्थानीयत्वं च बोध्यम्। पुरुषसहचर्याः महेश्वर्याः, सह पत्या रहसि विलसितं स्यात्पर्यङ्के इव मदीयेऽस्मिन् पञ्चचामरस्तबके इति मञ्चपदेन ध्वनितम्। सर्वत्रेश्वरोपन्यासमुखेनैव ईश्वर्याः स्वरूपविवरणात्, तस्याः पृथग्वर्तनेऽपि ईश्वरादवियोज्यत्वाच्च औचित्यपोषकं मञ्चत्वारोपणं पञ्चचामरेष्वित्यलम्। कोमलपदामूल्यतल्पेषु श्लेषः। पञ्चचामराणां वृत्तानां मञ्चत्वेनारोपणाद्रूपकमलङ्कारः॥२५॥

द्वितीयः स्तबकः सव्याख्यः समाप्तः॥

# तृतीयः स्तबकः

स्तबकेऽस्मिन् परस्य पुरुषस्य शक्तेश्च शरीरवत्ता अस्ति न वेति विकल्पभेदानुपन्यस्य उभावपि लीलाविग्रहधारिणौ प्रतिपाद्य तत्त्वतस्तयोः स्तुतिर्गीता ॥

**शुभ्रस्मितलेशो मातुर्मरुतान्नः ॥**
**अन्तस्तिमिराणामन्तं विदधातु ॥१॥**

शुभ्रेति— मरुतां मातुः शचीदेव्याः शुभ्रस्मितलेशः शुचिर्मन्दहासः नः अस्माकम् अन्तस्तिमिराणाम् अन्तर्वर्तिनामन्धकाराणां नानाविधाज्ञानानाम् अन्तं विदधातु प्रध्वंसयत्वित्यर्थः। मरुतां पिता इन्द्रः स च परमेश्वरः इन्दतेर्निष्पन्नत्वात्। तस्मादिन्द्रशक्तिः शची, ईश्वरी भवति; इन्द्राणीत्यप्युच्यते ॥१॥

**आद्यौ भुवनानां माता-पितरौ तौ ॥**
**देवासुरमर्त्यैर्वन्द्यावविनिन्द्यौ ॥२॥**

आद्याविति— तौ इन्द्र इन्द्राणी च आद्यौ तयोः पूर्वं न कोऽपि जातः, वस्तुतः अजातत्वेऽपि सृष्ट्यपेक्षया मिथुनं जातौ, भुवनानां माता-पितरौ देवासुर-मर्त्यैः वन्द्यौ स्तुत्यौ अविनिन्द्यौ अनवद्यौ जगद्व्यापारे स्वयं नियुक्तावपि तद्दोषैरबाधितत्वात् तयोः अनवद्यत्वं बोध्यम्। अत एवाविनिन्द्यौ ॥२॥

**ब्रूते पृथगेकस्तौ विग्रहवन्तौ ॥**
**आहैकशरीरं द्वन्द्वं कविरन्यः ॥३॥**

ब्रूत इति— तावधिकृत्य बहूनि मतानि सन्ति। तत्र एकः, तौ पृथक् विग्रहवन्तौ ब्रूते तयोः पृथक् शरीरे स्त इति वदति। अन्यः कविः क्रान्तदर्शी एकशरीरं द्वन्द्वमाह। स्त्री-पुंसयोरेकमेव शरीरं द्विधा विभक्तं ब्रवीति। अत एव अर्धनारीश्वरव्यवहारो लोके। कविः कल्पनासमर्थो वा येन

ईश्वरयोरवियोज्यत्वद्योतनाय कर-चरणाद्यवयवत्वं प्रकल्प्य द्विधा विभज्य ईश्वर्या वामभागो दक्षिणभाग ईश्वरस्य न्यस्तौ ॥३॥

**शक्तिं तनुशून्या-　मीशं च पुमांसम् ॥**
**वक्ति प्रमदायां　सन्देहयुतोऽन्यः ॥४॥**

शक्तिरिति— अन्यः वक्ति ब्रूते। किम्? प्रमदायां स्त्रियां सन्देहयुतः सोऽन्यः शक्तिं तनुशून्याम् शरीररहिताम् ईशं पुमांसं च पुरुषशरीरयुक्तं च वक्तीति शेषः। ईशस्यैवास्ति शरीरं न शक्तेरिति मन्यते। शक्तेः पृथगात्मत्वविषये सन्देहवानन्यः, शक्ते पुरुषे शक्तेरन्तर्भावादिति हेतोः ॥४॥

**ईशं च तमेके　सन्मात्रमुशन्ति ॥**
**ब्रह्मैकमथान्ये　गायन्ति न शक्तिम् ॥५॥**

ईशमिति— तम् ईशं च शरीरवानीश इति यः प्रोक्तः तमपि सन्मात्रमुशन्ति केवलं सत्स्वरूपमेवेति कामयन्ते अभिप्रयन्तीत्यर्थः। वश कान्ताविति धातोः प्रथमपुरुषबहुवचनरूपम् उशन्ति। अथ अन्ये न शक्तिं गायन्ति, एकं ब्रह्म गायन्ति यथोपनिषत्सु ॥५॥

**केचित्तनुहीनं　प्रज्ञायुतमीशम् ॥**
**शक्तिं विदुरस्य　प्रज्ञामविकुण्ठाम् ॥६॥**

केचिदिति— केचित् ईशं प्रज्ञायुतं किन्तु तनुहीनम् अशरीरं, अस्य ईशस्य अविकुण्ठाम् अप्रतिहतां तीव्रां प्रज्ञां शक्तिं विदुः। ईशस्य अशरीरस्य स्वतन्त्रा प्रज्ञैव शक्तिरित्याहुरित्याशयः ॥६॥

**उक्तं दधतस्तैः　केचित्पुनराहुः ॥**
**मायातनुबन्धं　नाथस्य न शक्तेः ॥७॥**

उक्तमिति— केचित्पुनः, ये केचन ईशः प्रज्ञायुतः तस्य प्रज्ञैव शक्तिरित्याहुः तैरुक्तं प्रज्ञात्मकशक्तिविशिष्टत्वं दधतः धारयमाणस्य नाथस्य

ईश्वरस्य मायातनुबन्धं मायया लीलया तनुबन्धः शरीरस्वीकारः तम् आहुः, न शक्तेः। लीलाशरीरवत्त्वं नाथस्यास्ति, न तु शक्तेरिति मन्यन्त इति भावः ॥७॥

**नित्यं सशरीरौ येषां पितरौ तौ ॥**
**एकोऽप्यथवा तान् प्रत्याह निसर्गः ॥८॥**

नित्यमिति– येषां मते तौ पितरौ ईश्वरी ईश्वरश्च नित्यं कालत्रयेऽपि सशरीरौ, अथवा, एकोऽपि ईश्वरः नित्यं सशरीरः, तान् तथा मन्यमानान् निसर्गः प्रत्याह स्वभावः प्रतिवदति, स्वभावः प्रत्युत्तरं ददाति, अयमाशयः। शरीरस्य नित्यत्वं न क्वापि दृश्यते, दृश्यं शरीरमनित्यं नश्वरत्वात्। देश-काल-निमित्तापेक्षस्य शरीरस्य नित्यत्वोक्तिः स्वभावविरुद्धा। अत एव ईश्वरयोरीश्वरस्यैकस्य वा शरीरनित्यत्ववादः स्वभावेन विरुध्यते। इदमेव शरीरनित्यत्ववादं प्रति स्वभावस्य प्रतिवचनम् ॥८॥

**मातापितरौ यत् तावेकशरीरौ ॥**
**चित्रप्रथनार्था सा काचन लीला ॥९॥**

मातापितराविति– तौ मातापितरौ एकशरीरौ इति यत् सा चित्र-प्रथनार्था काचन लीला। विधेयप्राधान्यात् सेति स्त्रीलिङ्गम्। चित्रमद्भुतं, ईश्वरयोरद्भुतविलासप्रकाशिका एकशरीरत्वोक्तिरित्यर्थः। एवं द्वाभ्यां श्लोकाभ्यां पित्रोः पृथक्शरीरत्वम् एकशरीरत्वं वा वदतां पक्षस्य समाधान-मुक्तम् ॥९॥

अथ सन्मात्रमुशन्तीति प्रागुपन्यस्तस्य पक्षस्य प्रतिसमाधानमाह ॥

**सन्मात्रकथानां कार्ये मनुजादौ ॥**
**धीस्वान्तविकासः स्यात्कारणहीनः ॥१०॥**

सन्मात्रकथानामिति– सन्मात्रकथानां पक्षे ईश्वरः केवलं सत् ब्रह्मेति वदतां मते इति भावः। कार्ये मनुजादौ कारणात् सतो वस्तुनः उत्पाद्ये मानवादौ धी-स्वान्तविकासः कारणहीनः स्यात्, धीः बुद्धिः स्वान्तं मनः तयो-

विकासः विजृम्भणं अन्तःकरणाविष्कृतिः कारणं विना भवेत्। कारणं विना कार्योत्पत्तेरसम्भवात्, कारणे सन्मात्रे निर्विशेषे वस्तुनि कथम् अन्तःकरणव्यापारः सम्भवेत् ? ॥१०॥

अत एव अद्वैतिनः मायामाश्रित्य स्वपक्षं स्थापयन्ति। तत्रापि माया अस्माभिः प्रतिपाद्यमाना शक्तिरेवेत्याह॥

**अद्वैतिभिरन्या मायाऽऽश्रयणीया ॥**
**शक्तेरतिरिक्ता सा किं किमु वादैः ॥११॥**

अद्वैतिभिरिति—अद्वैतिभिरन्या पुरुषादन्या विलक्षणा माया आश्रयणीया। सा शक्तेरतिरिक्ता किम् ? शक्तिं नातिरिच्यते, शक्तिरेव सेत्यर्थः। किमु वादैः ? वादैः प्रयोजनं नास्ति ॥११॥

प्रज्ञायुत ईशः, सा च प्रज्ञैव शक्तिः, तस्याः पृथग्भावो नास्तीत्यभिप्रायः षष्ठे श्लोके उपन्यस्तः। तं प्रति न स्यादित्युत्तरमाह॥

**न स्यात्पृथगात्मा शक्तेः किमुपाधेः ॥**
**चक्षुः श्रितचित्ते- र्विश्वाकृतिता वा ॥१२॥**

न स्यादिति– उपाधेः शक्तेः पृथक् आत्मा किं न स्यात् ? शक्तेः आत्मा अन्यः स्यादेवेति भावः। चक्षुः श्रितचित्तेः चक्षुरिन्द्रियमाश्रित्य व्याप्रियन्त्याः चित्तेः चितः दर्शनेन्द्रियोपहितचैतन्यादिति यावत्, पृथक् विश्वाकृतिता वा किं न स्यादिति शेषः, नेत्रेन्द्रियोपहितचैतन्यस्यैव विश्वाकारतया विक्षेपरूपो विवर्तः अद्वैत्येकदेशिनां सिद्धान्तः। तत्रापि विषयिणः उपहितचैतन्यात् भिद्यत एव विषयः विश्वाकारः। यद्यपि विषय-विषयिणोः मूलस्वरूपे चिति अभेदो भवति, तथाऽपि विषयाकारतया विवर्तमाने पृथग्भावः विश्वस्य स्यादेव, न चेत् ज्ञातृ-ज्ञेयव्यवहार एव नोपपद्यते। एवम् उपाधिभूतायाः मायायाः शक्तेर्वा आत्मा पृथग्भवत्येवेति भावः ॥१२॥

नियते अशरीरत्वे दोषमाह॥

ईश्वरस्य मायातनुबन्धं मायया लीलया तनुबन्धः शरीरस्वीकारः तम् आहुः, न शक्तेः। लीलाशरीरवत्त्वं नाथस्यास्ति, न तु शक्तेरिति मन्यन्त इति भावः ॥७॥

**नित्यं सशरीरौ येषां पितरौ तौ ॥**
**एकोऽप्यथवा तान् प्रत्याह निसर्गः ॥८॥**

नित्यमिति– येषां मते तौ पितरौ ईश्वरी ईश्वरश्च नित्यं कालत्रयेऽपि सशरीरौ, अथवा, एकोऽपि ईश्वरः नित्यं सशरीरः, तान् तथा मन्यमानान् निसर्गः प्रत्याह स्वभावः प्रतिवदति, स्वभावः प्रत्युत्तरं ददाति, अयमाशयः। शरीरस्य नित्यत्वं न क्वापि दृश्यते, दृश्यं शरीरमनित्यं नश्वरत्वात्। देश-काल-निमित्तापेक्षस्य शरीरस्य नित्यत्वोक्तिः स्वभावविरुद्धा। अत एव ईश्वरयोरीश्वरस्यैकस्य वा शरीरनित्यत्ववादः स्वभावेन विरुध्यते। इदमेव शरीरनित्यत्ववादं प्रति स्वभावस्य प्रतिवचनम् ॥८॥

**मातापितरौ यत् तावेकशरीरौ ॥**
**चित्रप्रथनार्था सा काचन लीला ॥९॥**

मातापितराविति– तौ मातापितरौ एकशरीरौ इति यत् सा चित्र-प्रथनार्था काचन लीला। विधेयप्राधान्यात् सेति स्त्रीलिङ्गम्। चित्रमद्भुतं, ईश्वरयोरद्भुतविलासप्रकाशिका एकशरीरत्वोक्तिरित्यर्थः। एवं द्वाभ्यां श्लोकाभ्यां पित्रोः पृथक्शरीरत्वम् एकशरीरत्वं वा वदतां पक्षस्य समाधान-मुक्तम् ॥९॥

अथ सन्मात्रमुशन्तीति प्रागुपन्यस्तस्य पक्षस्य प्रतिसमाधानमाह ॥

**सन्मात्रकथानां कार्ये मनुजादौ ॥**
**धीस्वान्तविकासः स्यात्कारणहीनः ॥१०॥**

सन्मात्रकथानामिति– सन्मात्रकथानां पक्षे ईश्वरः केवलं सत् ब्रह्मेति वदतां मते इति भावः। कार्ये मनुजादौ कारणात् सतो वस्तुनः उत्पाद्ये मानवादौ धी-स्वान्तविकासः कारणहीनः स्यात्, धीः बुद्धिः स्वान्तं मनः तयो-

विकासः विजृम्भणं अन्तःकरणाविष्कृतिः कारणं विना भवेत्। कारणं विना कार्योत्पत्तेरसम्भवात्, कारणे सन्मात्रे निर्विशेषे वस्तुनि कथम् अन्तःकरणव्यापारः सम्भवेत् ? ॥१०॥

अत एव अद्वैतिनः मायामाश्रित्य स्वपक्षं स्थापयन्ति। तत्रापि माया अस्माभिः प्रतिपाद्यमाना शक्तिरेवेत्याह ॥

**अद्वैतिभिरन्या मायाऽऽश्रयणीया ॥**
**शक्तेरतिरिक्ता सा किं किमु वादैः ॥११॥**

अद्वैतिभिरिति—अद्वैतिभिरन्या पुरुषादन्या विलक्षणा माया आश्रयणीया। सा शक्तेरतिरिक्ता किम् ? शक्तिं नातिरिच्यते, शक्तिरेव सेत्यर्थः। किमु वादैः ? वादैः प्रयोजनं नास्ति ॥११॥

प्रज्ञायुत ईशः, सा च प्रज्ञैव शक्तिः, तस्याः पृथग्भावो नास्तीत्यभिप्रायः षष्ठे श्लोके उपन्यस्तः। तं प्रति न स्यादित्युत्तरमाह ॥

**न स्यात्पृथगात्मा शक्तेः किमुपाधेः ॥**
**चक्षुः श्रितचित्ते- र्विश्वाकृतिता वा ॥१२॥**

न स्यादिति– उपाधेः शक्तेः पृथक् आत्मा किं न स्यात् ? शक्तेः आत्मा अन्यः स्यादेवेति भावः। चक्षुः श्रितचित्तेः चक्षुरिन्द्रियमाश्रित्य व्याप्रियन्त्याः चित्तेः चितः दर्शनेन्द्रियोपहितचैतन्यादिति यावत्, पृथक् विश्वाकृतिता वा किं न स्यादिति शेषः, नेत्रेन्द्रियोपहितचैतन्यस्यैव विश्वाकारतया विक्षेपरूपो विवर्तः अद्वैत्येकदेशिनां सिद्धान्तः। तत्रापि विषयिणः उपहितचैतन्यात् भिद्यत एव विषयः विश्वाकारः। यद्यपि विषय-विषयिणोः मूलस्वरूपे चिति अभेदो भवति, तथाऽपि विषयाकारतया विवर्तमाने पृथग्भावः विश्वस्य स्यादेव, न चेत् ज्ञातृ-ज्ञेयव्यवहार एव नोपपद्यते। एवम् उपाधिभूतायाः मायायाः शक्तेर्वा आत्मा पृथग्भवत्येवेति भावः ॥१२॥

नियते अशरीरत्वे दोषमाह ॥

**एकान्तविदेहौ तौ चेदतिसूक्ष्मौ ॥**
**लीलातनुबन्धा- शक्तावभिधेयौ ॥१३॥**

एकान्तेति– अतिसूक्ष्मौ प्रमातुं न शक्यौ तौ पितरौ एकान्तविदेहौ चेत् नियमेन शरीरशून्यौ चेत्, लीलातनुबन्धाशक्तौ लीलया शरीरादाने असमर्थौ अभिधेयौ वक्तव्यौ। स्वातन्त्र्यं शरीरस्वीकाराय नास्ति तयोरित्यर्थः। सर्वतन्त्रस्वतन्त्रयोर्नित्यम् अशरीरत्वावस्थाने को वा नियामको भवति? ॥१३॥

किमपि प्रयोजनमुद्दिश्य शरीरं स्यादेवेत्याह॥

**भक्ताननुगृह्णन् दिव्याद्भुतलीलः ॥**
**तद्विग्रहबन्धो बोध्यो लसदर्थः ॥१४॥**

भक्तानिति– तत् तस्मादुक्ताद्धेतोः भक्तान् अनुगृह्णन् भक्तलोकस्य अनुग्रहं कुर्वन् दिव्याद्भुतलीलः दिव्या अद्भुता लीला विलासः यस्य सः विग्रहवन्धः शरीराकारः लसदर्थो लसन् प्रकाशमानः अर्थः प्रयोजनरूपः यस्य सः, बोध्यः ज्ञेयः विग्रहबन्धस्य लसदर्थत्वं विधेयम्। किमपि प्रयोजनं लीलाशरीरस्वीकाराय ईश्वरौ प्रेरयति। तच्च प्रेरकं तयोर्न बाह्यम्। स्वेच्छया ईश्वरयोः स्वयं नियन्त्रणात्, सर्वशक्तत्वाच्च ॥१४॥

अथ 'कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा' इति न्यायेन पुरुषत्वम् अङ्गीकृतं चेत् कुतो न स्त्रीत्वं नाङ्गीक्रियत इति परवस्तुनः पुरुषत्वमात्रं कथयन्तं पृच्छति॥

**स्त्रीत्वं यदि नेष्टं पुंस्त्वं कुत इष्टम् ॥**
**ना वा किमु नारी न स्यादनुमेया ॥१५॥**

स्त्रीत्वमिति– स्त्रीत्वं न इष्टं यदि, कुतः कस्माद्धेतोः पुंस्त्वम् इष्टम्? ना वा पुरुष इव, नारी स्त्री अनुमेया अनुमातु शक्या किमु न स्यात्? यादृशा लिङ्गेन पुरुषोऽनुमेयो भवति, तादृशा लिङ्गेन स्त्री च अनुमेया भवेदित्यर्थः ॥१५॥

**तस्मात्पितरौ तौ वाच्यौ मतिमन्तौ ॥**
**सूक्ष्मावपि भूयो लीलातनुमन्तौ ॥१६॥**

तस्मादिति– तस्मात् तौ पितरौ मतिमन्तौ ज्ञानवन्तौ पृथगात्मानावित्यर्थः। भूयः भूरि अत्यन्तमिति यावत् सूक्ष्मावपि दिव्यत्वादस्मदादिस्थूलदृग्दुर्लभावपि लीलातनुमन्तौ लीलाशरीरिणौ वाच्यौ। स्पष्टम् ॥१६॥

सृष्टावत्र ब्रह्माण्डे तयोः मुख्ये मूर्तिस्वरूपे द्वे आह ॥

**नास्मत्तनुवत्ते शक्तीश्वरमूर्ती ॥**
**एकाऽमृतरूपा त्वन्या प्रणवात्मा ॥१७॥**

नेति– ते शक्तीश्वरमूर्ती शक्तिमूर्तिः ईश्वरमूर्तिरुभे च अस्मत्तनुवत् न अस्माकं शरीरवत् न भवतः। तर्हि किंरूपे भवतः? आह। एका मूर्तिः अमृतरूपा अमृतं रूपं यस्याः सा; अन्या तु प्रणवात्मा मूर्तिः। शक्तिमूर्तेः अमृतं शरीरम् ईश्वरमूर्तेः प्रणवः शरीरमिति भावः ॥१७॥

तत्र प्रथमं प्रणवात्मानं मूर्तिं विवृणोति ॥

**दिव्यं घनतेजः कुर्वद् ध्वनिमन्तः ॥**
**सम्पश्यदशेषं मूर्तिः प्रणवात्मा ॥१८॥**

दिव्यमिति– अन्तः सर्वस्याप्यन्तरे ध्वनिं नादं किमप्यव्यक्तं कुर्वत् तन्वानम् अशेषम् अखिलं सम्पश्यत् वीक्षमाणं दिव्यम् अप्राकृतं घनतेजः स्पर्शानुभवयोग्यतया स्थितं तेजः ज्योतिरेव प्रणवात्मा मूर्तिः कथ्यते। अणोरप्यणीयस्त्वेन ब्रह्माण्डकोटिषु सर्वत्र अत्यन्तसूक्ष्मतयाऽवस्थाय अव्यक्तनादं कुर्वत् यज्ज्योतिर्भ्राजते तदेव प्रणवशरीरम् ईश्वरमूर्तिरिति भावः ॥१८॥

अथ अमृतात्मानं मूर्तिं व्याचष्टे ॥

**दिव्यो घनसोमः स्यन्दन् रसमन्तः ॥**
**भुञ्जन्भुवनौघं पीयूषशरीरम् ॥१९॥**

दिव्य इति– अन्तः रसं स्यन्दन् सर्वस्याप्यन्तरे आनन्दपदवाच्यं विश्वभूतसारात्मकं रसं प्रवहन्त विदधानः भुवनौघं भुञ्जन् भोग्यस्य

भुवनजालस्य तत्सारादानेन भोक्ता भवन्, दिव्यः अप्राकृतः घनसोमः अन्तः पिण्ड इव संहतः सोमः, वेदे पवमानाख्य एव, पीयूषशरीरं पीयूषमयं शरीरम् अमृतात्मा मूर्तिरिति भावः ॥१९॥

अथ मूर्तिद्वयस्य प्रणवात्मतेजसः पीयूषात्मसोमस्य च तत्त्वमाह ॥

**बोधोऽनवलम्बो दिव्यं खलु तेजः ॥**
**मोदः परिशुद्धो दिव्यः खलु सोमः ॥२०॥**

बोध इति– अनवलम्बः निरुपाधिकः बोधः खलु ज्ञानमेवेत्यर्थः, खल्ववधारणे, दिव्यं तेज उच्यते। परिशुद्धो मोदः खलु दिव्यः सोमः। विषयमनाश्रित्य स्वतःसिद्धत्वं परिशुद्धत्वम्। मोद आनन्दः, स एव सोमः। स्पष्टम् ॥२०॥

अथ सूर्याचन्द्रमसोः याथार्थ्यं प्रसङ्गवशादाह ॥

**सोमांश-महोंशौ यातो घनभावम् ॥**
**पित्रोर्भुवनानां सङ्कल्पमहिम्ना ॥२१॥**

सोमांशेति– भुवनानां पित्रोः ईश्वरयोः सङ्कल्पमहिम्ना सङ्कल्पप्रभावात् सोमांशमहोंशौ घनभावं यातः गच्छतः। सोमांश एव घनीभूतः चन्द्रः, महोंशो घनीभूतः सूर्य इति। अन्यदवदातम् ॥२१॥

चिन्मयमीशम् आनन्दमयी देवी स्वयं भोग्यतया तर्पयतीत्याह ॥

**आराधयसीशं तं चिन्मयकायम् ॥**
**आनन्दमयाङ्गी त्वं देवि किलेयम् ॥२२॥**

आराधयसीति– देवि! आनन्दमयाङ्गी इयम् ईदृशी त्वं चिन्मयकायं बोधशरीरं तमीशम् आराधयसि किल सम्भावनायाम्। ईश्वरस्य त्वं स्वीयमानन्दमयं शरीरमर्पयित्वा भोगदानेन तम् आराधयसीति भावः ॥२२॥

त्वदीयं सर्वं दिव्यं भोग्यं, तेनेश्वर आराध्यते इति देवीं सम्बोधयति ॥

**दिव्यं तव कायं　दिव्ये तव वस्त्रे ॥**
**दिव्यानि तवाम्ब　स्वर्णाभरणानि ॥२३॥**

दिव्यमिति— दिव्यं तव कायं प्राग्व्याख्यातम्। दिव्ये तव वस्त्रे उभे उत्तरीयम् अन्तरीयं च, अम्ब! तव स्वर्णाभरणानि दिव्यानि। सर्वाणीमान्यप्राकृतानि। केनोपनिषद्गीता स्त्री उमा हैमवती त्वं भासुरहेमाभरणामित्यादिना मया गीयमाना, उत्तरत्रापि स्तबकेषु वर्ण्यमानाङ्गवस्त्राभरणा सर्वत्र मया तव दिव्यत्वं ज्ञात्वैव स्तूयसे इति कवेराशयः। प्राकृतशरीरवर्णनवत् क्वचिच्छ्रूयमाणमपि मम स्तोत्रं वस्तुतस्तव दिव्यत्वविषयमेवाम्बेत्यर्थः ॥२३॥

अत एवाह ॥

**यद्देवि विलोक्या-　ऽस्यप्राकृतकाया ॥**
**युक्तीः समतीता　सेयं तव माया ॥२४॥**

यदिति— देवि! अप्राकृतकाया अलौकिकदेहाऽपि विलोक्याऽसि द्रष्टुं शक्याऽसि इति यत् सेयं विधेयप्राधान्यात् स्त्रीलिङ्गम्, युक्तीः उपपादनहेतूक्तीः समतीता अतिक्रान्ता तव माया विचित्रशक्तिः अघटितघटनापटीयसीति वा ॥२४॥

उपसंहरति स्तबकम् ॥

**नव्यास्तनुमध्याः　प्रत्नां तनुमध्याम् ॥**
**विद्वत्सदसीमाः　सम्यक्प्रथयन्तु ॥२५॥**

नव्या इति— नव्याः अभिनवं सृष्टाः कविना इमाः तनुमध्याः तनुमध्यावृत्तगृहीताः कविताः प्रत्नां पुरातनीं तनुमध्यां स्त्रियम् उमां विद्वत्सदसि विज्ञसभायामित्यर्थः सम्यक् प्रथयन्तु प्रकाशयन्तु। विदुषामपि उमातत्त्वस्य दुर्बोधत्वात्, तेषामेव उमाबोधलाभसम्भवाच्च। अत्र समालङ्कारः। उभयत्र तनुमध्यात्वात् आनुरूप्यं, प्रथितास्तनुमध्याः प्रथिता च तनुमध्येति ॥२५॥

तृतीयः स्तबकः सव्याख्यः समाप्तः ॥

# चतुर्थः स्तबकः

प्रथमशतकस्य चतुर्थेऽस्मिन् स्तबके अध्यात्मं महाशक्तिः कुण्डलिनी-स्वरूपिणी प्रस्तूयते। प्रसङ्गवशात् वाक्प्राणमनसां तेजोऽबन्नसारांशानां छान्दोग्यप्रतिपादितानाम् अधिपिण्डं स्थानानि व्याचक्षाणो नैष्ठिक आचार्यः स्वानुभूतीः स्वगुरोर्भगवतो रमणस्य महर्षेरुपदेशं च कवितया सम्भावयति। स्तबकादिर्मङ्गलश्लोकः अमृतांशुबिम्बेत्युपक्रम्यते ॥

**अमृतांशुबिम्बसाराद् भूयोऽपि विनिर्गतो भृशं सूक्ष्मः ॥**
**सारो गौरीवदनाद् दरहासो हरतु दुःखजालं नः ॥१॥**

अमृतांशुरिति– अमृतांशुबिम्बसारात् अमृतांशोश्चन्द्रमण्डलस्य सारात् स्थिरांशात् रसरूपादतिसूक्ष्मादपि भूयः भृशम् अत्यन्तमतितरां सूक्ष्मः स्थूल-दृगगोचरः गौरीवदनात् विनिर्गतः सारः सत्त्वभूतः दरहासः मन्दहासः नः दुःखजालं हरतु अस्मदीयसकलतापापहारको भवत्विति भावः ॥

दरहासस्य आनन्ददायकत्वात् दुःखध्वंस उपपन्नः । तस्य गौरीवदन-सारत्वोक्त्या रसापरपर्यायममृतं सूक्ष्मतमं घनीभूतं गौरीवदनत्वेन व्यवस्थितम् आक्षिप्यते। अमृतात्मा शक्तिमूर्तिरतीतस्तबकप्रतिपादितेह स्मर्तव्या। अमृतांशुबिम्बेनोपमीयते गौरीवदनम्। सा चोपमा अस्फुटा। अमृतांशु-बिम्बसारादिति प्रयोगस्येदं हृदयम्। यत् प्रकारान्तरव्याख्यानेन प्रदर्श्यते। अमृतांशुबिम्बसाराद् गौरीवदनात् भूयोऽपि विनिर्गतः भृशं सूक्ष्मः सारः दरहासः नः दुःखजालं हरत्विति योजना। 'दिव्यो घनसोमः स्यन्दनूसमन्तः' इति सोमांशो घनभावं गत इति च प्रागुक्तम्। तस्मात् चन्द्राकारेण घनभावं यातस्य रसस्य अन्तस्स्यन्दतः सारशब्दवाच्यत्वमिहाभिप्रेतम्। सः अतिसूक्ष्मः अमृतमयः। अमृतांशुबिम्बसाराख्यम् अमृतमेव गौरीवदनं तस्मात् भूयोऽपि पुनरपि विनिर्गतः सारः सारादपि सारः भृशं सूक्ष्मः अमृतस्वरूपः आनन्दमयः दरहासः। अन्यत् प्राग्वत्। सारादपि सार इत्युक्तेः सारालङ्कारः ॥१॥

भगवत्याः व्यापारं त्रिविधं शरीरे मुख्यं स्थानत्रयं चाह कुलेत्यादिना ॥

**कुलकुण्डे प्रणुवन्ती चेतन्ती हृदि समस्तजन्तूनाम् ॥**
**मूर्धनि विचिन्तयन्ती मृत्युञ्जयमहिषि विजयते भवती ॥२॥**

कुलकुण्ड इति– हे मृत्युञ्जयमहिषि ! भवती विजयते। किं कुर्वाणा ? कुलकुण्डे मूलाधारे प्रणुवन्ती स्तुवन्ती शब्दायमानेत्यर्थः, समस्तजन्तूनां सर्वप्राणिनां हृदि हृदये चेतन्ती सञ्जानाना संवित्स्वरूपिणीत्यर्थः। मूर्धनि मस्तके विचिन्तयन्ती ध्यायन्ती मतिरूपिणीत्यर्थः ॥

परा, पश्यन्ती, मध्यमा, वैखरीति चतुर्धा वाचमूचुः प्राञ्चः। तत्र पराऽऽख्या वाक् आद्या अनभिव्यक्ता कुलकुण्डाख्ये मूलाधारे अत्यन्तसूक्ष्मतया वर्तते। वाग्रूपा, चित्तिरूपा, मनोरूपेति त्रिधा महाशक्तिः अस्मदादीनां शरीरे क्रमशः मूलाधार-हृदय-मस्तकेषु व्यापारवती राजते ॥

अस्याः शक्तेरनुग्रहादेव अमृतत्वं देहवतः शक्यम् अमृतशरीरत्वोक्तेस्तस्याः। अत एव साभिप्रायं मृत्युञ्जयमहिषीति सम्बोधनम्। मृत्युञ्जयस्य मृत्यु जितवतो रुद्रस्य जगद्राजस्य महिषी कृताभिषेका। मह पूजायामित्यस्माद्धातोः मह्यते पूज्यत इति महिषीपदं निष्पन्नम्। मृत्युञ्जयस्येश्वरस्य पूज्या अमृततनुः शक्तिरिति भावः। एवं सम्बोधनेन तस्याः सर्वजीवनाधारत्वं गम्यम् ॥२॥

अथ छान्दोग्यश्रुतिवचनादरेण तेजोऽबन्नसाराणां वाक्-प्राण-मनसां मूलाधार-हृदय-शिरांसि लक्ष्यस्थानानि भवन्तीत्याह ॥

**तेजोजलान्नसारै- स्त्रयोऽणवो मूल-हृदय-मस्तेषु ॥**
**पाकात्ते निष्पन्ना- स्त्रैलोक्यव्यापिकेऽम्ब देहवताम् ॥३॥**

तेज इति–देहवताम् अम्ब ! त्रैलोक्यव्यापिके ! तेजोजलान्नसारैः त्रयोऽणवः अणुत्वं सूक्ष्मत्वाभिप्रायम्, मूल-हृदय-मस्तेषु एषु त्रिषु स्थानेषु ते पाकात् निष्पन्नाः त्वत्कर्तृकपरिणमनकर्मणा उत्पन्नाः। तेजोऽबन्नानां स्वरूपं प्राग्व्याख्यातम्। अत्रायमाशयः। तेजःसारेण वाग्रूपोऽणुः सूक्ष्मतमः निष्पन्नः मूलाधारमधिशेते। अप्सारेण प्राणोऽणुः हृदये, अन्नसारेण मानसोऽणुः शिरसि चेति बोध्यम्। इदं सर्वं त्रैलोक्यव्यापिन्याः महाशक्तेः पाकक्रियाप्रभावात् अधिपिण्डं निष्पद्यते इति भावः। तथा च 'अन्नमशितं त्रेधा विधीयते'

इत्यारभ्य अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाक् इति छान्दोग्यश्रुतिर्भवति ॥३॥

अथ शरीरे शक्तिप्रवेशपद्धतिमाह ॥

**पूर्णे शरीरशिल्पे द्वारेण ब्रह्मरन्ध्रसंज्ञेन ॥**
**नाडीपथेन गत्वा तैजसमणुमाविशस्यमेयबले ॥४॥**

पूर्णे इति– हे अमेयबले ! तव बलम् इयदिति मातु न शक्यमिति भावः। शरीरशिल्पे शरीरमेव शिल्पं निर्माणं तस्मिन् पूर्णे सति, ब्रह्मरन्ध्र-संज्ञेन ब्रह्मरन्ध्रं संज्ञा यस्य तेन द्वारेण मस्तकस्य उपरि भागे मध्ये स्थितेन योगिलोकप्रसिद्धेनेति यावत्, नाडीपथेन नाडीमार्गेण, नाडी नेह स्थूला धमनी कथिता, शिरःप्रदेशमारभ्य मूलाधारपर्यन्तमवस्थितस्य नाडीचक्रस्य मध्यगा या नाडी सूक्ष्मा शक्तिप्रवाहिनी वर्तते तस्याः मार्गेण गत्वा शरीरं प्रविश्य, तैजसम् अणुम् आविशसि कुलकुण्डालयां परां वाचं समन्तादाक्रम्य प्रविशसि। इमामेव मध्यनाडीं सुषुम्नामाहुरेके ॥४॥

एवमामूलम् ऊर्ध्वतः अवरूढायाः यातायाते वर्तेते इत्याह ॥

**अंशेनाविश्यादौ यासि पुनस्त्वं ततश्च निर्यासि ॥**
**मार्गाभ्यां द्वाभ्यां त्वं नाड्याः पश्चात्पुरश्च सिद्धाभ्याम् ॥५॥**

अंशेनेति–त्वम् आदौ प्रथमम् अंशेन एकेन कलाविशेषेण आविश्य प्रविश्य तं तैजसमणुं परावाग्रूपं मूलाधारमित्यर्थः, यासि प्राप्नोषि, पुनः ततश्च निर्यासि, मूलाधारात् पुनर्निर्गच्छसि ऊर्ध्वमिति भावः। अधरागमनस्य उद्गमनस्य च नैको मार्गः, द्वौ स्तः। तौ क्व स्थितौ ? आह। नाड्याः पश्चात्पुरश्च सिद्धाभ्यां द्वाभ्यां मार्गाभ्यां यासि पुनः निर्यासीति सम्बन्धः। अयं भावः। या मध्यनाडी 'पूर्णे शरीरशिल्पे' इति श्लोके गीता तस्याः पश्चान्मार्गेण ब्रह्मरन्ध्रद्वारा मूलाधारं प्रति शक्तेरवतरणं, मूलाधारं प्रविश्य, ततः पुनः नाड्याः उक्तायाः पुरोमार्गेण आरुह्य ब्रह्मरन्ध्रद्वारेण निर्गमनं च अभिप्रेते ॥५॥

अथ शक्तेः पूर्वोक्तविहारस्य आधेयस्य शरीरे आधारम् आचष्टे ॥

**यातायातविहारे मातस्तस्मिन्भवत्युपाधिस्ते ॥**
**आरभ्य मस्तकस्थल- मामूलाधारमस्थिपञ्जरिका ॥६॥**

यातेति– मातः! तस्मिन् प्राक्कथिते यातायातविहारे विषयसप्तमी पश्चान्मार्गावरोहण-पुरोमार्गारोहणात्मके आवर्तने विषये इति यावत्। मस्तकस्थलमारभ्य आमूलाधारं कुलकुण्डावधि अस्थिपञ्जरिका अस्थ्नां पञ्जर एवास्थिपञ्जरिका ते तव उपाधिर्भवति, आधारो भवति। उक्तप्रकारं नाडीचक्रावरकम् अस्थिपञ्जरं तवेदृशपरिभ्रमात्मकविलासस्याश्रयत्वेन स्वीकृतवती त्वमिति तात्पर्यम् ॥६॥

अस्याः शक्तेः कुण्डलिनीति नामकरणे हेतुमाह ॥

**नृतनुषु विहरन्तीं त्वाम् उपाधिवीणाकृतेर्जगन्मातः ॥**
**सादृश्यात्कुण्डलिनीं परोक्षवादप्रियाः प्रभाषन्ते ॥७॥**

नृतनुष्विति– जगन्मातः! नृतनुषु नरशरीरेषु विहरन्तीम् उक्तप्रकारेण सञ्चरन्तीं विलसन्तीं वा त्वाम् उपाधिवीणाकृतेः उपाधेरस्थिपञ्जरिकायाः वीणाकृतेः सादृश्यात् हेतोः परोक्षवादप्रियाः गूढभाषितरताः कुण्डलिनीं प्रभाषन्ते भणन्ति। मूलाधारान्मस्तकावधि अस्थिपञ्जरस्य शक्तिविहाराश्रयस्य वीणाकारसदृक्षत्वात् कुण्डलिनीत्याख्यायत इति भावः। अस्थिपञ्जरिकैव सर्पाकारतया कुण्डलिनी भवतीत्ययमाशय उपपन्न एव। कुण्डलिनीम् अधिकृत्य प्राचां मतं त्वेवम्। कुलकुण्डाख्ये मूलाधारे शक्तिः स्वपन्ती योगप्रभावात् जातप्रबोधा ऊर्ध्वं गत्वा सहस्रारं मूर्धनि प्रविशति। यथा कुण्डली सर्पः स्वभोगं मण्डलीकृत्य स्वपन् प्रबोधे भोगं दीर्घीकृत्योन्नतफणः उज्जृम्भते तथा शक्तिरपीति कुण्डलिनीनाम्ना प्रसिद्धा महाशक्तिरध्यात्मम्। 'अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं, स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि' इत्यानन्दलहर्या पठितम् इममाशयं विवृणोति ॥७॥

शक्तिप्रवाहानुसन्धानं परमो योग इत्याह ॥

**नभसः शीर्षद्वारा　प्रवहन्तीं य इह विग्रहे शक्तिम् ॥**
**अनुसन्दधाति नित्यं　कृतिनस्तस्येतरैरलं योगैः ॥८॥**

नभस इति– नभसः आकाशात् शीर्षद्वारा मस्तकद्वारेण विग्रहे शरीरे प्रवहन्तीं शक्तिम् इह लोके यः योगी साधकः नित्यम् अनवरतं अनुसन्दधाति अन्ववेक्षते, तस्य कृतिनः पुण्यपुरुषस्य इतरैर्योगैरलम्, अन्ये योगाः नावश्यकाः। प्रसन्नायाः शक्तेरनवरतम् अविच्छिन्नधारया प्रवहन्त्याः अनुग्रहे सिद्धे, अन्येषां योगानां लक्ष्यं स्वतस्सिद्धं स्यात्। तस्मात् ते नापेक्षिता इति भावः ॥८॥

सर्वेषु समत्वेऽपि तस्याः फलभेदस्त्वस्तीत्याह ॥

**सर्वेषु विशसि तुल्यं　निर्गच्छसि तुल्यमम्ब भुवनानाम् ॥**
**ज्ञाता चेदसि शक्त्यै　न ज्ञाता चेद्भवस्यहङ्कृत्यै ॥९॥**

सर्वेष्विति– भुवनानामम्ब ! सर्वेषु तुल्यं समं यथा तथा विशसि प्रविशसि तुल्यं सममेव निर्गच्छसि। ज्ञाता चेत् शक्त्यै असि, त्वं विदिता चेत् बलाय प्रभवसीत्यर्थः, न ज्ञाता चेत् अहङ्कृत्यै भवसि। अयं भावः। अम्ब, यद्यपि त्वं सर्वेषु समानमेव यातायातविहारेण वर्तसे, तथाऽपि ये त्वा-मवतरन्तीमुद्गच्छन्तीं च विदन्ति, ते शक्तिवृद्धाः भवन्ति, ये न विदन्ति ते साहङ्काराश्चेत्ययं भेदः ॥९॥

अवतरणध्यानफलमाह ॥

**अवतरणं ध्यातं चेद्　आरोहणमद्भुतम् भवेच्छक्तेः ॥**
**यस्मिन्निदं शरीरं　भवति महद्वैद्युताग्नियन्त्रमिव ॥१०॥**

अवतरणमिति– अवतरणं ध्यातं चेत् शक्तेरारोहणमद्भुतं भवेत्। या नभस्तः शीर्षद्वारा शक्तिः शरीरे प्रवहन्ती विशति, तामनुभवन्योऽन्ववेक्षते तस्य मूलाच्छक्तिर्वेगवत्तरा आरोहति, विस्मयकरं भवति तदारोहणम्। यस्मिन्नारोहणे इदं भौतिकं शरीरं महद्वैद्युताग्नियन्त्रमिव भवति। वैद्युता-

ग्नियन्त्रम्, आप्यं ज्योतिर्वैद्युताग्निमाहुः यः पार्थिवाग्नेः अन्यः अन्तरिक्षस्थानश्च। पृथिव्यामेव तदाप्यं ज्योतिरभिव्यञ्जयितु यद्यन्त्रं प्रभवति तद्वैद्युताग्नियन्त्रमुच्यते। इदानीं भौतिकशास्त्रज्ञाः कृतकं तद्वैद्युताग्नियन्त्रं क्रियोपकारकं प्रकाशदायकं च साधयन्ति। इदं च प्रचलत्यस्मिन्युगे सर्वत्र प्रसिद्धम्। ईदृशेन यन्त्रेण शरीरमुपमीयते तस्य यो ध्यायति शक्तेरवतरणम्। उपमानोपमेययोः साधर्म्यं तु शक्तिप्रकाशविजृम्भणम्॥१०॥

उपेक्षिते ध्याने किं भवतीत्याह॥

**आरोहणमध्यातृषु हृदयेऽहङ्कारमात्रनिष्पत्त्यै॥**
**तदनु शरीरमिदं स्यात् सुखाय दुःखाय वा यथाभोगम्॥११॥**

आरोहणमिति— अध्यातृषु प्रवहन्तीं शक्तिमधिकृत्य ध्याने उदासीनतया वर्तमानेषु आरोहणं हृदयेऽहङ्कारमात्रनिष्पत्त्यै भवतीति शेषः। हृदये अशुद्धाहङ्काररूपा संज्ञा निष्पन्ना भवति, न तु शुद्धाहम्भावस्फूर्तिरूपा निष्ठा। तदनु अनन्तरम् इदं शरीरं यथाभोगं भोगानुसारेण सुखाय दुःखाय वा स्यात्। संसृतौ सुख-दुःखानुभवायैव भवति शरीरं, न तु शक्तिप्रकाशविलासात्मकं वैद्युताग्नियन्त्रमिव भवेत्॥११॥

देव्याः सत्तैवोपाधिवशादहङ्कृतिर्भवतीत्याह॥

**या व्यक्तिता जनिमता- महङ्कृतिः सकलभेदधीभूमिः॥**
**पृथगिव तवाम्बिके सा सत्तैवोपाधिसंश्रयाद् भान्ती॥१२॥**

येति— अम्बिके! सकलभेदधीभूमिः सर्वभेदबुद्ध्याश्रयभूतेत्यर्थः। जनिमतां व्यक्तिता देहिनां पृथगात्मतया वर्तनमित्यर्थः। या अहङ्कृतिः अहमिदं ममेदमिति पृथक्तया प्रतिभासते, सा उपाधिसंश्रयात् पृथगिव भान्ती तव सत्तैवेत्यन्वयः। सर्वव्यापिन्याः महाशक्तेः तत्र तत्राधिपिण्डमुपहिताया एव पृथगात्मत्वेन प्रतिभासो भवति। तस्माद्व्यक्तित्वलक्षकाहङ्कृतिर्महाशक्तिसत्तैव पृथगाभासत इत्युक्तम्॥१२॥

एवं पार्थक्यदृष्टिमेवाविद्यामाहुरिति तां वर्णयति॥

**एतामाहुरविद्यां बीजं संसारवृक्षराजस्य ॥**
**सर्वरसफलयुतस्य प्रारब्धजलेन देवि दोहृदिनः ॥१३॥**

एतामिति– देवि ! एतामविद्यां संसारवृक्षराजस्य बीजमाहुः, वृक्षाणां राजा वृक्षराजः संसारः, जनन-मरणात्मकः परिवर्त एव वृक्षराजः तस्य बीजं कारणमाहुः। संसारवृक्षराजं विशिनष्टि। सर्वरसफलयुतस्य सर्वे रसाः यस्य फलस्य, तेन युतस्य, संसारपक्षे रसाः शृङ्गारादयः, वृक्षपक्षे षड्रसाः कट्वादयः, फलं प्रयोजनं, पक्षे फलमेव। प्रारब्धजलेन दोहृदिनः प्रारब्धं कर्मैव जलं तेन। दोहृदम् स्पृहा अस्यास्तीति दोहृदी तस्य, पक्षे वृक्षस्य कुसुमप्रसवात्पूर्व या वाञ्छा सा दोहृदमुच्यते। 'तरु-गुल्म-लतादीनामकाले कुशलैः कृतम्। पुष्पाद्युत्पादकं द्रव्य दोहृदं स्यात्' इति शब्दार्णवे। अयं विवेकः। अविद्या संसारस्य मूलं, तस्य नव सन्ति रसाः, प्रारब्धं कर्म इच्छया द्वारा तं पोषयति, यथा वृक्षस्य बीजं कारणद्रव्यं, तत्फलस्य षड्रसाः उक्ताः, दोहृदसेकेन यथेष्टं प्रसूते कुसुमानि चेति। रसे, फले, बीजे, दोहृदे च श्लेषः। तेन सावयवं रूपकमलङ्कारः ॥१३॥

शरीरे शक्तेरनवरतप्रवाहस्योपायमाह ॥

**व्यक्तित्वार्पकदेहे निम्ने कुल्येव जनिमतां मातः ॥**
**प्रवहत्यनारतं ते शक्तिश्चित्राणि देवि तन्वाना ॥१४॥**

व्यक्तित्वेति– जनिमतां मातः ! देहिनां जननि ! देवि ! व्यक्तित्वार्पकदेहे व्यक्तित्वस्य अहङ्कृतस्य पृथगात्मभावस्य अर्पके विधेयत्वेन निरवशेषं समर्पके देहे शक्तिविलासोपाधिभूते शरीरे ते तव शक्तिः चित्राणि अद्भुतानि तन्वाना कुर्वाणा अनारतं सन्ततं प्रवहति। अनायासेनाप्रतिहतगतिकया धारया क्षरतीति द्योतयितुम् उपमानमाह कुल्या निम्न इवेति। यथा निम्ने अधस्तनतले कुल्या उन्नततलात् प्रवहति तथेति। पृथगात्मत्वसमर्पणाभावे शक्तिप्रवाहस्याहङ्कृतिरेव प्रतिबन्धिका स्यादिति गम्यते ॥१४॥

अथ षड्भिः श्लोकैः हृदयतत्त्वम् आचष्टे ॥

**सारमपामणुभूतं　हृदयस्थं सूरयो विदुश्चित्तम् ॥**
**श्रेष्ठं प्राणं केचन　पञ्चानिलमूलभूतमाहुरिमम् ॥१५॥**

सारमिति– सूरयो विद्वांसः अणुभूतं सूक्ष्मभूतम् अपां सारं प्राणम् आप्यः सारः प्राण इति छन्दोगानां श्रुतिः प्रागुदाहृता, हृदयस्थं हृदये स्थाने तिष्ठतीति हृदयस्थं चित्तं विदुः विदन्ति। धात्वर्थानुगमेन इह चित्तं संवित्पर्यायित्वेन बोध्यम्। केचन अपरे इमम् अपां सारं पञ्चानिलमूलभूतं पञ्चप्राणानां कारणभूतं श्रेष्ठं प्राणम् आहुः। उपनिषत्सु उपन्यस्तं मुख्यं ज्येष्ठं श्रेष्ठं वा प्राणम् आप्यसारं हृदयस्थानं भणन्तीति भावः॥१५॥

**मन एव चित्तसंज्ञं　व्यवहरतां विभजनानभिज्ञानाम् ॥**
**कविलोकव्यवहार-　स्तदधीनस्तत्त्वधीर्भवत्यन्या ॥१६॥**

मन इति– विभजनानभिज्ञानां व्यवहरतां मनोऽन्यत् चित्तमन्यदिति विवेचनम् अजानन्त एव व्यवहारं कुर्वतां जनानां मन एव वित्तसंज्ञं चित्ताख्यं भवति। कविलोकव्यवहारः तदधीनः, कवयोऽपि तम् अनभिज्ञलोकव्यवहारानुरोधेन मनश्चित्तपर्यायं प्रयुञ्जते। यद्यप्येवं, तथाऽपि तत्त्वधीरन्या भवति। तत्त्वविवेचिका बुद्धिस्तु इतरैव, मनः पृथक्, चित्तं च पृथगिति॥१६॥

**तदनाहतस्य विलसद्　दक्षिणतो दहरनामकगुहायाम् ॥**
**चित्तं कुलकुण्डात्ते　काऽप्यनुगृह्णाति देवि रश्मिकला ॥१७॥**

तदिति– देवि! तत् तस्मात् अनाहतस्य योगिभिर्दृष्टस्य षट्चक्रान्तर्भूतस्य वक्षस्थलमध्यगस्येत्यर्थः, दक्षिणतो दक्षिणपार्श्वे दहरनामकगुहायां दहाराकाशाख्यकुहरे इति भावः, विलसत् चित्तं संविद्रूपं ते तव काऽपि रश्मिकला प्रकाशांशविशेष इत्यर्थः, कुलकुण्डात् मूलाधाराद् अनुगृह्णाति प्रसादयति। आत्मस्फूर्तिस्थानं दहराकाशाह्वयं हृदयं हृदयपीठस्य दक्षिणतो वर्तत इति स्वगुरोर्महर्षेरुपदेशम् आचार्यो रमणगीतायामाह–

"तस्य दक्षिणतो धाम हृत्पीठेनैव वामतः।
तस्मात्प्रवहति ज्योतिः सहस्रारं सुषुम्नया॥"

इति। ननु स्वप्रकाशस्यात्मनः स्फूर्तिस्थानं हृदयमिति सिद्धे महर्षेरुपदेशे, कथमिदमुच्यते यन्मूलाधारात् काऽपि देव्या रश्मिकला हृदयस्थं चित्तमनुगृह्णातीति? नैष दोषः, पाञ्चभौतिकशरीरधारकाणाम् आधाराणां सर्वेषां 'मूलं कुलकुण्डे प्रसिद्धम्। तस्मान्मूलाधारादेव शक्तिकला हृदयं परितः व्याप्रियमाणानां नाडीनां यथायथं व्यापाराय सामर्थ्यदानेनानुग्रहं करोति, अत एवात्मस्फूर्तेरुपाधिं तत्रानुगृह्णाति। एवं मूलाधाराच्छक्तिरश्मिकला उपाधिपोषिणी अहंवृत्तिस्फूर्तये प्रभवति; अयमेव चित्तानुग्रह उच्यते। न पुनरात्मा स्फुरन् स्वप्रकाशस्तत्र शक्तिकलयाऽनुगृह्यते, तस्य स्वतः प्रकाशमानत्वादितरानपेक्षसिद्धसत्ताकत्वाच्चेति बोध्यम् ॥१७॥

**चित्तमनु श्लिष्टं ते कलयाऽङ्गुष्ठप्रमाणमिव भासा ॥**
**दर्पणममलब्रह्म- प्रतिबिम्बाकर्षकं शिवे भवति ॥१८॥**

चित्तमिति– शिवे! ईश्वरि ते तव कलया रश्मिकलया अंशविशेषेणेत्यर्थः, श्लिष्टम् आलिङ्गितं भासा दीप्त्या अङ्गुष्ठप्रमाणमिव स्थितं, अङ्गुष्ठमात्रः पुरुष इत्युक्ते, वस्तुतः नाङ्गुष्ठप्रमाणः पुरुषो नापि तत्स्फूर्तिस्थानं हृदयं वा, अत एव प्रभया अङ्गुष्ठप्रमाणमिव दृश्यते कस्यां चिद्योगनिष्ठादशायां, किं प्रमाणं तर्हि? अणु सूक्ष्मं दुर्दर्शमिति भावः, तथाभूतं चित्तं हृदयस्थानोपहितचित्प्रकाशात्मकं, अमलब्रह्मप्रतिबिम्बाकर्षकं दर्पणं भवति। अणुन्यपि चित्ते शुद्धं ब्रह्माखण्डम् आत्मरूपेण स्फुरतीति तात्पर्यम्। चित्तमुपाधिर्दर्पणस्थानीयं, शुद्धं ब्रह्म केवलं बिम्बस्थानीयं प्रतिबिम्बस्थानीय आत्मा स्फुरन्निति विवेचनं भवति। अत्र श्रीमहर्षेरुक्तिर्भवति–

"हृदयकुहरमध्ये केवलं ब्रह्ममात्रं ह्यहमहमिति साक्षादात्मरूपेण भाति" इति ॥१८॥

**अन्तरमावर्ताभं प्रतिबिम्बमकायमेतदीशस्य ॥**
**अङ्गुष्ठाभं प्राहु- र्मनिनोपाधिचैत्तभासस्ते ॥१९॥**

अन्तरमिति– आवर्ताभम् आवर्तस्य अम्भसां भ्रमस्य आभेवाभा यस्य तत् मण्डलाकारेण परिस्फुरद् एतदन्तरम् आकाशम् ईशस्य अकायं प्रतिबिम्बं ते

तव उपाधिचैत्तभासः उपाधिभूतचित्तसम्बन्धिप्रभायाः मानेन प्रमाणेन अङ्गुष्ठाभं प्राहुः। प्रतिबिम्बमुद्दिश्य अङ्गुष्ठाभं विधेयम्। चित्ताकाशे अशरीरेश्वरप्रतिबिम्बस्य परिस्फुरत्त्वं अङ्गुष्ठाकृतित्वं च देव्याः उपाधिभूतचित्तगृहीतप्रभया सिद्धे इति भावः। अन्यत्सर्वम् अतीतेषु श्लोकेषु व्याख्यातम् ॥१९॥

अथ पिण्डाण्डेऽस्मिन् ईश्वरयोः सरूपत्वारूपत्वे व्याचष्टे॥

**दम्पत्योर्वां रूप- प्रतिबिम्बौ चक्षुषोः शिवे भवतः ॥**
**कुलकुण्डे हृदये चा- प्यरूपयोरेव कश्चिदुल्लासः ॥२०॥**

दम्पत्योरिति– हे शिवे! वां युवयोः दम्पत्योः रूपप्रतिबिम्बौ रूपयोः स्वरूपयोः प्रतिबिम्बौ द्वौ चक्षुषोर्द्वयोरक्ष्णोः भवतः वर्तेते। 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच' इत्यक्षिपुरुषविद्या स्तूयते छान्दोग्ये। इह वाम-दक्षिणयोः नेत्रयोर्यौ ज्योतिर्मयौ आकारौ दृश्येते, तावेव ईश्वर्याः ईश्वरस्य च प्रतिबिम्बावुक्तौ। चाक्षुषं ज्योतिरीश्वरयोः प्रतिबिम्बत्वेनोक्तम्। तयोरन्यत्र हृदये मूलाधारे च अरूपत्वेनैव विलसितं भवतीत्युत्तरार्धेनाह। कुलकुण्डे हृदये चाप्यरूपयोरेव युवयोः कश्चिदुल्लासः उल्लासविशेषः। पूर्वश्लोके हृदये प्रस्तुते ईशस्याकार्यं प्रतिबिम्बमिति ह्युक्तम् ॥२०॥

चित्तं स्तौति॥

**चित्तमणीयो वित्तं य इदं मूल्ये प्रपञ्चतोऽप्यधिकम् ॥**
**हृदयगुहायां निहितं जानीते स विजहाति बहिराशाः ॥२१॥**

चित्तमिति– यः पुमान् इदं चित्तं दहराख्ये हृदये अवस्थितं मूल्ये अर्घे प्रपञ्चतोऽप्यधिकं विश्वस्मादधिकतरम् अणीयः अणुतरं सूक्ष्मतरं हृदयगुहायां निहितं वित्तं धनं, विधेयं, चित्तमुद्देश्यं, जानीते, स बहिराशाः विजहाति सर्वबाह्यकामत्यागी भवति, आत्मलाभेन तस्यात्मकामस्य सर्वावाप्तेरित्यर्थः ॥

'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इति प्राचामुक्तिः। इतश्च छान्दोग्यश्रुतिर्भवति–'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' 'अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते, सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामाः अनृतापिधानास्तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा

उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा' इति ॥२१॥

अथ साधनदशायां स्वाभिमतां हृदयमूलां शक्तिज्वालामयीं निष्ठामाह ॥

**अप्राप्ता मूर्धानं हृदयात् सम्प्रस्थिता धृता नाड्या ॥**
**त्वद्रुचिरुक्ता बुद्धि- स्त्वयि निष्ठा भवति देवि तन्निष्ठा ॥२२॥**

अप्राप्तेति– देवि ! हृदयात्सम्प्रस्थिता उद्गता, मूर्धानं मस्तकप्रदेशम् अप्राप्ता, नाड्या सूक्ष्मया प्राणनाड्या धृता गृहीता त्वद्रुचिः तव रुचिः भा बुद्धिः उक्ता बोध उच्यत इत्यर्थः। तन्निष्ठा सा निष्ठा त्वयि निष्ठा भवति। स्पष्टम्। शिरस्तलावधि अगत्वैव हृदयादुद्गता अमृतनाड्या गृहीता बोधज्वाला या भवति तत्र निष्ठैव त्वयि भगवत्यां निष्ठा भवतीति तात्पर्यम् ॥२२॥

हृदय-मनसोः सूर्य-चन्द्रयोरिव सम्बन्धं प्रतिपादयति ॥

**अन्नमयाणुं प्राप्तं धीज्योतिश्चन्द्रमार्कमिव तेजः ॥**
**परिभाष्यते महेश्वरि मन इति सङ्कल्पसम्भवस्थानम् ॥२३॥**

अन्नेति– हे महेश्वरि ! आर्कम् अर्कस्येदं सौरं तेजः ज्योतिः चन्द्रमिव यथा सूर्यश्चन्द्रमसे प्रकाशं ददाति तद्वदित्यर्थः, अन्नमयाणु मानसं प्राग्व्याख्यातं प्राप्तं गतं धीज्योतिः अतीतश्लोकोक्तं हृदयात्प्रस्थितं नाड्या धृतं बुद्धिज्योतिः मन इति परिभाष्यते। मनो विशिनष्टि। सङ्कल्पसम्भवस्थानं मन इति सम्बन्धः। हृदयात्प्रस्थिता धीज्वाला मूर्धानम् अप्राप्ता ध्यानेन धृता चेत् निष्ठा भवति, सङ्कल्पसम्भवस्थानं शिरः प्राप्ता चेत् तस्यास्तत्र मन इत्याख्येति भावः ॥२३॥

मूर्धन्यपि लक्ष्यस्थाने चिच्छक्तेरुपास्तिमाह ॥

**सङ्कल्पे सङ्कल्पे चिच्छर्वित मनसि विस्फुरन्तीं त्वाम् ॥**
**य उपास्ते स जनस्ते गृह्णाति महेशवल्लभे चरणम् ॥२४॥**

सङ्कल्पे इति– हे महेशवल्लभे ! ईश्वरि ! सङ्कल्पे सङ्कल्पे प्रतिसङ्कल्पं मनसि विस्फुरन्तीं चिच्छर्वित त्वां य उपास्ते स जनः ते तव चरणं

गृह्णाति। अप्रकाशे मनसि सङ्कल्पो नोद्गच्छेत् उद्गतोऽपि न गृह्येत, चन्द्रस्य सूर्यप्रकाश इव मनसो हृदयप्रकाशः यया चिच्छक्त्या निर्वाह्यते सा ज्वलिता प्रतिसङ्कल्पं स्फुरन्त्येव राजते, य इमां सङ्कल्पप्रकाशिकां चिच्छक्तिं ध्यायति, तेन तव चरणग्रहणं कृतं भवति, न तु सङ्कल्पग्रहणम्। चित्प्रकाशे दृष्टिक्षेपात् सङ्कल्पेषु लक्ष्यतोज्झिता भवति ॥२४॥

स्तबकमुपसंहरति ॥

**आधारचक्रशयने　ममेह निद्रां विहाय विचलन्तीम् ॥**
**गीतय एताः परमा-　मुपतिष्ठन्तां जगद्विभोः कान्ताम् ॥२५॥**

आधारेति– मम आधारचक्रशयने मूलाधारम् आधारचक्रं तदेव शयनं तस्मिन् निद्रां विहाय विचलन्ती स्वापमुज्झित्वा व्याप्रियमाणां प्रबुद्धां परमां जगद्विभोः कान्तां जगदीश्वरीम् एताः गीतयः उपतिष्ठन्तां भजन्तामिति भावः। मूलाधारे कुण्डलिनीस्वापः पूर्वमुदाहृतः। उज्झितनिद्रया तयानुगृहीतः कविराचार्यो नैष्ठिकः। अस्मिन् स्तबके प्रसक्तानि तत्त्वानि छान्दोग्य-श्रुतिवाक्यैः स्वगुरोरुपदेशैः स्वानुभूतिभिश्च ग्रन्थकृतोपपादितानीति बोध्यम् ॥२५॥

इति श्रीमहर्षिरमणभगवत्पादान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गण-पतिमुनेः कृतावुमासहस्रे चतुर्थः स्तबकः समाप्तः।

समाप्तं च प्रथमं शतकम्।

प्रभाख्या व्याख्या च समाप्ता ॥

# पञ्चमः स्तबकः

**श्रीखण्डचर्चामिव कल्पयन्त्यो मुहुः कपोलेषु सखीजनस्य ॥**
**श्रीकण्ठकान्ताहसिताङ्कुराणां श्रीमन्ति कुर्वन्तु जगन्ति भासः ॥१॥**

श्रीखण्डेति— श्रीकण्ठकान्ताहसिताङ्कुराणां श्रीकण्ठस्य शिवस्य कान्तायाः उमादेव्याः हसितानि अङ्कुरा इव अभिनवोद्भेदा इव तेषां भासः शोभाः जगन्ति भुवनानि श्रीमन्ति शोभावन्ति सौभाग्यवन्तीति यावत्, कुर्वन्तु विदधतु। कीदृश्यो भासः? सखीजनस्य जयादेः कपोलेषु गण्डस्थलेषु श्रीखण्डचर्चां श्रीखण्डेन चन्दनेन चर्चां लिप्तिं मुहुः पुनः पुनः कल्पयन्त्य इव स्थिताः। पर्वतराजपुत्र्याः पार्श्ववर्तिन्यौ सख्यौ जया विजयेति च शिवपुराणप्रसिद्धे। बह्वीः सखीर्बाल्ये पार्वत्याः कथयन्ति कवयः। तथा च कुमारसम्भवे 'रेमे मुहुर्मध्यगता सखीनाम्' इति। कपोलेष्विति बहुवचनात् द्वयोर्बहूनां वा। इवोत्प्रेक्षायाम्। शुभ्राणां मन्दहसितभासां सखीजनगण्डस्थलेषु गन्धलेपनविधायकत्वमुत्प्रेक्ष्यते। प्रसरन्तीनाम् दरहसितभासां शुभ्रत्वशोभावहत्वाह्लादकत्वादिधर्मसम्बन्धेन गम्यमानेन निमित्तेन पार्श्वस्थितसखीजनकपोलोपगतशीतस्पर्शसुखशोभावहगन्धलेपकृत्तादात्म्यसम्भावना स्वरूपोत्प्रेक्षा ॥

मुहुःपदेन हसिताङ्कुराणां निस्सरतां पौर्वापर्यक्रमवतां तत्र तत्र भवेदन्तरमिति न भ्रमितव्यम्। विसृत्वराणां नवनवोद्भेदानां नैरन्तर्येऽपि प्रसारभङ्गीसौभाग्यात् प्रत्येकं भासमानतया पौनःपुन्येन सखीजनकपोलेषु गन्धलेपार्पणं सम्भावितम्। बहूनामपि उमाहसितसमुद्भेदानाम् अविरामतयैकरूपत्वेऽपि नवनवोल्लसद्विसृमरत्वं लोकोत्तररामणीयकव्यञ्जकम्। माघश्चाह। 'क्षणे क्षणे यन्नवतामुपैति, तदेव रूपं रमणीयतायाः' इति ॥

पार्वतीहासशोभानां सखीजनकपोलेषु विलासकथनात् देव्याः सखीनां प्रायेण सवयस्त्वं समानाकारत्वं च द्योतिते। तेन च श्रीकण्ठकान्तात्वप्राप्तावपि सखीसहचरी नवोढा देवीति ध्वन्यते। तथैवास्मिन् स्तबके नवयौवनपरिणयकल्याणवार्ताः प्रस्तूयन्ते। एवं सकलभुवनमाङ्गल्यसम्पादिकाः पार्वतीमन्दहासप्रभाः प्रार्थनागर्भिताशीरुक्तिभिरभिष्टुताः कविनेत्यलम् ॥१॥

**कीर्तिर्वलक्षा कुसुमायुधस्य　स्वर्णाद्रिकोदण्डजयोन्नतस्य ॥**
**दरस्मितश्रीर्द्विरदास्यमातु-　र्द्राघीयसीं वो वितनोतु भूतिम् ॥२॥**

कीर्तिरिति— द्विरदास्यमातुः गजवक्त्रजनन्याः पार्वत्याः दरस्मितश्रीः मन्दहासप्रभा वः युष्माक द्राघीयसी दीर्घतरां भूतिं विभूतिं चिरस्थायिनीं सम्पदमिति यावत्, वितनोतु विदधातु। सा च दरस्मितश्रीः कन्दर्पकीर्तित्वेनावस्थितेति पूर्वार्धेनाह। स्वर्णाद्रिकोदण्डजयोन्नतस्य स्वर्णाद्रिर्मेरुः कोदण्डश्चापः यस्य तस्य मेरुधन्वनः शिवस्य जयेन, कर्मणि षष्ठी, उन्नतस्य उन्नतिं प्राप्तस्य कुसुमायुधस्य पुष्पबाणस्य वलक्षा शुभ्रा कीर्तिः समाख्या यश इति यावत् ॥

त्रिपुरध्वंसोद्युक्तस्य शिवस्य सर्वोन्नतेन मेरुणा धनुष्मतः तस्माद्धनुषोप्युत्तुङ्गतरत्वं तस्य व्योमकेशस्योन्नेयम्। स्वशरीरदाहेनापि तस्मिन्महोन्नते भगवति भर्गे पार्वतीविषयकरतिभावनिर्वाहेण तज्जयः सम्पादितः। तत्र च शैलधनुषः पुष्पायुधेन विजयः पञ्चशरस्य अलौकिकं प्रभावं द्योतयति। तादृशा जयेन सिद्धैवास्य महोन्नतिरिति नात्र चित्रम्। कीर्तिश्च वलक्षा कामदेवस्य। आब्रह्मकीटं त्रिभुवनजयेन स्मरस्य कीर्तेर्न तथा वलक्षत्वं यथा हरविजये रतिनाथस्य। अत्र तु जगद्रूपापत्यसम्पादकपार्वतीपरमेश्वरपरिणयपर्यवसायित्वाज्जयस्य। शिव-शक्तियोगरूपस्यास्य परिणयस्य पावनतमत्वादनङ्गस्य कीर्तिः वलक्षा शुभ्रा निर्मलेति यावत् ॥

पार्वतीमन्दहसितप्रभैव कन्दर्पकृतहरविजयजातकीर्तिहेतुरिति सिद्धे हेतुहेतुमतोः अभेदाध्यवसायात् स्मितश्रीः कुसुमायुधकीर्तिरित्युक्तम्। हेत्वलङ्कारः। 'हेतुहेतुमतोरैक्यं हेतुं केचित् प्रचक्षते' इति तल्लक्षणात् ॥२॥

**प्रमथ्यमानामृतराशिवीचि-　प्रोद्गच्छदच्छाच्छतुषारकल्पाः ॥**
**युष्माकमिच्छां विदधत्वमोघां　विघ्नेशमातुर्दरहासलेशाः ॥३॥**

प्रमथ्येति— विघ्नेशमातुः पार्वत्याः दरहासलेशाः मन्दस्मितलवाः युष्माकम् इच्छाम् वाञ्छाम् अमोघाम् अविफलां विधेयविशेषणं विदधतु कुर्वन्तु। गणेशमातृमन्दस्मितस्तुत्या अभीष्टसिद्धिप्रदायकाशिषः प्रयुक्ताः। पूर्वार्धेनैकपदेन मन्दस्मितलेशान् विशिनष्टि। प्रमथ्यमानामृतराशिवीचिप्रोद्गच्छदच्छाच्छतुषार-

कल्पाः प्रमथ्यमानस्य विलोडचमानस्य अमृतराशेः क्षीरोदस्य वीचिभ्यः ऊर्मिभ्यः प्रोद्गच्छन्तः शीघ्रप्रबलमथनात् प्रकर्षेण निष्पन्ना अच्छाच्छा अतिस्वच्छाः तुषारकल्पाः ईषदूनाः अम्बुकणाः प्रसन्नशीकरोपमा इति यावत्। सुनिर्मल-प्रसन्नसुखस्पर्शैः अमृततुषारैः दरस्मितलेशानामुपमितत्वात् सुखस्पर्शैकवेद्यत्वं प्रायेण स्थूलतया अदृश्यविलासत्वं च ध्वनिते ॥३॥

**चन्द्रातपः कश्चन सम्प्रसन्नो महेशनेत्रातिथितर्पणो नः ॥**
**मनोभिलाषं सफलीकरोतु महेश्वरीहासलवप्रकाशः ॥४॥**

चन्द्रातप इति— महेश्वरीहासलवप्रकाशः पार्वतीमन्दहासद्योतः नः अस्माकं मनोभिलाषम् अभीष्टविशेषं सफलीकरोतु सिद्धं विदधातु। कथंभूतः महे-श्वरीहासलवप्रकाशः ? महेशनेत्रातिथितर्पणः महेशस्य नेत्रे लोचने एव अतिथी ोजनीयौ भोजनार्थिनौ तौ तर्पयतीति महेशनेत्रातिथितर्पणः सम्प्रसन्नः समी-चीनप्रसन्नताविशिष्टः कश्चन चन्द्रातपः ज्योत्स्नाविशेषः। तद्रूपो देवीमन्द-हासप्रकाशोऽस्मदभीष्टसिद्धिं विदधात्वित्यभ्यर्थना। यद्यपि चन्द्रातपहासलव-प्रकाशयोस्ताद्रूप्यकथनाद्रूपकमलङ्कारः, तथाऽपि महेश्वरीहासलवप्रकाशे आरो-प्यमाणस्य चन्द्रातपविशेषस्य महेशनेत्रातिथेयोपयोगित्वात्परिणामोऽलङ्कारः । सुखशीतलामृतगर्भचन्द्रातपविशेषेण हासलवेन महेशनेत्रयोः अमृताशनत्वे सिद्धे, तस्य सर्वेशदृष्टिसन्तर्पणस्य सकलतापोपशमनत्वं मनोभिलाषपूरणेन निर्वाह्य-मिति अलङ्कारेण वस्तुध्वनिः ॥४॥

**वलक्षवक्षोजपटाञ्चलेन चलेन सार्धं कृतकेलयो नः ॥**
**पुरत्रयारातिकलत्रहास- भासो निरासं विपदां क्रियासुः ॥५॥**

वलक्षेति— चलेन चञ्चलेन, वलक्षवक्षोजपटाञ्चलेन वलक्षं धवलं वक्षोजयोः स्तनयोः पटाञ्चलं वस्त्राग्रं तेन सार्धं धवलोत्तरीयाग्रेण सहेति यावत्। कृतकेलयः कृताः केलयः परीहासाः याभिस्ताः पुरत्रयारातिकलत्र-हासभासः पार्वतीमन्दहासशोभाः नः अस्माकं विपदाम् आपदाम् निरासं क्रियासुः सर्वापद्विनिवारणं विधेयासुरित्याशीरूपप्रार्थना । देव्याः शुभ्रस्मितहासभासां शुभ्रोत्तरीयवसनचलाञ्चलेन सह क्रियमाणानां केलीनाम् आनुरूप्यात् समा-

लङ्कारः। तदुक्तं विश्वनाथेन 'समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः' इति ॥५॥

**भूयासुरायासहराणि तानि स्मितानि भूतेशमृगीदृशो नः ॥**
**येषां त्विषो बिभ्रति दिग्वधूटी- गण्डेषु कर्पूरपरागलीलाम् ॥६॥**

भूयासुरिति— भूतेशमृगीदृशः शिवसुन्दर्याः तानि, यानि उत्तरार्धेन वर्ण्यमानानि स्मितानि दरहसितानि नः अस्माकम् आयासहराणि श्रमापनोदनानि भूयासुः। येषां स्मितानां त्विषो भासः दिश एव वधूटचस्तासां गण्डेषु कपोलस्थलेषु दिग्वधूटीगण्डेषु कर्पूरपरागलीलां कर्पूरस्य घनसारस्य परागाणां धूलीनां लीलां बिभ्रति। स्मितत्विट्सु कर्पूरपरागगतलीलापदार्थारोपः पदार्थवृत्तिनिदर्शनाऽलङ्कारः। इमां ललितोपमामाह दण्डी। उपात्तयोः स्मितत्विट्-कर्पूरपरागपदार्थयोरर्थभेदः, उपमाने उपमेयधर्मारोपात् औपम्यपर्यवसायी । तथा चोक्तं रसगङ्गाधरकृता 'उपात्तयोरर्थयोरर्थभेद औपम्यपर्यवसायी निदर्शना' इति। उपमेयभूतशिवसुन्दरीस्मितत्विषां कर्पूरपरागगतोपमानधर्मेण सूक्ष्मतया सर्वदिग्व्यापकत्वं सर्वशोभावहत्वं शीतसुखस्पर्शत्वं च द्योत्यन्ते। शीतलोपचारस्य आयासहरत्वप्रसिद्धेः आशीरूपप्रार्थनस्यौचित्यमवधेयम् ॥६॥

**कुर्वन्तु कामं सफलं (त्व)मदीयं कुलाद्रिकन्याहसितानि तानि ॥**
**येषां मयूखैः क्रियते सिताद्रे- रुद्यानवाटीषु नवो वसन्तः ॥७॥**

कुर्वन्त्विति— यानि उत्तरार्धेन वक्ष्यमाणानि तानि कुलाद्रिकन्याहसितानि पार्वतीस्मितानि त्वदीयं तवेमं कामं मनोरथं सफलं फलितं कुर्वन्तु विदधतु। येषां कुलाद्रिकन्याहसितानां मयूखैः किरणैः सिताद्रेः हिमाचलस्य उद्यानवाटीषु उपवनराजिषु नवो वसन्तः कुसुमप्रसवसमयः क्रियते। हसितमयूखानां नित्यसन्निहितत्वात् वसन्तस्य नवत्वम्। तच्च नित्यकुसुमितोपवनत्वं बोध्यम्। उपवनराजिषु नित्याभिनववसन्तविलासाधायकत्वात्तेषां मयूखानाम् अमृतात्मकत्वं द्योत्यम्। अमृतकिरणो ह्योषधीशः॥

अत्र हसितमयूखानां नववसन्तकरणोपयोगित्वं निबध्यते, न तु गम्यमाना-

मृतमयूखानाम्। तस्मादारोप्यमाणानाम् अमृतमयूखानाम् आरोपविषयस्मित-मयूखात्मतया परिणमनात्परिणामालङ्कारः ॥७॥

**आम्रेडितं भूषणचन्द्रभासां नासाविभूषामहसां द्विरुक्तिः ॥**
**पुरारिनारीस्मितकान्तयो मे पूर्णानि कुर्वन्तु समीहितानि ॥८॥**

आम्रेडितमिति– पुरारिनारीस्मितकान्तयः पार्वतीमन्दहसितप्रभाः मे मम समीहितानि अभीष्टानि पूर्णानि सिद्धानि कुर्वन्तु। कथंभूताः पुरारिनारी-स्मितकान्तयः? भूषणचन्द्रभासां हरशिरोऽलङ्कारभूतचन्द्रकान्तीनाम् आम्रेडितं द्विस्त्रिरुक्तं, पुनश्च नासाविभूषामहसां नासिकाभरणमणिशोभानां द्विरुक्तिः पुनरुक्तिः ॥

स्मितकान्तिषु आरोप्यमाणानां भूषणचन्द्रभासां विभक्तिभेदाद्वैयधिकर-ण्येन रूपकम्। एवं भूषामहसां स्मितकान्तीनां च विभक्तिभेदः। रूपकं च विषयस्य उपमेयस्य विषयिणा उपमानेन ताद्रूप्याद्रञ्जनं 'विषय्यभेदताद्रूप्य-रञ्जनं विषयस्य यत्' इति रूपकलक्षणात् ॥८॥

एवमष्टाभिः श्लोकैर्भगवत्याः स्मितस्य सर्वजगन्माङ्गल्य-सर्वाभीष्टप्रदाय-कत्वादि स्तुत्वा निर्मायेत्यारभ्यास्तबकान्तं परिणयकल्याणवार्ताः प्रतुष्टूषुः तत्र प्रसक्तमङ्गबन्धसौन्दर्यादि देव्याः स्तौति ॥

**निर्माय विश्वालयमम्ब शर्व- स्त्वया समं शिल्पविदा स शिल्पी ॥**
**विहर्तुमिच्छन्नयि वोढुमैच्छ- न्नारीं भवन्तीं पुरुषो भवंस्त्वाम् ॥९॥**

निर्मायेति— अम्ब! सः प्रसिद्धः तच्छब्दवाच्यः शर्वः सर्वेश्वरः शिवः स्वयं शिल्पी निर्माणकलाविचक्षणः शिल्पं वेत्तीति शिल्पवित् तया शिल्पविदा त्वया समं सह विश्वं ब्रह्माण्डमेवालयः निवासप्रदेशः तं निर्माय कल्पयित्वा, अयि सम्बोधने, विहर्तुं सञ्चरितुं क्रीडितुमिति यावत्, इच्छन् काङ्क्षन्नपि स्वयं पुरुषो भवन् जायमानः, नारीं भवन्तीं भुवः शतुर्ङीप् स्त्रीरूपतया जायमानां त्वां वोढुं भर्तुम् ऐच्छत् अकामयत। उत्पूर्वकस्य वहेरेव परिणयार्थत्वेऽपि शिवयोः नारी-पुरुषभावप्रेप्साकथनादत्र वहनपदं उद्वहनपर्यायत्वेनैव वाच्यम्।

विहारार्थे विश्वनिर्माणे शर्वेण अम्बासहचरेण निर्वर्तयितुमिष्टे, निर्माणात्परं स्त्री-पुरुषभावेन भार्या-भर्तृभावेच्छा सञ्जाता। तेन शर्वे वोढरि भर्तरि जायमाने, अम्बायां च वोढुम् अर्हायां भार्यायां जायमानायां कुतः शर्वस्य विहारेच्छापूर्तिः ? विश्वालयनिर्माणप्रारम्भिकेच्छा जगन्माता-पितृत्वबीजभूतदाम्पत्यभावनिर्वाहिका जातेत्यर्थः ॥९॥

**दिव्यं दुकूलं धवलं दधाना　　वेण्या फणीन्द्रोपमया लसन्ती ॥**
**प्रफुल्लराजीवविलोचना त्वं　　प्रपञ्चभर्तुर्नयनान्यहार्षीः ॥१०॥**

दिव्यमिति– अम्ब ! प्रफुल्लराजीवविलोचना विकसितकमलनयना त्वं प्रपञ्चभर्तुः जगत्पतेः शिवस्य नयनानि त्रीण्यपि अहार्षीः समाकर्षः। तादृक् सौभाग्यं तव सरोजनेत्रयोः, यादृशा हरस्य सोमसूर्याग्निनेत्राणि हृतानि जितानीति यावत्। पार्वतीसन्दर्शनपारवश्यात् हरस्य ज्वलननेत्रस्यापि निर्वीर्यत्वमुक्तं भवति॥

कथंभूता त्वम् ? दिव्यं दिवि भवं न भौमं धवलं शुभ्रं दुकूलं वसनं दधाना परिदधाना, फणीन्द्रेण भोगिराजेनोपमा सादृश्यं यस्याः तया फणीन्द्रोपमया वेण्या संयतकबर्या लसन्ती राजमाना, तादृशी त्वम् अहार्षीरिति सम्बन्धः। वेणीबन्धस्य भोगीन्द्रस्य च नैल्यमसृणत्वादिसाधर्म्यात् औपम्यमुक्तम्। परिधानधवलिमा तु वेणीनीलिमलावण्यं पुष्णाति॥१०॥

**प्रत्यङ्गबन्धं ज्वलदुत्तमं ते　　भुजङ्गराजोपमवेणि रूपम् ॥**
**आत्मैकनिष्ठस्य च विश्वभर्तु-　　राराधयामास विलोचनानि ॥११॥**

प्रत्यङ्गबन्धमिति– प्रत्यङ्गबन्धम् अङ्गबन्धे वदनवक्षोजभुजलतादौ ज्वलत् परिस्फुटम् उत्तमं वरिष्ठं सर्वलक्षणलक्षितमिति यावत्। भुजङ्गराजोपमवेणि भुजङ्गराजेन नागेन्द्रेणोपमा सादृश्यं यस्याः सा वेणी केशबन्धो यस्य तत् ते तव रूपम् अङ्गसौष्ठवसम्पन्नं कर्तृ आत्मैकनिष्ठस्य आत्मनि स्वात्मनि एका केवला निष्ठा दृढस्थितिर्यस्य तस्य, चाप्यर्थे, विश्वभर्तुर्जगदीश्वरस्य विलोचनानि बहुवचनात् त्रीण्यपि आराधयामास तर्पयामास। लोकोत्तरसौन्दर्यदर्शनजन्यशीतलतया ज्वलनात्मकतृतीयनेत्रस्यापि शान्तिः अभूत्। तथाविधशान्तिजनकं त्वद्रूपकृतमाराधनम्। यद्यपि विश्वभर्तुः शिवस्य आत्मैकनिष्ठतया अनन्यविषयत्वम् अनिर्वाच्या धीरता च सिद्धे, तथाऽपि तन्नयना-

कर्षकलावण्यसौभाग्यादुमादेवीरूपं भगवतो हरस्य हृदयमावर्ज्य धीरतां विचाल्य तन्नयनाराधकम् अभूदिति चकाराद् गम्यते। एवं च विषयविमुखस्य कामदाहिनो नयनत्रयतर्पणरूपपदार्थनिष्पत्तेरसम्भावनीयवर्णनादसम्भवोऽलङ्कारः 'असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम्' इति तल्लक्षणात् ॥११॥

**अभूस्त्वमाद्यस्य मनोमदाय स चापि ते प्रीतिपदं बभूव ॥**
**न केवलं वां सकलस्य चासी- द्दाम्पत्यबन्धस्य तदम्ब बीजम् ॥१२॥**

अभूरिति– अम्ब ! त्वम् आद्यस्य सर्वेषां पुरुषाणां प्रथमस्य सर्वस्यापि मूलभतस्य पुरुषस्येति यावत्, मनोमदाय मनसश्चित्तस्य मदाय हर्षाय 'मदो रेतसि कस्तूर्या गर्वे हर्षेभदानयोः' इति त्रिकाण्डशेषः। अभूः आसीः। सः शिवश्चापि ते तव प्रीतिपदं प्रीतेर्मुदः पदं स्थानं बभूव। एवं पूर्वार्धेन शिवयोः परस्परप्रेमास्पदत्वमुक्त्वा तत्फलितमुत्तरार्धेनाह तत् अन्योन्यहर्षाधायकत्वं वां केवलं युवयोरेव दाम्पत्यबन्धस्य जाया च पतिश्च दम्पती तयोर्भावः दाम्पत्यं तदेव बन्धः अन्योन्याविश्लेष्यतारूपः सम्बन्धः तस्य बीजं कारणं नासीत् नाभवत्; किंतु सकलस्य दाम्पत्यबन्धस्य च लोके सर्वत्र दाम्पत्यभावस्येत्यर्थः बीजमासीत्। युवयोरन्योन्यप्रेमबन्धः प्रथमं युवयोः दाम्पत्यसम्पादकः अनन्तरं तत्फलिताज्जगद्रूपापत्याज्जायमानस्य सर्वस्यापि स्त्रीपुरुषलोकगतदाम्पत्यभावस्य कारणमभूदिति भावः। बीजमित्यत्र शिवयोरन्योन्यप्रेम्णो बीजत्वोक्त्या तयोर्दाम्पत्यस्य वृन्तत्वं ध्वन्यते बन्धशब्दप्रयोगात्। 'वृन्तं प्रसवबन्धनम्', फलं तु जगद्रूपमपत्यमुन्नेयम्। असत्यपत्ये जगति जगदीश्वरदाम्पत्यस्य वैयर्थ्यात् शैथिल्यापत्तेर्वा। तथा चाह भवभूतिः—

"अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोयमपत्यमिति पठ्यते" ॥

इति। अत्र शिवयोः परस्परप्रेमाधानरूपोपकारादन्योन्यं नामालङ्कारः ॥१२॥

**तवातिकान्ता नयनान्तवृत्ति- र्हासः पुरारेश्च नवेन्दुहारी ॥**
**उभौ विवाहोत्सवपूर्वरङ्गं निर्वर्तयामासतुरादिरामे ॥१३॥**

तवातीति– आदिरामे ! आदिसुन्दरि भगवति, तव नयनान्तवृत्तिः नयनान्तयोः अपाङ्गयोर्वृत्तिर्विलासः इत्यर्थः, अतिकान्ता अत्यन्तं कमनीया।

पुरारेः शिवस्य च हासः नवेन्दुहारी नव इन्दुरिव हारी मनोहरः। उभौ त्वन्नयनान्तवृत्तिः पुरारिहासश्च विवाहोत्सवपूर्वरङ्गं विवाहे पाणिग्रहणे य उत्सवः उत्सूते सुखमित्युत्सवः उद्धर्षः तस्य पूर्वरङ्गं पूर्वं रज्यतेऽस्मिन्निति पूर्वरङ्गः तं विघ्नशामकं कर्मविशेषं निर्वर्तयामासतुः निर्वाहयामासतुः। उमा-देव्याः कमनीयकटाक्षविलासरूपा वृत्तिः, शिवस्य अर्धेन्दुवद्रमणीयो मन्दहासश्च उभौ मिलितौ निष्प्रत्यूहम् उद्वाहमहोत्सवनिर्वाहकावभूताम् इति भावः। पूर्व-रङ्गमित्यनेन पार्वतीपरमेश्वरयोरुद्वाहस्य नाट्यत्वद्योतनेन रूपकध्वनिः। पूर्व-रङ्गश्च नाट्यशाला। तत्र क्रियमाणो रङ्गविघ्नापहो नान्दीपाठ-गीत-वादित्रादिविविधाङ्गकर्मविशेषोऽपि पूर्वरङ्गशब्देन व्यपदिश्यते। अत्र नयना-न्तवृत्तिरिति स्त्रीलिङ्गस्य हास इति पुँल्लिङ्गस्य च स्वारस्यात् नटी नटश्च पूर्वरङ्गं प्रकुर्वाणौ ध्वन्येते। लज्जितायाः वध्वाः विवाहकाले नयनान्तवृत्तिः औचित्यं पुष्णाति। तथा वरस्य मन्दहासश्च। उत्तरत्र च एतच्छायः 'ब्रह्माण्डरङ्गभाजो नट्याः शिवसूत्रधारसहचर्याः' इति श्लोको दृश्यमानो ऽवधेयः॥१३॥

**दातुं प्रभुः सान्त्वयितुं समर्थः　कर्तुं क्षमस्तर्जयितुं च शक्तः॥**
**संरक्षतान्मां तव सर्ववन्द्ये　करस्तुषारांशुभृता गृहीतः॥१४॥**

दातुमिति— सर्ववन्द्ये! सकलैरपि स्तुत्ये दातुम् अभीष्टं भक्तलोकायेति शेषः, प्रभुः ईशः। सान्त्वयितुं भक्तलोकं प्रीणयितुं समर्थः। कर्तुम् इच्छानु-सारेण किमपि भेदेनापि साधयितुं क्षमः, सर्वतन्त्रस्वतन्त्रत्वात्। तर्जयितुं भर्त्सयितु च शक्तः। एवं सामादिचतुर्विधोपायदक्षः तुषारांशुभृता चन्द्रधरेण शिवेन गृहीतस्तव करः अर्थाद्दक्षिणः, विवाहे दक्षिणपाणेरेव ग्रहणस्य विहित-त्वात्। मां संरक्षतात् पालयतु। रक्षणपरो दक्षिणकरो देव्याः प्रसिद्धः। देवीदक्षिणहस्तस्य चन्द्रभृद्ग्रहणेन विशेषितस्य दानसान्त्वनादिसामर्थ्यं स्वरसता-वहं बोध्यम्। एकस्यैव करस्य दान-सान्त्वन-करण-तर्जनोल्लेखनादुल्लेखा-लङ्कारः॥१४॥

**स्प्रष्टुं न शक्या परमे परैस्त्वं　स चान्यया चिन्तयितुं न शक्यः॥**
**त्वमेव शर्वस्य स एव तेऽम्ब　दाम्पत्यमेवं युवयोस्तु सत्यम्॥१५॥**

स्प्रष्टुमिति— अम्ब! परमे! उत्तमे! त्वं परैः ईश्वरात् अन्यैः स्प्रष्टु न शक्या। स चेश्वरः त्वद् अन्यया चिन्तयितु न शक्यः। शर्वस्य त्वमेव

नान्याऽस्ति। तव स एव नान्योऽस्ति। एवं युवयोस्तु शिव-शक्त्योरेव दाम्पत्यं सत्यं, अन्यत् दाम्पत्यं न सत्यम्॥

अत्र शिव-शक्त्योर्दाम्पत्यभावस्य अन्योन्यात्मकत्वमवियोज्यत्वं चोक्ते। अत एव यत्सत्यं दाम्पत्यं तदविकारि भवति नेतरत्॥

वस्तुतस्त्वेकमेव शिव-शक्त्योर्दाम्पत्यं सत्यं, अन्यानि लोके दाम्पत्यानि तद्विवर्ताः सर्वस्यापि पुञ्जातेः शिवमूलत्वात् सर्वस्याश्च स्त्रीजातेः शक्तिमूलत्वाच्चेति बोध्यम्॥१५॥

**निजाद्वतंसेन्दुत इन्दुमन्य- मुत्पाद्य ते शम्भुरदाद्वतंसम्॥**
**मूर्तामिवासौ शुभगात्रि रात्रिं प्राप्य त्वदीयां कबरीं चकासे॥१६॥**

निजादिति– शुभगात्रि! शुभानि मङ्गलानि गात्राणि अङ्गानि यस्याः सा शुभगात्री तस्याः सम्बुद्धिः, अम्ब! शम्भुः शिवः निजात् स्वस्मात् वतंसेन्दुतः वतंसभूतः भूषणभूत इन्दुश्चन्द्रः तस्मात् पञ्चम्यास्तसिल् अन्यम् इतरम् इन्दुम् उत्पाद्य सृष्ट्वा तं ते तुभ्यं वतंसं भूषणम् अदात् व्यतारीत्। असौ भूषणचन्द्रः त्वदीयां त्वत्सम्बन्धिनीं कबरीं केशवेशमित्यर्थः, मूर्तां गृहीतरूपां रात्रिं निशामिव प्राप्य चकासे भासितवानित्यर्थः। उद्वाहसमये वरेण शिवेन वध्वै पार्वत्यै उत्तमाङ्गाभरणं स्वात्मशिरोभूषणान्निष्पाद्य दत्तमिति भावः। नैल्यसाधर्म्याद्रात्रिकबर्योस्तादात्म्यसम्भावनया स्वरूपोत्प्रेक्षा। चकास इत्यत्र हरस्य पिशङ्गजटागतभूषणादपि पार्वत्याः नीलकबरीगतभूषणस्य भासनातिशयो द्योत्यते॥१६॥

**बभूविथागेन्द्रगृहे यदा त्वं स चेश्वरस्तत्र चकार वासम्॥**
**विलोकमानस्तव देवि विद्यु- त्पाञ्चालिकायाः कमनीयभावम्॥१७॥**

बभूविथेति–देवि! यदा त्वम् अगेन्द्रगृहे अगेन्द्रस्य पर्वतराजस्य पितुर्गृहे बभूविथ वासमकरोः, तदा यत्तदोर्नित्यसम्बन्धात् तदेत्यध्याहार्य, तत्र हिमाचले स ईश्वरश्च वासं चकार। किं कुर्वन्? विद्युत्पाञ्चालिकायाः विद्युन्मयी पाञ्चालिका कृत्रिमपुत्रिका तस्याः तव जाज्वल्यमानविद्युत्कृतपुत्रिकावत् स्थिताया इति यावत्, कमनीयभावं रामणीयकं विलोकमान आहरन् चक्षुषा वासं चकारेति सम्बन्धः। ज्योतिरुज्ज्वलरामणीयकसम्पन्नं तन्वीत्वं हरनयनाकर्षकं विद्युदित्यनेन गम्यते॥१७॥

**सिद्धं स वां साधयितुं प्रवृत्तो योगं प्रदग्धो मदनश्चकल्पे ॥**
**वशीति कीर्तिं गिरिशस्य भर्तुं तुभ्यं त्वपर्णेति यशश्च कर्तुम् ॥१८॥**

सिद्धमिति– अम्ब ! सः प्रसिद्धः मदनः मन्मथः वां युवयोः सिद्धं नित्यं न तु साध्यं योगं शिव-शक्तिदाम्पत्यरूपं सम्बन्धं साधयितुं निष्पादयितुं प्रवृत्तः उपक्रान्तः प्रदग्धः भस्मसात्कृतः सन्, गिरिशस्य शिवस्य वशी जितेन्द्रियः स्वाधीन इति कीर्तिं ख्यातिं भर्तुं पोषयितुं तुभ्यं तु अपर्णा तपश्चर्यायां पर्णाभ्यवहारं च त्यक्तवतीति हेतोः अपर्णेति यशः कर्तुं च चकल्पे प्रबभूव। कृच्छ्रं तपः प्रियलाभाय चरितवत्या अपर्णेति नाम देव्याः प्रसिद्धम्। महाकविश्चाह–

"स्वयंविशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः।
तदप्यपाकीर्णमिति प्रियंवदां वदन्त्यपर्णेति च तां पुराविदः" ॥

(कुमारसम्भवे ५ स. १८ श्लो.) इति। अत्र सिद्धं पार्वती-परमेश्वर-योगं साधयितु मदनस्य प्रवृत्तिर्हेतुः गिरिशस्य वशित्वकीर्तिभरणं हेतुमत् तथोमाया अपर्णेति यशःकरणं च। एवं हेतोर्हेतुमता सह वर्णनात् हेत्वलङ्कारः। तदुक्तं चन्द्रालोके – "हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते। असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम्" ॥ इति ॥१८॥

**घोरं तपश्चेद्रचितं त्वयाऽपि प्राग्रूपभर्तुः समनुग्रहाय ॥**
**विहाय यत्नं क इहाखिलाम्ब सम्बद्धमप्यर्थमुपैतु जन्तुः ॥१९॥**

घोरमिति– अखिलाम्ब ! त्वयाऽपि कर्त्र्या प्राग्रूपभर्तुः प्राग्रूपे पूर्वरूपे पूर्वं सतीत्वेनावस्थितायाः यः भर्ता पतिः तस्य समनुग्रहाय स्वाङ्गीकरणरूपप्रसादाय घोरं कठोरं तपः अनशनादिकृच्छ्रव्रतसाध्यं रचितम् अनुष्ठितं चेत्, इह को जन्तुर्जन्मी यत्नं विहाय प्रयत्नं विनेत्यर्थः, सम्बद्धमपि अर्थं साध्यत्वेन सिद्धत्वेन वा स्थितम् उपपन्नम् इष्टविषयम् उपैतु लभताम्। सिद्धपूर्वभर्त्रनुग्रहनिमित्तं घोरतपश्चरणं पार्वत्या अप्यावश्यकं चेत् किमुत अन्यस्याल्पस्य जन्तोरिष्टार्थलाभे अत्यन्तमावश्यकः प्रयत्न इति वक्तव्यम्? आवश्यकमेवेत्यर्थः। कैमुत्यन्यायेनार्थापत्तिरलङ्कारः। 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' इति तल्लक्षणात् ॥१९॥

**ज्वलत्कपर्दो दहनाङ्कभालः कपालमाली करिकृत्तिवासाः ॥**
**भुजङ्गभूषो भसिताङ्गरागः पुष्पेषुवैरी परुषाट्टहासः ॥२०॥**

ज्वलदिति– ज्वलत्कपर्दो ज्वलन् भ्राजमानः कपर्दो जटाजूटः यस्य सः, दहनाङ्कभालः दहनः अग्निः अङ्कः कलङ्कः यस्मिन् तत् दहनाङ्कं भालं ललाटस्थलं यस्य सः, कपालमाली कपालानां शिरोऽस्थ्नां माला स्रक् कपालमाला सा अस्यास्तीति कपालमाली, करिकृत्तिवासाः करिकृत्तिः गजत्वक वासः परिधानं यस्य सः, भुजङ्गभूषः भुजङ्गाः सर्पा भूषा अलङ्कृतिर्यस्य सः। भसिताङ्गरागः भसितं भस्म अङ्गरागः अङ्गलेपो यस्य सः, पुष्पेषुवैरी पुष्पेषोः कुसुमबाणस्य मदनस्य वैरी शत्रुः। पुष्पौघवैरी इति पाठे पुष्पसमूहस्य मदनबाणभूतस्य वैरी। कामारेर्वैराग्यप्रसिद्धिसूचकं च शृङ्गाराङ्गभूतपुष्पौघवैरित्वमिति बोध्यम्। परुषाट्टहासः परुषः कर्कशः अट्टहासः अतिहासः यस्य सः, "अट्टावतिशयक्षामौ" इति यादवः। अतिशयवाचकोऽट्टशब्दः अतिक्रमणार्थादट्टतेर्निष्पन्नत्वात्। उत्तरश्लोके पुरुष इत्यनेनान्वयः ॥२०॥

**श्मशानवासी पुरुषस्त्रिशूली जहार ते चेदनघाङ्गि चेतः ॥**
**दृष्टान्तमर्थोऽयमवाप नैव प्रीतिर्बहिःकारणमाश्रितेति ॥२१॥**

श्मशानवासीति– श्मशानवासी श्मशाने पितृवने वस्तुं शीलमस्येति श्मशानवासी त्रिशूली त्रिमुखं शूलं त्रिशूलं तदस्यास्तीति त्रिशूली पुरुषः पुमान् अनघाङ्गि! अनवद्यगात्रि, ते तव चेतः मनः जहार आचकर्ष चेत्, सर्वलक्षणसम्पन्नाङ्गीं त्वां जटाजूटनेत्रज्वलन-कपालमालादिभिः अतिघोरजुगुप्सावहैः शृङ्गारध्वंसनैः विशेषितः पुरुषः तव हृदयाकर्षकोऽभूदिति चेत्, तर्हि प्रीतिः प्रियता बहिःकारणमाश्रिता बाह्योपाधिमाश्रित्य नैव प्रवर्तत इत्ययमर्थः दृष्टान्तं निदर्शनम् अवाप लेभे। प्रीतिर्बाह्योपाधिसंश्रयेत्यर्थस्य नास्ति निदर्शनम्। अनेनान्तर एव कोऽपि हेतुः प्रेम्ण इति स्पष्टमवगम्यते। आह च भवभूतिः– "व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते" इति। अत्र प्रकृतेनाप्रकृतसमर्थनादर्थान्तरन्यासोऽलङ्कारः ॥२१॥

**रूपं पुरारेरथवा तदेतत् सेयं च चेष्टा समयान्तरेषु ॥**
**कान्तं वपुः कान्ततराश्च लीला- स्त्वया समं खेलितुमेष धत्ते ॥२२॥**

रूपमिति— अथवा कवेर्विकल्पोऽयं वक्ष्यमाणोऽर्थः। समयान्तरेषु अन्येषु समयेषु, न तु पार्वत्या सह विहारकाले। तदेतद्रूपं ज्वलत्कपर्दादि प्रागुक्तं रूपं भवति। सेयं च चेष्टा श्मशानवासादिश्च समयान्तरेषु भवतीत्यध्याहार्यम्। एष भगवान् तव कान्तः त्वया समं खेलितु क्रीडितुं कान्तं कमनीयं वपुः गात्रं, कान्ततराः कमनीयतराः लीलाश्च धत्ते धारयते। इच्छानुसारेणोपपन्नं रूपं स्वीकर्तु प्रभुर्हि शम्भुः ॥

एवं च पार्वत्या सह विहारे कमनीयवपुर्धारी इति शिवयोः शृङ्गारवर्णने मुक्तभोगिकटकेन पाणिनेत्यारभ्य द्वादशस्तबके वक्ष्यते ॥२२॥

**प्रहृष्टयक्षः समवेतसिद्धो नृत्यद्गणेन्द्रो विकसन्मुनीन्द्रः ॥**
**भूयोऽपि योगो युवयोर्हिमाद्रौ बभार मातर्महमद्वितीयम् ॥२३॥**

प्रहृष्टेति— मातः! प्रहृष्टयक्षः प्रहृष्टाः मुदिताः यक्षाः देवयोनिविशेषाः हिमाचलवासिनः यस्मिन् सः, समवेतसिद्धः समवेताः सम्मिलिताः सिद्धाः सिद्धपुरुषाः यस्मिन् सः, नृत्यद्गणेन्द्रो नृत्यन्तः गणेन्द्राः प्रमथगणश्रेष्ठाः यस्मिन् सः, विकसन्मुनीन्द्रः विकसन्तः उल्लसितमानसाः मुनीन्द्राः तापसश्रेष्ठाः यस्मिन् सः। युवयोः शिवयोः भूयोऽपि पुनरपि योगः प्रकटितदाम्पत्यः समागमः हिमाद्रौ हिमाचले अद्वितीयम् अनुपमं महम् उत्सवं बभार पुपोष। प्रहृष्टपक्ष इति पाठे प्रहृष्टौ वधू-वरपक्षौ यस्मिन्निति विग्रहः, पार्वतीपक्षः हिमवद्बन्धुवर्गः, शिवपक्षस्तु प्रमथगणयक्षराजादिः ॥२३॥

**महेश्वरस्त्वां परिणीय लेभे यावात्मजौ द्वावनघाङ्गि मुख्यौ ॥**
**एकस्तयोर्भ्राम्यति विश्वमत्तुं भूभृत्तटीराश्रयते बतान्यः ॥२४॥**

महेश्वर इति— अनघाङ्गि अनवद्यविग्रहे, महेश्वरस्त्वां परिणीयोद्वाह्य यौ मुख्यौ प्रधानौ द्वौ आत्मजौ तनुजन्मानौ लेभे प्राप, तयोर्द्वयोः एको गणपति विश्वमत्तुं भोक्तुं भ्राम्यति अटति। गणपतेर्भुक्तिप्रियत्वं लम्बोदरत्वादिलक्षितं प्रसिद्धम्। अन्यः भूभृत्तटीः पर्वतभूमीः आश्रयते आश्रित्य वसति। बत! विस्मये। एको भ्राता भ्रमणशीलः, अन्यः न क्वापि गच्छन् सुखेन स्थिरो वसतीति

विस्मयः ॥ स्कन्दस्य पर्वतगुहावासित्वं नगरन्ध्रकृद्गुहादिनामभिः प्रख्यातम् ॥

जगत्कुटुम्बयोः शिवयोः सुरासुरमानवादिजनकत्वेऽपि स्कन्द-गणपत्योरात्मजातत्वे वैशिष्ट्यं द्योतयितु तौ मुख्यत उक्तौ ॥२४॥

**सङ्कीर्तयन्त्यो जगतां जनन्याः कल्याणवार्ताः कमनीयकीर्तेः ॥**
**इमाः प्रमोदाय सतां भवन्तु सन्दर्भशुद्धा उपजातयो नः ॥२५॥**

सङ्कीर्तयन्त्य इति– कमनीयकीर्तेः रमणीययशसः जगतां लोकानां जनन्याः मातुः कल्याणवार्ताः परिणयाधिकृतमङ्गलप्रवृत्तीः सङ्कीर्तयन्त्यः समीचीनतया गायन्त्यः सन्दर्भशुद्धाः सन्दर्भे पदवाक्यगुम्फनपद्यरचने निबद्धे शुद्धाः निर्दुष्टाः पदपदार्थवाक्यवाक्यार्थदोषरहिताः इमाः एवं रचिताः नः अस्माकम् उपजातयः उपजातिवृत्तनिबद्धाः श्लोकाः सतां सज्जनानां प्रमोदाय सन्तोषाय भवन्तु कल्पन्ताम् ॥२५॥

पञ्चमः स्तबकः सव्याख्यः समाप्तः

# षष्ठः स्तबकः

अथ द्वितीयशतकस्य द्वितीयेऽस्मिन् स्तबके विश्ववैभवसम्पत्तिर्देव्याः स्तूयते ॥

**हर्तारः शशिकीर्तेः कर्तारो नवभासाम् ॥**
**भर्तारो मम सन्तु स्कन्दाम्बादरहासाः ॥१॥**

हर्तार इति– शशिकीर्तेः शशिनश्चन्द्रस्य कीर्तेः ख्यातेः हर्तारः अपहर्तारः आह्लादका अमृतकिरणयशोतिशायिन इति यावत्। नवभासां नवानां प्रत्यग्राणां भासां विद्युतीनां कर्तारो विधातारः नवनवविकासशालिनः इति यावत्, अभिनवाभ्युदयविधायकाः आश्रितानामिति वा। स्कन्दाम्बादरहासाः स्कन्दाम्बायाः पार्वत्याः दरहासाः मन्दहासाः मम भजकस्य भर्तारः पोषकाः सन्तु भवन्त्वित्यभ्यर्थना ॥१॥

**दिग्वल्लीष्वतिशुभ्रां कुर्वन्तः कुसुमर्द्धिम् ॥**
**भूयासुस्तव भूत्यै मन्मातुः स्मितलेशाः ॥२॥**

दिग्वल्लीष्विति–दिग्वल्लीषु दिश एव वल्लयः लताः तासु अतिशुभ्राम् अत्यच्छां कुसुमर्द्धि कुसुमानाम् ऋद्धिं समृद्धिं कुसुमप्रसूतिसम्पदं कुर्वन्तः वितन्वन्तः मन्मातुः पार्वत्याः स्मितलेशाः मन्दहासाः तव भूत्यै ऐश्वर्यायेत्यर्थः भूयासुः इति मङ्गलाशासनम्। अत्र दिश एव वल्लय इति उत्तरपदार्थप्राधान्यादवधारणापूर्वपदकर्मधारयः समासः, न तु वल्लय इव दिश इति पूर्वपदार्थप्रधान उपमितसमासः, वल्लीष्वेव कुसुमर्द्धिकरणस्य सम्भवात्। अथ स्मितलेशानां कुसुमर्द्धिकारकत्वोक्त्या तेषाम् अमृतकिरणात्मकत्वं गम्यते, रसात्मनः सोमस्यैवौषधीशत्वप्रसिद्धेः। दिग्वल्लीष्वित्यत्र एकदेशविवर्ति रूपकमलङ्कारः। यथा लताः कुसुमप्रसवसम्पन्नाः स्पृहणीयशोभाः तथा दिशः सर्वाः स्वोचितरमणीयशोभासम्पन्नाः पार्वतीमन्दहासेभ्य इति भावः। अत्र दिग्वल्लीष्विति बहुवचनात् सर्वत्र मन्दहासानां वैभवम् उक्तम्। महाप्रभावस्य मन्दहासवैभवस्य विलासादेव विश्वस्मिन् सर्वाणि वस्तूनि भूतानि च तत्तद्गुणविशिष्ट-

विस्मयः ॥ स्कन्दस्य पर्वतगुहावासित्वं नगरन्ध्रकृद्गुहादिनामभिः प्रख्यातम् ॥

जगत्कुटुम्बयोः शिवयोः सुरासुरमानवादिजनकत्वेऽपि स्कन्द-गणपत्योरात्मजातत्वे वैशिष्ट्यं द्योतयितुं तौ मुख्यत उक्तौ ॥२४॥

**सङ्कीर्तयन्त्यो जगतां जनन्याः कल्याणवार्ताः कमनीयकीर्तेः ॥**
**इमाः प्रमोदाय सतां भवन्तु सन्दर्भशुद्धा उपजातयो नः ॥२५॥**

सङ्कीर्तयन्त्य इति– कमनीयकीर्तेः रमणीययशसः जगतां लोकानां जनन्याः मातुः कल्याणवार्ताः परिणयाधिकृतमङ्गलप्रवृत्तीः सङ्कीर्तयन्त्यः समीचीनतया गायन्त्यः सन्दर्भशुद्धाः सन्दर्भे पदवाक्यगुम्फनपद्यरचने निबद्धे शुद्धाः निर्दुष्टाः पदपदार्थवाक्यवाक्यार्थदोषरहिताः इमाः एवं रचिताः नः अस्माकम् उपजातयः उपजातिवृत्तनिबद्धाः श्लोकाः सतां सज्जनानां प्रमोदाय सन्तोषाय भवन्तु कल्पन्ताम् ॥२५॥

पञ्चमः स्तबकः सव्याख्यः समाप्तः

## षष्ठः स्तबकः

अथ द्वितीयशतकस्य द्वितीयेऽस्मिन् स्तबके विश्ववैभवसम्पत्तिर्देव्याः स्तूयते ॥

**हर्तारः शशिकीर्तेः कर्तारो नवभासाम् ॥**
**भर्तारो मम सन्तु स्कन्दाम्बादरहासाः ॥१॥**

हर्तार इति– शशिकीर्तेः शशिनश्चन्द्रस्य कीर्तेः ख्यातेः हर्तारः अपहर्तारः आह्लादका अमृतकिरणयशोतिशायिन इति यावत्। नवभासां नवानां प्रत्यग्राणां भासां विद्युतीनां कर्तारो विधातारः नवनवविकासशालिनः इति यावत्, अभिनवाभ्युदयविधायकाः आश्रितानामिति वा। स्कन्दाम्बादरहासाः स्कन्दाम्बायाः पार्वत्याः दरहासाः मन्दहासाः मम भजकस्य भर्तारः पोषकाः सन्तु भवन्त्वित्यभ्यर्थना ॥१॥

**दिग्वल्लीष्वतिशुभ्रां कुर्वन्तः कुसुमर्द्धिम् ॥**
**भूयासुस्तव भूत्यै मन्मातुः स्मितलेशाः ॥२॥**

दिग्वल्लीष्विति–दिग्वल्लीषु दिश एव वल्लयः लताः तासु अतिशुभ्राम् अत्यच्छां कुसुमर्द्धिं कुसुमानाम् ऋद्धिं समृद्धिं कुसुमप्रसूतिसम्पदं कुर्वन्तः वितन्वन्तः मन्मातुः पार्वत्याः स्मितलेशाः मन्दहासाः तव भूत्यै ऐश्वर्यायेत्यर्थः भूयासुः इति मङ्गलाशासनम्। अत्र दिश एव वल्लय इति उत्तरपदार्थप्राधान्यादवधारणापूर्वपदकर्मधारयः समासः, न तु वल्लय इव दिश इति पूर्वपदार्थप्रधान उपमितसमासः, वल्लीष्वेव कुसुमर्द्धिकरणस्य सम्भवात्। अथ स्मितलेशानां कुसुमर्द्धिकारकत्वोक्त्या तेषाम् अमृतकिरणात्मकत्वं गम्यते, रसात्मनः सोमस्यैवौषधीशत्वप्रसिद्धेः। दिग्वल्लीष्वित्यत्र एकदेशविवर्ति रूपकमलङ्कारः। यथा लताः कुसुमप्रसवसम्पन्नाः स्पृहणीयशोभाः तथा दिशः सर्वाः स्वोचितरमणीयशोभासम्पन्नाः पार्वतीमन्दहासेभ्य इति भावः। अत्र दिग्वल्लीष्विति बहुवचनात् सर्वत्र मन्दहासानां वैभवम् उक्तम्। महाप्रभावस्य मन्दहासवैभवस्य विलासादेव विश्वस्मिन् सर्वाणि वस्तूनि भूतानि च तत्तद्गुणविशिष्ट

तया ध्रियन्त इति द्योतयितु सर्वत्र दिक्सन्तत्यविच्छेदविकासव्यञ्जकं दिग्वल्ली-कुसुमप्रसवसमृद्धिकरणमुक्तम्। अत्र दिक्षु वल्लीत्वारोपः शाब्दः। स्मित-लेशैः कर्तृभिः कुसुमद्धर्चारोपणेनार्थसामर्थ्यादाक्षिप्तः दिग्विकास आर्थः, न चेयमेकदेशवर्तिन्युपमा विकस्वरकुसुमसमृद्धिमत्त्वधर्मस्य आरोप्यमाणासु वल्लीषु दिगात्मतया वर्तनात् दिक्षु चोपचरितत्वात् ॥२॥

**एकश्चेत्तव शक्तो ब्रह्माण्डस्य भवाय ॥**
**भर्गप्रेयसि हासः किं स्तोत्रं तव भूयः ॥३॥**

एकश्चेदिति– भर्गप्रेयसि रुद्रकान्ते मातः, तव एको हासः ब्रह्माण्डस्य विश्वस्य भवाय उद्भवाय शक्तः प्रभुश्चेत्, किं भूयः कि पुनः स्तोत्रं त्व-त्प्रभाववर्णनपरं भवेत्। हासश्च सन्ततं मुखविकसितं भगवत्याः। क्षण-हसितवैभवात् सर्वस्मिन् जगत्युत्पन्ने, किं स्तोत्रमलं माहाभाग्यं तव व्याख्या-तुम्? नेत्यर्थः। स्मितस्य जगत्स्रष्टृत्वं प्रायशः पूर्वैर्ग्रन्थकृद्भिर्वर्ण्यते। भाम-तीकारैरपि 'स्मितमेतस्य चराचरम्' इति ब्रह्म स्तुतम् ॥३॥

**उद्याने वियदाख्ये कालि त्वां विहरन्तीम् ॥**
**गोलैः कन्दुककल्पै- रल्पा वाक्किमु माति ॥४॥**

उद्यान इति– कालि भगवति वियदाख्ये वियत् आकाशम् आख्या नाम यस्य तस्मिन् उद्याने उपवने कन्दुककल्पैः ईषदसमाप्ताः कन्दुकाः गेन्दुकाः तैः गोलाकारक्रीडनकसदृशैरिति यावत् गोलैः खगोलैः रवीन्दुतारकात्मभिः विहरन्तीं क्रीडन्तीं त्वाम् अल्पा लघ्वी वाक् किमु माति? न मातुं शक्नोती-त्यर्थः। अनन्तब्रह्माण्डकोटेरवकाशं ददताकाशं तव विहारोपवनं चेत् तत्र चराणि ज्योतींषि च क्रीडनकानि चेत्, त्वम् इयतीति का वा वाक् परिच्छेत्तुं प्रभवति? इयत्तापरिच्छेदरहिता भगवती वाग्विषयं नावतरतीति भावः ॥४॥

**खं क्रीडाभवनं ते कः कार्यालय एषः ॥**
**पृथ्वीयं बहुलाम्ना मातर्भोजनशाला ॥५॥**

खमिति– मातः! ते तव खम् आकाशं सर्वव्यापकं क्रीडाभवनं विहार-स्थलम्, एष कः अमुत्र आदित्यमण्डलः कार्यालयः जगत्कार्यनिर्वाहप्रदेशः, बहु-

लान्ना बहुलं भूरि अन्नं भोग्यं यस्याः सा इयं पृथ्वी भोजनशाला भवतीति पृथगध्याहार्यम्। अत्र देवीविषये भोग-भोजनयोरविशेषो बोध्यः। "को ब्रह्मात्मानिलार्केषु" इति विश्वप्रकाशः। कः आदित्यः स्वर्लोकः यत्र देवानाम् आधिकारिकाणां जगत्कार्यनिर्वाहक्रमः व्यवस्थाप्यते। अतः कः कार्यालयः उक्तः। खमन्तरिक्षं भुवर्लोको यत्र आकाशे खगोलैः क्रीडनकैः विहारो भगवत्याः पूर्वश्लोके गीतः। इयं च पृथ्वी भूर्लोकः यः सर्वैरधिकृतैर्देवैर्द्वारा भुज्यते देव्या। एवं भूर्भुवःस्वरिति लोकत्रयस्य क्रमशः भोजनविहारकार्यनिर्वाहस्थलत्वं प्रतिपादितम् ॥५॥

**बुद्धीनामसि दात्री सिद्धीनामसि नेत्री ॥**
**वीर्याणामसि पेटी कार्याणामसि धाटी ॥६॥**

बुद्धीनामिति— बुद्धीनां नानाशास्त्रीयाणां सकलकलाकौशलाविष्कर्त्रीणां च धियां दात्री असि, सिद्धीनां सर्वोद्यमफलरूपिणीनाम् अणिमाद्यद्भुतरूपिणीनां वा नेत्री प्रापयित्री असि, वीर्याणां पेटी मञ्जूषा असि, सकलविधपराक्रमनिधानभूतेत्यर्थः। कार्याणां कर्तव्यानां कर्मणां धाटी अभ्यासत्तिः असि कार्याण्यभिमुखीभूय तद्भङ्गीत्वेनासन्ना इत्यर्थः। धाटी अभ्यासादनमिति हेमचन्द्रः ॥६॥

**विद्यानामसि भावो हृद्यानामसि हावः ॥**
**देवानामसि लीला दैत्यानामसि हेला ॥७॥**

विद्यानामिति— विद्यानां चतुर्दशानां वेदादीनां भावोऽसि सकलविद्यातात्पर्यभूतेत्यर्थः। हृद्यानां रमणीयाना हावो विलासोऽसि। सर्वेषु रमणीयेषु यो विलासो वर्तते, स त्वमेवेत्यर्थः। देवानां लीला असि देवेषु यत्स्पृहणीयं विलसितं तत् त्वमेव असि, दैत्यानाम् असुराणां हेला अवज्ञा असि, "हेलाऽवज्ञाविलासयोः" इति नानार्थरत्नमाला, दैत्यकुलतिरस्कर्त्रीत्यर्थः ॥७॥

**गन्तॄणामसि चेष्टा स्थाणूनामसि निष्ठा ॥**
**लोकानामसि मूलं लोकादेरसि जालम् ॥८॥**

गन्तॄणामिति— गन्तॄणां गतिमतां चेष्टा गतिः असि। गन्तुश्चरस्य गन्तृत्वाविष्कर्त्री शक्तिरिति यावत्। स्थाणूनां स्थिराणां निष्ठा स्थितिः अचरस्य

स्थायित्वसम्पादिकाऽसि इति यावत्। चराचरयोः चरत्व-स्थिरत्वधर्मरूपिणीति वा त्वमसीति भावः। लोकानां सर्वेषां मूलं कारणम् असि, लोकादेः लोकानाम् आदेः जन्मनः जालं मायिकं कारणम् असि, 'पुमान्नीपद्रुमे जालो जाली कोशातकी भवेत्। दम्भेन्द्रजालयोः क्लीबम्' इति त्रिकाण्डशेषः ॥८॥

**देवी व्यापकतेजः- शक्तिस्तत्त्वविचारे ॥**
**अत्यन्तं सुकुमारी नारी मूर्तिविचारे ॥९॥**

देवीति– तत्त्वविचारे तत्त्वतः परमार्थतः विचारे विमर्शे क्रियमाणे सति देवी भगवती व्यापकतेजश्शक्तिः व्यापकस्य सर्वव्यापिनः तेजसः ज्योतिषः सर्वेश्वरस्य शक्तिः भवति यद्वा व्यापकतेजोरूपिणी शक्तिरिति शाकपार्थिवादिवत्समासः। तत्त्वतः देव्याः स्वरूपं सर्वव्यापितेजश्शक्तिरिति भावः। मूर्तिविचारे मूर्तेः विचारे विग्रहवत्तामपेक्ष्य विचारे क्रियमाणे अत्यन्तं सुकुमारी नारी अत्यन्तकोमलगात्री स्त्री पर्वतराजपुत्री उमा भवति ॥९॥

**क्व ज्योतिर्महतोऽस्मा- दाकाशादपि भूयः ॥**
**तत्सर्वं विनयन्ती तन्वङ्गी क्व नु नारी ॥१०॥**

क्वेति– महतो विभोरस्मादाकाशादपि भूयः महत्तरं ज्योतिः क्व? महतो महीयस्तज्ज्योतिर्यदाकाशमतिशेते। तत्सर्वम् आकाशादप्यधिकं ज्योतिः विनयन्ती जगत्कृत्याय चालयन्ती तन्वङ्गी सुन्दरी नारी स्त्री क्व नु? असम्भवोऽलङ्कारः। तदुक्तं चन्द्रालोके "असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम्। को वेद गोपशिशुकः शैलमुत्पाटयेदिति" इति ॥१०॥

इतः प्रभृति आश्चर्यं विदधानेति पञ्चदशश्लोकावधि एकवाक्यम्।

**देवेन्द्राय विभुत्वं सूर्यायोस्रसहस्रम् ॥**
**ऊष्माणं दहनाय ज्योत्स्नामोषधिराजे ॥११॥**

देवेन्द्रायेति– देवेन्द्राय सुरेन्द्राय विभुत्वम् ईशितृत्वं ददानेत्युत्तरेण सम्बन्धः। एवं वक्ष्यमाणाय सर्वस्मा अपि, सूर्याय सहस्ररश्मेः उस्रसहस्रं उस्राणां किरणानां सहस्रं, दहनाय अग्नये ऊष्माणम् उष्णत्वं, ओषधिराजे ओषधीनां राट् ईशः चन्द्रस्तस्मै ज्योत्स्नां चन्द्रिकाम् ॥११॥

**वातायामितवीर्यं विस्तारं गगनाय ॥**
**सान्द्रत्वं वसुधायै तोयाय द्रवभावम् ॥१२॥**

वातायेति– वाताय जगत्प्राणाय अमितवीर्यम् अत्यधिकं बलं, गगनाय आकाशाय विस्तारं वैशाल्यं, वसुधायै भूम्यै सान्द्रत्वं निबिडत्वं घनतामिति यावत्। तोयाय अम्भसे द्रवभावं द्रवत्वं द्रवणशीलतामित्यर्थः॥१२॥

**माहाभाग्यमपारं कोटिभ्यो विबुधानाम् ॥**
**चित्राः काश्चन सिद्धी- र्लक्षेभ्यो मनुजानाम् ॥१३॥**

माहाभाग्यामिति– विबुधानां देवानां कोटिभ्यः, कोटिः शतलक्षसङ्ख्यावाचकः, अमितसङ्ख्येभ्यः देवेभ्यः इत्यर्थः, अपारम् अनन्तं माहाभाग्यं महान् भागो अंशः येषां ते महाभागाः तेषां भावो माहाभाग्यं, विश्वेभ्यो देवेभ्य ऐश्वर्यांशान् अनवधिकान् इत्यर्थः, मनुजानां लक्षेभ्यः शतसहस्रेभ्यः अत्यधिकसङ्ख्येभ्यो मानवेभ्य इति यावत्। काश्चन चित्राः अद्भुताः सिद्धीः शक्तिसम्पदः॥१३॥

**स्थाणुभ्यो धृतिशक्तिं गन्तृभ्यो गतिशक्तिम् ॥**
**कस्माच्चिन्निजकोशा- देका देवि ददाना ॥१४॥**

स्थाणुभ्य इति– स्थाणुभ्यो अचरेभ्यो वस्तुभ्यः धृतिशक्तिं स्थैर्यापादकधारणसामर्थ्यमित्यर्थः, गन्तृभ्यश्चरेभ्यो भूतेभ्यः गतिशक्तिं गमनसामर्थ्यमित्यर्थः प्राक् गन्तॄणामसि चेष्टेत्युक्तौ तत्र गन्तरि यच्चलनं या च स्थाणौ स्थितिः ते स्वरूपं देव्या इत्युक्तम्। इह तु चराचरयोर्गमनधारणशक्तिदात्री देवीत्युक्तम्। एवम् उक्तानि सर्वाणि कस्माच्चित् अनिर्वाच्यान्निजकोशात् स्वीयान्निधानात् एका अद्वितीया ददाना वितरन्ती, भोः देवि॥१४॥

**आश्चर्यं विदधाना सर्वं वस्तु दधाना ॥**
**हन्त त्वं मम मातः काचित्कोमलगात्री ॥१५॥**

आश्चर्यमिति– आश्चर्यम् अदभुतम् असामान्यं कर्म विदधाना तन्वाना सर्व वस्तु चराचरं विश्वं दधाना धारयमाणा त्वं मम मातः सम्बुद्धिः, काचित कोमलगात्री मृदुलाङ्गी असि। हन्त आश्चर्ये॥१५॥

**श्रोणीभारनतायां कस्यांचित्तनुगात्र्याम् ॥**
**ईदृक्षा यदि शक्तिः का वेतो ननु माया ॥१६॥**

श्रोणीति– श्रोणीभारनतायां श्रोणीभारेण नितम्बगौरवेण नतायां नम्रायां कस्यांचित् तनुगात्र्यां सुन्दर्यां स्त्रियाम् ईदृक्षा इयमिव दृश्यत इति ईदृक्षा एतादृशी शक्तिः भवेद् यदि, इतः अस्मात् का वा माया अघटनघटनापटीयसी शक्तिः। ननु प्रश्ने। इयमेव माया यत् कस्याञ्चिन्नार्यामीदृशी शक्तिरुक्त-प्रकारा विलसिता। 'का वा ते ननु माया' इति पाठे, ते तव का वा माया इतोऽन्येति प्रश्नेन तुल्यमेव तात्पर्यम् ॥१६॥

**रूपं ते तनुगात्रं वाणी ते मृदुनादा ॥**
**चापं ते मधुरेक्षुः पाणिस्ते सुकुमारः ॥१७॥**

रूपमिति– अम्ब! ते तव रूपं तनुगात्रं तनु अल्पम् अस्थूलत्वात् सुन्दरं गात्रं यस्य तत् सौन्दर्यसम्पन्ना अतिललितगात्रीति यावत्। ते तव वाणी वाक् मृदुनादा मृदुः मञ्जुलः नादः स्वरः यस्याः सा कलकण्ठीत्यर्थः। ते तव चापं धनुः मधुरेक्षुः मधुरो रमणीयः इक्षुः रसालः, वशितकामा कामेश्वरीत्यर्थः, कामस्येक्षुधन्वतया प्रसिद्धेः, ते तव पाणिः हस्तः सुकुमारः कोमलः ॥१७॥

**लोले लोचनयुग्मे भीरुत्वं प्रकटं ते ॥**
**ब्रह्माण्डं त्वदधीनं श्रद्धत्तामिह को वा ॥१८॥**

लोले इति– लोले चञ्चले ते तव लोचनयुग्मे भीरुत्वं चकितत्वं प्रकटं प्रकाशं भवति। यद्यप्येवं तवाकारस्वरधनुर्हस्तलोचनानि ललितरमणीयानि भवन्ति, तथाऽपि तव प्रभावस्तद्विपरीत इत्याहोत्तरार्धेन अनन्तरश्लोकाभ्यां च। ब्रह्माण्डम् इदं विश्वं त्वदधीनं त्वद्वशं भवति। इह अस्मिन् विषये को वा श्रद्धत्तां विश्वसितु। न कोऽपीत्यर्थः ॥१८॥

**भ्रूभङ्गं कुरुषे चे- न्मुग्धे गौरि मुखाब्जे ॥**
**भूतान्यप्ययि बिभ्य- त्येजेरन्नपि ताराः ॥१९॥**

भ्रूभङ्गमिति– गौरि, अम्ब! मुग्धे सुन्दरि मुखाब्जे मुखकमले भ्रूभङ्गं

भ्रुकुटिं कुरुषे चेत् अयि, भूतान्यपि सर्वाणि पृथिव्यादीनि महाभूतानि बिभ्यति स्वभावत्यागेन विलयो वा स्यादस्माकमिति पृथ्व्यादीनां भीतिर्जायते; तारा अपि तारकाः नक्षत्राण्यपि एजेरन् कम्पेरन् भयात्। 'भीषास्माद्वातः पवते भीषोदेति सूर्यः' इत्यादिर्हि श्रूयते ॥१९॥

**शुद्धान्तेश्वरि शम्भो- रिच्छा चेत्तव काऽपि ॥**
**घोरोऽग्निस्तृणगर्भा- द्धोराग्नेरपि शैत्यम् ॥२०॥**

शुद्धान्तेश्वरीति— शम्भोः शिवस्य शुद्धान्तेश्वरि अन्तःपुरसुन्दरि, तव काऽपि इच्छा अस्ति चेत्, घोरः भीषणः अग्निः ज्वलनः तृणगर्भात् नडकाशकुशादेरन्तरात् भवतीत्यध्याहार्यम्। तृणात् घोराग्निजन्म अस्त्रविद्यासु प्रसिद्धम्। घोराग्नेरपि शैत्यम्। स्वभावजम् ऊष्माणं विहाय शीतः शान्तो भवत्यग्निरिति अयं तवेच्छामहिमा। अनुष्णं तृणमपि घोरमग्निं जनयति। तृणगर्भादग्निरित्यनेन शरवणजोऽग्निः सूच्यते। अग्नेरपि शैत्यमित्यनेन अपाम् अग्निजन्यत्वम् 'अग्नेरापः' इति श्रुतिप्रसिद्धं तत्त्वं चावधेयम्। अत्र विवक्षा तु न किमप्यशक्यं तवेच्छायाः, अचिन्त्याद्भुतसाधिका त्वं स्वतन्त्रेति बोध्यम् ॥२०॥

अथ शिव-शक्त्योः कार्यविभजनमाह ॥

**द्रष्टुं विश्वमपारं भारस्ते दयितस्य ॥**
**कर्तुं कार्यमशेषं श्रीमातस्तव भारः ॥२१॥**

द्रष्टुमिति— श्रीमातः ! जननि अपारम् अनवधिकं विश्वं जगत् द्रष्टुं ते तव दयितस्य सर्वेश्वरस्य भारः जगदभिमुखी केवला दृष्टिरेव तस्य कार्यभारः इति भावः। अशेषं समस्तं कार्यं सृष्ट्यादिकं कर्तुं तव भारः। सर्वकार्यनिर्वाहिका त्वमेव, ईश्वरस्तु त्वत्कार्याभ्यनुज्ञागर्भितेन साक्षित्वेन वर्तत इत्यर्थः। तदेवोत्तरश्लोकेन स्पष्टयति ॥२१॥

**साक्षी केवलमीशः कर्तुं भर्तुमुताहो ॥**
**हर्तुं वाऽखिलमम्ब त्वं साक्षाद्धृतदीक्षा ॥२२॥**

साक्षीति— अम्ब ! ईशः ईश्वरः केवलं साक्षी द्रष्टा भवति। त्वम

अखिलं सर्वं कर्तुं स्रष्टुं भर्तुं पालयितुम् उताहो अथवा हर्तुं संहत साक्षात् प्रत्यक्षं धृतदीक्षा धृता बद्धा दीक्षा व्रतमित्यर्थः यया सा, सृष्टि-स्थिति-संहारकार्येषु त्वं साक्षाद्बद्धव्रतेत्युक्त्वा ईश्वरस्य साक्षित्वद्वारा त्वत्कार्येषु अभ्यनुज्ञानरूपः परम्परासम्बन्ध इति गम्यते ॥२२॥

**कारङ्कारमुमे यद् ब्रह्माण्डानि निहंसि ॥**
**तन्मन्ये सुरमान्ये बालैवाम्ब सदा त्वम् ॥२३॥**

कारङ्कारमिति– सुरमान्ये देवपूज्ये उमे अम्ब, यत् यस्मात् ब्रह्माण्डानि जगन्ति कारङ्कारं कृत्वा कृत्वा, आभीक्ष्ण्ये णमुल्, निहंसि भनक्षि, तत् तस्मात् त्वं सदा बालैव, तव सन्ततं शैशवी दशा इति मन्ये। शैशवदशायां हि बालाः क्रीडनकानि कृत्वा कृत्वा तानि पुनर्भञ्जन्ति। ब्रह्माण्डानां पुनः-पुनर्निर्माण-संहरणहेतोः बालात्वस्योत्प्रेक्ष्यमाणत्वात् हेतूत्प्रेक्षा। अनेनानायास-सिद्धानि लीलाविलसितानि भगवत्याः सर्गादिकार्याणीति द्योत्यते ॥२३॥

**लीलोज्जीवितकामे रामे शङ्करसक्ते ॥**
**त्वत्पादार्चनसक्तं भक्तं मा कुरु शक्तम् ॥२४॥**

लीलोज्जीवितकाम इति– लीलोज्जीवितकामे लीलया उज्जीवितः कामः यया सा तस्याः सम्बुद्धिः, हरनेत्रदग्धस्य कन्दर्पस्य अनायासविलसितेन पुनः जीवितं दत्तवति, शङ्करसक्ते शङ्करे सक्ते अनुरक्ते रामे सुन्दरि ! त्वत्पादार्चनसक्तं त्वच्चरणसेवानुरक्तम् भक्तं सेवकं मां शक्तं कुरु बलिनं विधेहि, बलं विना अधिलोकमध्यात्मं वा न किमपि निर्वाह्यते। 'नायमात्मा बलहीनेन लभ्यः' न वा लोके किमपि कर्तुं शक्यते। तस्मात् शक्तिमान् विधीयेयेति प्रार्थयते ॥२४॥

स्तबकमुपसंहरति ॥

**एताः पावनगन्धाः सर्वेशप्रमदे ते ॥**
**हैरम्ब्यो मदलेखाः सन्तोषाय भवन्तु ॥२५॥**

एता इति– सर्वेशप्रमदे सर्वेश्वरसुन्दरि, पावनगन्धाः पावनः पवित्रो

गन्धो घ्राणविषयो यासां ताः एताः हैरम्ब्यो हेरम्बस्य इमाः गणपतेर्मम तव पुत्रस्य मदलेखाः मदधाराः पक्षे मदलेखावृत्तबद्धाः ते तव सन्तोषाय भवन्तु। अत्र पार्वतीसन्तोषाशंसकमदलेखापदेन अस्य वृत्तस्य मदलेखानामत्वरूपसूच्यार्थ-सूचनात् मुद्रालङ्कारः॥२५॥

षष्ठः स्तबकः सव्याख्यः समाप्तः

## सप्तमः स्तबकः

वाणीसरोरुहदृशो हयराजहंसो
वक्त्रारविन्दनिलयाद्बहिरागतायाः ॥
आलापकालदरहास इह स्थितानां
क्षेमं करोतु सुतरां हरसुन्दरीयः ॥१॥

वाणीति– हरसुन्दरीयः हरसुन्दर्याः पार्वत्या अयम् आलापकालदरहासः आलापकाले सम्भाषणकाले यः दरहासः मन्दहासः सः इह स्थितानां भूजुषां सुतराम् अत्यन्तं क्षेमं मङ्गलं करोतु विदधातु। आभाषणसमकालमन्दहासस्य सरस्वतीवाहराजहंसेन तादात्म्यमुपपादयन् तं विशिनष्टि। वक्त्रारविन्द-निलयात् वक्त्रारविन्दं मुखपद्मं तदेव निलयः वासः तस्मात् बहिरागतायाः निर्गतायाः वाणीसरोरुहदृशः वाणी सरस्वती इति सरोरुहदृक् सुन्दरी सम्भावना-पूर्वपदः कर्मधारयः, तस्याः हयराजहंसः हयभूतः राजहंसः, स एव आलाप-कालदरहासः इति व्यस्तं रूपकम्। वक्त्रारविन्देत्यत्र हरसुन्दर्या इत्यर्थादव-गम्यते। पद्मसम्भवस्य सुन्दर्याः सरस्वत्याः वाहनहंसः प्रसिद्धः। अरविन्दं पत्युः पद्मयोनेः जन्मस्थलं तत् सरस्वत्याश्च निलयो भवितुमर्हति। तस्मात् न स्याच्छङ्का कथं लक्ष्मीजन्मस्थानं सरस्वतीनिलयो भवतीति। अत्रेदं विवेचनीयम्। शुभ्रत्वसाधर्म्यात् राजहंस-दरहासयोस्तादात्म्यम् अध्यवसितम्। अन्यत्र वैयधिकरण्येन समासार्थगतेन व्यस्तं रूपकम्। तच्च वाणीसरोरुह-दृशो बहिरागमनस्य आलापस्य च ताद्रूप्यम्। मन्दहासो वाचं वाहयति भगवत्या इति भावः ॥१॥

नादोऽसि वागसि विभाऽसि चिदस्यखण्डा
खण्डीभवन्त्यपि चिदस्यखिलेन्द्रकान्ते ॥
तत्तादृशीं निखिलशक्तिसमष्टिमीशे
त्वामन्तरिक्षपरिक्लृप्ततनुं नमामि ॥२॥

नाद इति– अखिलेन्द्रकान्ते सर्वेश्वरसुन्दरि ! नादोऽसि कारणावस्थः

शब्दः प्रणवोऽसीति यावत् वागसि कार्यरूपोऽभिव्यक्तः शब्दोऽसीत्यर्थः, विभा असि ज्योतिः असीत्यर्थः, अखण्डा चित् अनंशा भेदशून्या प्रज्ञाऽसि खण्डीभवन्ती चिदपि असि अखण्डम् खण्डं सम्पद्यमानं खण्डीभवत् ततो ङीप् खण्डीभवन्ती अखण्डैकैव चित् अनेकखण्डभूताश्चितोऽपि तवैव चिद्रूपाणीत्यर्थः। यथाऽव्यक्तनादात्मनस्तव व्यक्तवागात्मकत्वं, तथाऽखण्डचितः खण्डचिद्रूपत्वं चेति भावः। ईशे ईश्वरि, तत् तस्मात् सकलजगद्भेदनिर्माणसमर्थनादवाग्विभाखण्डाखण्डचिद्रूपतया त्वदवस्थानाद्धेतोः निखिलशक्तिसमष्टिं निखिलानां सर्वासां शक्तीनां समष्टिं संहतिम् अशेषशक्तिजालरूपिणीमिति यावत्। अन्तरिक्षपरिक्लृप्ततनुम् अन्तरिक्षे आकाशे परिक्लृप्ता निहिता सिद्धेत्यर्थः, तनुः शरीरमिति यावत्, यस्याः तां नादज्योतिरात्मना आकाशं व्याप्य स्थितामिति भावः, तादृशीं तथाविधां त्वां नमामि। यद्यपि स्त्रीवेषां परिच्छिन्नशरीरां त्वां स्तौमि, तथाऽपि तव स्वरूपं ज्योतिर्नादमयं विभ्विति जाने, तथाविधामेव त्वां नमामि ॥२॥

**विश्वप्रसिद्धविभवास्त्रिषु विष्टपेषु**
**याः शक्तयः प्रविलसन्ति परःसहस्राः ॥**
**तासां समष्टिरतिचित्रनिधानदृष्टिः**
**सृष्टि-स्थिति-प्रलयकृद् भुवनेश्वरि त्वम् ॥३॥**

विश्वेति– भुवनेश्वरि लोकराज्ञि! त्रिषु विष्टपेषु लोकेषु भूरादिषु विश्वप्रसिद्धविभवाः विश्वस्मिन् ब्रह्माण्डे प्रसिद्धाः विश्रुताः विभवाः सामर्थ्यरूपाः अर्थाः यासां ताः, परस्सहस्राः सहस्रात्पराः परस्सहस्राः सहस्राधिकाः 'परश्शताद्यास्ते येषां परा सङ्ख्या शताधिकात्' इत्यमरः। याः शक्तयः प्रविलसन्ति विलसिता भवन्ति, तासां शक्तीनां समष्टिः संहतिः त्वं, सकलानां विश्वविश्रुतानां सृष्ट्याद्यधिकृतानां शक्तीनाम् एकत्र त्वयि समस्यमानत्वात् ॥

कथम्भूताऽसि? अतिचित्रनिधानदृष्टिः अतीव चित्रमद्भुतं निधानं सर्वसृष्टिसामग्रीनिक्षेपभूतं दृष्टौ यस्याः साः। पुनः कथंभूता? सृष्टि-स्थिति-प्रलयकृत् सर्जनरक्षणसंहारकारिणीत्यर्थः। न केवलं स्त्रीरूपपरिच्छिन्नं ते स्वरूपमिति तात्पर्यम् ॥३॥

**जाने न यत्तव जगज्जनयित्रि रूपं**
**सङ्कल्प्यते किमपि तन्मनसो बलेन ॥**
**सङ्कल्पितस्य वपुषः श्रितशोकहन्त्रि**
**विन्यस्यते तव वचोतिगधाम नाम ॥४॥**

जाने इति– जगज्जनयित्रि लोकसवित्रि, यत् यस्मात् तव रूपं स्वरूपं न जाने न वेद्मि तत् तस्मात् हेतोः मनसो बलेन भावनाबलेनेत्यर्थः, किमपि आराधनार्थं रूपं सङ्कल्प्यते मयेति शेषः। श्रितशोकहन्त्रि आश्रितजनदुःखापनेत्रि, सङ्कल्पितस्य तथा भावनातो निष्पादितस्य तव वपुषो गात्रस्य वचोतिगधाम वचांसि वचनानि अतिगच्छत्यतिक्रामतीति वचोतिगं तत् धाम प्रभाव इत्यर्थः, यस्य तन्नाम नामधेयम् उमेत्यादि विन्यस्यते क्रियते। यद्यपि तव यथार्थरूपपरिज्ञानालाभाद्भावनाबलाद्रूपं मया कल्पितं मितमेव स्यात्, तथाऽपि क्रियमाणस्य तन्नाम्नः प्रभावस्तु वाचामविषयः ॥४॥

**कामं वदन्तु वनितामितिहासदक्षा-**
**स्त्वां सर्वलोकजनयित्रि सदेहबन्धाम् ॥**
**सत्यं च तद्भवतु सा तव काऽपि लीला**
**दिव्यं रजस्तु तव वास्तविकं शरीरम् ॥५॥**

काममिति– सर्वलोकजनयित्रि सकलभुवनप्रसु मातः, त्वाम् इतिहासदक्षाः पुरावृत्तकथाकुशलाः सदेहबन्धां विग्रहवतीं वनितां स्त्रियं कामं यथेप्सितं वदन्तु भणन्तु। तत् तथा कथनं सत्यं वास्तवं च भवतु। कथं स्त्रीविग्रहवत्त्वं सत्यम् ? आह। सा तव काऽपि लीला सर्वशक्तायास्तव लोकानुग्रहनिमित्तको विलासविशेषः। यद्यप्येवं लीलाविग्रहनारीवेषस्वीकार ऐतिहासिकः प्रसिद्धो भवति, तु तथाऽपि दिव्यं दिव्यन्तरिक्षे भवम् आकाशगतमित्यर्थः, रजः सूक्ष्मो रेणुः तव वास्तविकं वस्तुतो निर्वृत्तं सत्यं शरीरं वपुर्भवति। भगवत्याः वास्तविकं शरीरमधिकृत्य प्रथमे शतके 'सा तत्त्वतः समन्तात्' इत्यादिश्लोकेषु प्रतिपादितं तत्र तत्र व्याख्यातं च द्रष्टव्यम् ॥५॥

**भूजन्मपांसुभिरगर्हितशुद्धरूपा**
**या काऽपि पांसुपटली विपुलेऽन्तरिक्षे ॥**

**सा ते तनुः सुमहती वरदे सुसूक्ष्मा**
**तामेव देवसरणिं कथयन्ति धीराः ॥६॥**

भजन्मेति– विपुले विशाले अन्तरिक्षे आकाशे भूजन्मपांसुभिः भुवो जन्म येषां ते भूजन्मानः पांसवः धूलयः तैरगर्हितशुद्धरूपा अगर्हितम अदूषितं शुद्धं निर्मलं रूपं यस्याः सा या काऽपि पांसुपटली पांसूनां रेणूनां पटली संहतिर्विद्यते इत्यध्याहार्यम्। पार्थिवभौतिकसम्पर्कशून्या स्वतःसिद्धा स्थूलबुद्धीन्द्रियातीता योगिजनसूक्ष्मदृग्गोचरा आकाशगतसूक्ष्माणुपटली या वर्तते इत्यर्थः सा वरदे अभीष्टवरदात्रि अम्ब, सुमहती सुतरां बृहती, वैपुल्यात्तदालयाकाशस्य, सुसूक्ष्मा सुतरां सूक्ष्मा दिव्यदृगेकगोचरत्वात् ते तव तनुः शरीरं भवतीत्यर्थः। धीराः धियं प्रशस्तां बुद्धिं रान्ति आददत इति धीराः विज्ञाः तामेव आकाशगरेणुपटलीं तनुं देवसरणिं देवपद्यां देवयानमिति यावत् कथयन्ति। इदमेव देवयानम् अर्चिरादिमार्गमाहुः, येन विदुष उत्क्रान्तस्य, ऊर्ध्वगतिरुक्ता श्रुतिषु। देवयानात्मिकां भगवत्यास्तनुं पुनर्विवृणोति ॥६॥

**या देवि देवसरणिर्भवमग्नदुर्गा**
**वैरोचनीति कथिता तपसा ज्वलन्ती ॥**
**राजीवबन्धुमहसा विहिताङ्गरागा**
**सा ते तनुर्भवति सर्वसुपर्ववर्ण्ये ॥७॥**

येति– देवि, या भवमग्नदुर्गा भवमग्नानां दुर्गा जन्माम्बुधिनिमग्नानां दुष्प्रापेत्यर्थः, देवसरणिः देवपद्या विद्वदेकगम्या तपसा स्वात्मनिहितदृढदृष्टिबलेन ज्वलन्ती दीप्यमाना वैरोचनी विशेषेण रोचते इति विरोचनः सूरः ज्वलत्प्रकाशः सविता सर्वेश्वरः तस्येयं वैरोचनी इति कथिता भवतीति शेषः। सर्वसुपर्ववर्ण्ये सकलसुरजनस्तुत्ये, सा तपसा ज्वलन्ती वैरोचनी ते तनुर्भवतीति सम्बन्धः। भगवतीं दुर्गां वैरोचनीं मन्त्रोऽपि गायति–"तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः" इति। तां तनुं विशिनष्टि। राजीवबन्धुमहसा राजीवबन्धोः सूर्यस्य महसा तेजसा सौरेण ज्योतिषेति यावत्, विहिताङ्गरागा विहितः रचितः अङ्गरागः रञ्जकलेपः यस्याः सा। अयं भावः। अस्माल्लोकादुत्क्रान्तस्य विदुषः स्वर्लोकगामिनो देवयानस्य ज्योतिर्मार्गस्य दिव्यरजःपटलपूरितस्य

देवीतनुत्वं प्रतिपादितम्। नभोगतस्य दिव्यरजोरूपदेवीशरीरस्य विरोचनरोचिषा अङ्गलेपोऽर्प्यत इति महोऽङ्गरागयोः तादात्म्यसम्भावनया किं गम्योत्प्रेक्षा, उत विषय-विषयिणोर्महोऽङ्गरागयोः विषयस्य महसो निगरणेन विषयिणोऽङ्गरागस्याध्यवसानादतिशयोक्तिरिति द्वयोरलङ्कारयोः सन्देहसङ्करः ॥७॥

**प्राणास्तवात्र हृदयं च विराजतेऽत्र**
**नेत्राणि चात्र शतशः श्रवणानि चात्र ॥**
**घ्राणानि चात्र रसनानि तथा त्वचश्च**
**वाचोऽत्र देवि चरणानि च पाणयोऽत्र ॥८॥**

प्राणा इति— देवि, अत्र तव तनुत्वेन अवस्थिते दिव्यरेणुमये देवयानाख्ये अर्चिमार्गे प्रागुक्ते तव प्राणाः जगज्जीवनधारणहेतुभूताः विराजन्ते इति वचनव्यत्ययेन अध्याहार्यम् । हृदयं च सर्वेषां ज्ञानक्रियाविलासानां मूलम् आत्मस्थानं अत्र विराजते, तथा शतशः नेत्राणि श्रवणानि च घ्राणानि रसनानि त्वचश्च वाचश्चरणानि पाणयश्च विराजन्ते। पाणिपादवाक्प्राणचक्षुःश्रोत्रादीनां सर्वेषां कर्म-ज्ञानेन्द्रियाणां समष्टिरस्याः जगत्सवित्र्याः दिव्यरेणुशरीरेऽवतिष्ठत इत्युक्तम्। हृदयस्यैकवचनं वाक्प्राणादीनां बहुवचनं च प्रयुक्ते। अनेन इह व्यष्टिगतानां वागादीनां बहुत्वेऽपि, सर्वासां व्यष्टीनां मूलमात्मस्थानमेकमेव हृदयमिति विवक्षितम्। तथा च श्रीरमणगीतायां स्वोपनिबन्धे श्रीमहर्षेरुपदेशं हृदयमधिकृत्यैवमाचार्येण अभ्यधायि— 'अण्डं वपुषि निश्शेषं निश्शेषं हृदये वपुः। तस्मादण्डस्य सर्वस्य हृदयं रूपसङ्ग्रहः' इति भगवत्याः शरीरे सर्वाणि वाक्प्राणचक्षुरादीनि व्यवस्थितानीत्युक्तेः सर्वेषां तदनन्यत्वं तदुपादानत्वं तदाधारत्वं च स्थूलसूक्ष्मकारणावस्थासु प्रतिपादितानीति ज्ञेयम् ॥८॥

**सर्वत्र पश्यसि शृणोषि च सर्वतोऽम्ब**
**सर्वत्र खादसि विजिघ्रसि सर्वतोऽपि ॥**
**सर्वत्र च स्पृशसि मातरभिन्नकाले**
**कः शक्नुयान्निगदितुं तव देवि भाग्यम् ॥९॥**

सर्वत्रेति— अभिन्नकाले! अभिन्नः न भिन्नः अतीतानागतवर्तमानत्वेन त्रेधा विभक्तः कालः यस्याः सा सार्वकालिकी नित्येति यावत्, तस्याः सम्बुद्धिः

अम्ब, देवि ! त्वं सर्वत्र पश्यसि तव चक्षुषः एव सर्वेषां चक्षुरात्मतयाऽवस्थानात्, यद्वा 'चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रम्' इत्यादिश्रुतिषु प्रसिद्धायाश्चक्षुर्भूतायास्तव चक्षुषश्चक्षुष्ट्वेनावस्थानात् सर्वत्र त्वमेव द्रष्ट्रीति भावः, एवं श्रृणोषीत्यादौ त्वमेव श्रोत्री घ्रात्रीत्यादि बोध्यम्। सर्वतः श्रृणोषि, सर्वतः सर्वत्र सार्वविभक्तिकः तसिल्, सर्वत्र खादसि, भोक्त्रीत्यर्थः, सर्वतोऽपि विजिघ्रसि विशेषेण जिघ्रसि, घ्रात्री त्वं, तथा स्पृशसि, एवं सर्वत्र ज्ञानेन्द्रियरूपेण अवस्थाय व्यापारान् विदधत् तव भाग्यमैश्वर्यं निगदितुं कथयितुं कः शक्नुयात् ? न कोऽपि शक्त इत्यर्थः ॥९॥

**सर्वत्र नन्दसि विमुञ्चसि सर्वतोऽम्ब**
**सर्वत्र संसरसि गर्जसि सर्वतोऽपि ॥**
**सर्वत्र देवि कुरुषे तव कर्मजाल-**
**वैचित्र्यमीश्वरि निरूपयितुं क्षमः कः ॥१०॥**

सर्वत्रेति— देवि, ईश्वरि सर्वत्र नन्दसि मोदसे, आनन्दस्वरूपत्वात् सर्वतो विमुञ्चसि विसृजसि, विमुञ्चन-नन्दनाभ्यां पायूपस्थेन्द्रियव्यापारावुक्तौ। सर्वत्र संसरसि प्रकरणात् सञ्चरसीत्यर्थः, अनेन पादेन्द्रियव्यापार उक्तः। सर्वतो गर्जसि, अनेन वाग्व्यापारः, सर्वत्र कुरुषे, पाणीन्द्रियव्यापारश्चोक्तौ। तव कर्मजालवैचित्र्यं सर्वत्र कर्मेन्द्रियव्यापाररूपक्रियाकलापानाम् अद्भुतं को निरूपयितुं वर्णयितुं क्षमः ? न कोऽपि समर्थ इत्यर्थः ॥१०॥

**विश्वाम्बिके त्वयि रुचां पतयः कियन्तो**
**नानाविधाब्धिकलिताः क्षितयः कियत्यः ॥**
**बिम्बानि शीतमहसां लसतां कियन्ति**
**नैतच्च वेद यदि को विबुधो बहुज्ञः ॥११॥**

विश्वाम्बिके इति— विश्वाम्बिके जगन्मातः, त्वयि अधिकरणभूतायां कियन्तः रुचां पतयः कति सूर्याः ? नानाविधाब्धिकलिताः लवणेक्षुसुरादिसमुद्रवलयिताः क्षितयः भूमयः कियत्यः कति ? लसतां राजमानानां शीतमहसां चन्द्राणां बिम्बानि मण्डलानि कियन्ति ? एतच्च यदि न वेद न जानाति, को बहुज्ञो बहु जानातीति बहुज्ञः विबुधः पण्डितो भवतीत्यध्या-

हारः, सर्वाधारभूतायां त्वयि आधेयभूताः सूर्यचन्द्रभूमयः पृथक् पृथक् कति सन्तीति अजानन् पुरुषः कथं बहुज्ञः पण्डितो भवितुमर्हति ? सर्वोऽपि किञ्चिज्ज्ञ एवेत्यर्थः। अनेन बहवः सूर्याः नक्षत्रात्मनाऽवस्थिताः तथा एकैकस्यापि सूर्यकुटुम्बस्य भूमयः, ताः समाश्रित्य चरन्तश्चन्द्रमसश्चेति प्रथमशतकद्वितीयस्तबकस्थश्लोकाः स्मरणीयाः। तत्र 'पुनर्विपाकतः' इति श्लोके 'मण्डलानि भास्वताम्' 'विसर्जनेन' इति श्लोके 'महीषु चाम्बिके युवाम्' इत्याद्यवधेयम् ॥११॥

अथ ब्राह्म्यादिसप्तमातृकाणां वैभवं पृथक् सप्तभिः श्लोकैरभिधीयते ॥

**अव्यक्तशब्दकलयाऽखिलमन्तरिक्षं**
**त्वं व्याप्य देवि सकलागमसम्प्रगीते ॥**
**नादोऽस्युपाधिवशतोऽथ वचांसि चासि**
**ब्राह्मीं वदन्ति कवयोऽमुकवैभवां त्वाम् ॥१२॥**

अव्यक्तेति— सकलागमसम्प्रगीते सकलैरागमैस्तन्त्रशास्त्रैः सम्प्रगीते अभिष्टुते देवि, अव्यक्तशब्दकलया अव्यक्तशब्दः प्रणवः तस्य कलया अंशेनेत्यर्थः, अखिलम् अन्तरिक्षमाकाशं व्याप्य स्थिता त्वं नादोऽसि नादशब्दवाच्याऽसि कारणवाग्रूपाऽसीत्यर्थः, अथ अनन्तरम् उपाधिवशतः उप समीपे स्थित्वा स्वीयं रूपमन्यत्र आदधातीति उपाधिः तस्य कार्योपकरणादेर्वशतः तन्त्रतः वचांसि चासि व्यक्ताः वाचोऽपि भवसि इत्यर्थः। प्राक्चोक्तं 'नादोऽसि वागसि' इति। अमुकवैभवाम् अमुकं कार्य-कारणोभयविधवागात्मकम् ईदृक् वैभवं विभोर्भावः ऐश्वर्यं यस्याः तां त्वां कवयः सूरयः ब्राह्मीं ब्रह्मण इयं ब्राह्मी तां ब्रह्मशक्तिं वदन्ति ॥१२॥

अथ वैष्णवीं मातृकां व्याचष्टे ॥

**नानाविधैर्भुवनजालसवित्रि रूपै-**
**र्व्याप्तैकनिष्कलगभीरमहस्तरङ्गैः ॥**
**व्यक्तं विचित्रयसि सर्वमखर्वशक्ते**
**सा वैष्णवी तव कला कथिता मुनीन्द्रैः ॥१३॥**

नानाविधैरिति— भुवनजालसवित्रि जगज्जालजनयित्रि, अखर्वशक्ते न खर्वा ह्रस्वा अखर्वा अनल्पेत्यर्थः, शक्तिर्यस्याः सा तस्याः सम्बोधनं, व्याप्तैक-

निष्कलगभीरमहस्तरङ्गैः व्याप्ताः व्यापिनः कर्तरि क्तः, एकस्य अद्वितीयस्य निष्कलस्यानंशस्य गभीरस्य अगाधस्य गम्भीरस्य वा महसस्तरङ्गाः भङ्गाः येषां तैः नानाविधैः रूपैश्चक्षुर्ग्राह्यैः साधनैः सर्वं विश्वगतं वस्तुजातं व्यक्तं पृथक्तया स्पष्टं विचित्रयसि विचित्रम् अद्भुतं करोषि। यया कलया त्वमेवं करोषि, सा तव कला मुनीन्द्रैस्तापसोत्तमैः वैष्णवी विष्णोरियं विष्णुशक्तिः कथिता। कारणज्योतिषः कार्यावस्थायां रूपात्मकतासिद्धिः प्रसिद्धा। व्यक्तस्य सर्गस्य रूपसम्पादिका माता विष्णुशक्तिरिति तात्पर्यम्। ॥१३॥

अथ माहेश्वरीं मातृकाम अभिधत्ते ॥

**व्यक्तित्वमम्ब हृदये हृदये दधासि**
**येन प्रभिन्न इव बद्ध इवान्तरात्मा।**
**सेयं कला भुवननाटकसूत्रभर्त्रि**
**माहेश्वरीति कथिता तव चिद्विभूतिः ॥१४॥**

व्यक्तित्वमिति— भुवननाटकसूत्रभर्त्रि ! भुवनं नाटकमिव तस्य सूत्रभर्त्रि सूत्रधारभूता नाटयितृत्वात्, तस्याः सम्बुद्धिः, अम्ब, हृदये हृदये प्रतिहृदयं व्यक्तित्वं पृथगात्मतया अहमहमिति वृत्तित्वं दधासि धारयसे, सर्वस्यापि अहन्तास्पदं हृदयमिति प्रसिद्धेः। येन हृदयाधिकरणकव्यक्तित्वधानेन अन्तरात्मा एकोऽपि सर्वान्तरात्मा प्रभिन्नः इव भेदवाननेक इव बद्ध इव नित्यमुक्तोऽपि बन्धवानिव भवति। यया भेदभ्रमजनयित्र्या कलया एकोऽप्यन्तरात्मा अनेक इव अव्यक्तोऽपि व्यक्त इव स्वतन्त्रोऽपि बद्ध इव भवति, सेयं तव कला अंशः चिद्विभूतिः चितः अखण्डप्रज्ञायाः विभूतिरैश्वर्यभूता माहेश्वरी महेश्वरस्येयं महेश्वरशक्तिः कथिता प्रोक्ता। नादात्मिका वाग्विभूतिर्ब्राह्मी कला, विश्वरूपस्थितिसम्पत्तिः शोभाविभूतिर्वैष्णवी कलेति अतीताभ्यां श्लोकाभ्यां प्रतिपाद्य, इह अगणितभेदभ्रमभूयिष्ठजगन्नाटकसंविधात्री हृदयस्थेश्वरमाया चिद्विभूतिः माहेश्वरी कलेत्युक्तम्। अत्र हृदय-प्रभिन्न इव-बद्ध-इव–भुवननाटकादिशब्दप्रयोगादीश्वरो हृदयदेशे मायया सर्वभूतानि भ्रामयंस्तिष्ठतीति गीताश्लोकार्थोऽनुसन्धेयः ॥१४॥

अथ कौमारीं मातृकाम् आचष्टे ॥

**आहारशुद्धिवशतः परिशुद्धसत्त्वे**
**नित्यस्थिरस्मृतिधरे विकसत्सरोजे ॥**

**प्रादुर्भवस्यमलतत्त्वविभासिका या**
**सा त्वं स्मृता गुरुगुहस्य सवित्रि शक्तिः ॥१५॥**

आहारेति— आहारशुद्धिवशतः आहारशुद्धिश्च स्थूलतया सात्त्विकाहार-सम्पादितदेहाश्रितान्तःकरणशुद्धिः, सूक्ष्मतया तु विषयेन्द्रियसंयोगेषु 'गुणा गुणेषु वर्तन्ते' 'इन्द्रियाणि इन्द्रियार्थेषु' इति व्यवसायात्मिकया बुद्धया प्रकृति-व्यापारात् पृथगात्मानं प्रत्यगवस्थितं विदन् यश्चरति तस्य आहारशुद्धिः जायते, आहारश्च आह्रियमाणाः विषयाः, इन्द्रियैः आह्रियमाणानां विषयाणां शुद्धिः रागादिभिरलिप्तत्वात्, तद्वशतः परिशुद्धसत्त्वे परिशुद्धं निर्मलं सत्त्वम् अन्तःकरणं यस्य तस्मिन्, नित्यस्थिरस्मृतिधरे नित्या स्थिरा ध्रुवा स्मृतिः प्रज्ञा तस्याः धरः तस्मिन् विकसत्सरोजे विकसत् उन्मीलितं सरोजं पुण्डरीकं प्रकरणात् हृदयं यस्य तस्मिन् जने, अमलतत्त्वविभासिका शुद्धसत्यप्रकाशिका या त्वं प्रादुर्भवसि, आविर्भवसि प्रकाशस इत्यर्थः, सा त्वं, सवित्रि जननि, गुरु-गुहस्य कुमारस्य शक्तिः कौमारी शक्तिः स्मृता। अत्र नारदसनत्कुमारा-ख्यायिकाप्रकरणस्य छन्दोगश्रुतिवचनं भवति— 'आहारशुद्धौ सत्त्वशुद्धिः, सत्त्व-शुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः। तस्मै मृदितकषा-याय तमसः पारं दर्शयति भगवान् सनत्कुमारस्तं स्कन्द इत्याचक्षते तं स्कन्द इत्याचक्षते' इति। एवं स्कन्दसनत्कुमारयोरव्यतिरेकमामनन्ति छन्दोगाः। सेयं सनत्कुमाराख्यस्य स्कन्दस्य गुरुगुहस्य शक्तिः कौमारी शक्तिः इहाभि-र्वर्णिता ॥१५॥

अथ वाराहीं मातृकां स्तौति ॥

**हव्यं यया दिविषदो मधुरं लभन्ते**
**कव्यं यया रुचिकरं पितरो भजन्ते ॥**
**अश्नाति चान्नमखिलोऽपि जनो ययैव**
**सा ते वराहवदनेति कलाऽम्ब गीता ॥१६॥**

हव्यमिति— यया कलया दिविषदो देवाः मधुरं स्वादु हव्यं देवेभ्यो दीयमानम् अन्नं लभन्ते प्राप्नुवन्ति, 'हव्यकव्ये दैवपैत्रे अन्ने' इत्यमरः। यया पितरः पितृदेवाः रुचिकरं रोचकं कव्यं पितृभ्यो दीयमानमन्नं भजन्ते सेवन्ते, यया कलयैव अखिलोऽपि जनः मानवः अन्नं भोज्यमश्नाति भुङ्क्ते, सा ते

कला वराहवदना वाराहीति गीता। सर्वस्य भोक्त्री भोजयित्री च वाराही ययैव सर्वे देवाः पितरो मनुष्याश्च भोजनसामर्थ्यवन्तो भवन्तीति भावः ॥१६॥

अथेन्द्राणी मातृकां स्तौति ॥

**दुष्टान्निहंसि जगतामवनाय साक्षा-**
**दन्यैश्च घातयसि तप्तबलैर्महद्भिः ॥**
**दम्भोलिचेष्टितपरीक्ष्यबला बलारेः**
**शक्तिर्न्यगादि तव देवि विभूतिरेषा ॥१७॥**

दुष्टानिति— देवि, जगतां लोकानामवनाय रक्षणाय दुष्टान् साक्षात् प्रत्यक्षं निहंसि हिनस्सि अन्यद्वारा विनैव स्वयमेव निगृह्णासीत्यर्थः। अन्यैः इतरैः तप्तबलैः तप्तं प्रतप्तं ज्वलितमिति यावत् बलं येषां तैः महद्भिः महासत्त्वैर्द्वारा च घातयसि, स्वयं हंसि अन्यैर्द्वाराऽपि घातयसि। एषा एवं कुर्वती तव विभूतिः दम्भोलिचेष्टितपरीक्ष्यबला दम्भोलेरशनेः वज्रायुधस्येति यावत्, चेष्टितेन विलसितेन परीक्ष्यं प्रमाणैः अवधार्यं बलं यस्याः सा। अस्याः शक्तेर्बलनिर्णयविषये वज्रायुधमेव परीक्षकं स्यादिति भावः। बलारेरिन्द्रस्य शक्तिः इन्द्राणी न्यगादि। दुष्टनिग्रहशक्तिर्मातुर्विभूतिः इन्द्राणीति तात्पर्यम् ॥१७॥

अथ चामुण्डां सप्तमीं मातृकां वर्णयति ॥

**सङ्कल्परक्तकणपानविवृद्धशक्त्या**
**जाग्रत्समाधिकलयेश्वरि ते विभूत्या ॥**
**मूलाग्निचण्डशशिमुण्डतनुत्रभेत्र्या[1]**
**चामुण्डया तनुषु देवि न किं कृतं स्यात् ॥१८॥**

सङ्कल्पेति— ईश्वरि देवि चामुण्डया एतदाख्यया ते तव विभूत्या तनुषु अस्मदादीनां शरीरेष्वित्यर्थः, किं न कृतं स्यात्? सर्वमपि कृतं भवेदित्यर्थः। तस्याश्चामुण्डायाः स्वरूपं निरूपयितुं तां विशिनष्टि। सङ्कल्परक्तकणपानविवृद्धशक्त्या सङ्कल्पाः चित्तवृत्तिविशेषाः एव रक्तकणाः रुधिरबिन्दवः तेषां पानेन विवृद्धा बृंहिता शक्तिर्यस्यास्तया, जाग्रत्समाधिकलया सम्यगाधीयते मनोऽस्मिन्निति समाधिः जाग्रद्दशायां यः समाधिः जाग्रत्समाधिः स एव कला

---

[1]तनुप्रभेत्र्या इति पाठे, तन्वोः शरीरयोरावरणभूतयोः प्रभेत्र्या ॥

विद्या तया मूलाग्निचण्डशशिमुण्डतनुत्रभेत्र्या मूलाग्निरेव मूलाधारस्थः कुलकुण्डाग्निरेव चण्डः चण्डाख्योऽसुरः शशी चन्द्रः स एव मुण्डः एतदाख्योऽसुरः तयोः तनुत्रयोः कवचभूतयोः ग्रन्थ्योः भेत्र्या विदारयित्र्या चामुण्डया किं न कृतं स्यादिति सम्बन्धः। अत्र देवीमाहात्म्यप्रोक्तस्य चामुण्डया कृतस्य रक्तबीजासुररुधिरपानस्य चण्डमुण्डनिषूदनस्य च आध्यात्मिकं तत्त्वं रूपकापदेशेन उद्घाटितं कविना। तथा हि अष्टमेऽध्याये दुर्गासप्तशत्यां चामुण्डानामलाभप्रकारः कथ्यते– 'यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता। चामुण्डेति ततो लोके ख्याता देवि भविष्यसि' इति। पुनश्च नवमेऽध्याये रक्तबीजासुरप्रस्तावे– 'पलायनपरान् दृष्ट्वा दैत्यान् मातृगणार्दितान्। योद्धुमभ्याययौ क्रुद्धो रक्तबीजो महासुरः॥......तस्याहतस्य बहुधा शक्तिशूलादिभिर्भुवि। पपात यो वै रक्तौघस्तेनासञ्छतशोऽसुराः॥ तैश्चासुरासृक्सम्भूतैरसुरैः सकलं जगत्। व्याप्तमासीत्ततो देवा भयमाजग्मुरुत्तमम्॥ तान्विषण्णान्सुरान्दृष्ट्वा चण्डिका प्राह सत्वरा। उवाच कालीं चामुण्डे विस्तीर्णं वदनं कुरु। मच्छस्त्रपातसम्भूतान् रक्तबीजान् महासुरात्। रक्तबिन्दून् प्रतीच्छ त्वं वक्त्रेणानेन वेगिना॥' इति। अत्र श्लोके चामुण्डाया विभूतेः स्वरूपं जाग्रत्समाधिकलेत्युक्तम्। जाग्रद्दशायामेव यः सहजः समाधिरेकाग्रध्यानरूपो न तु सुषुप्तौ अष्टाङ्गयोगनिष्पाद्ये लये वा, स एव विचित्रा विद्या कला चामुण्डाविभूतेः स्वरूपम्। अस्याः शक्तिस्तु सङ्कल्पोपसंहाराद्वर्धते। इदं सङ्कल्पोपसंहरणमेव चामुण्डाकृतरक्तबीजासुररुधिरबिन्दुपानम्। मूलाधाराग्निप्रबोधनमेव चण्डतनुत्रभेदनम्। मूलाग्नेरयोगिषु तमोधूमावृतत्वात्सोऽसुरवत् प्रतिकूलश्चण्डो भवति। तत्कवचभेदनं तु तत्रस्थग्रन्थिभेदनं येन निरावरणो ज्वलति। योगिषु प्रसिद्धस्य सहस्रारामृतांशुमण्डलस्य प्रावरणं मन एव मुण्डोऽसुरः, तस्मात्मनसो निग्रहणमेव मुण्डकवचभेदनं, येन सहस्रारामृतकिरणझरीमास्वाद्यामृतीभवति योगी। एवं रक्तकणपानचण्डमुण्डतनुत्रभेदनरूपेण सङ्कल्पोपसंहार-मूलाग्निधूमापावरण-सहस्रारावरणप्रभेदनानि यया कलया निर्वाह्यन्ते सा चामुण्डा विभूतिर्महाशक्तेरुमाया इति गहनं योगिजनैकवेद्यं सङ्क्षेपेण दिङ्मात्रमुपदर्शितम्॥१८॥

एवं सप्त मातृकाः संस्तूयेदानीम् एकैव महाशक्तिर्माया स्थानभेदात् चातुर्विध्यं भजत इत्याह॥

**त्वं लोकराज्ञि परमात्मनि मूलमाया**
**शक्रे समस्तसुरभर्तरि जालमाया ॥**
**छायेश्वरान्तरपुमात्मनि योगमाया**
**संसारसक्तहृदयेष्वसि पाशमाया ॥१९॥**

त्वमिति– लोकराज्ञि, त्वं परमात्मनि मूलमाया भवसि। समस्तसुरभर्तरि सर्वदेवराजे शक्रे जालमाया असि। लोकप्रसिद्धं चेन्द्रजालम्। इन्द्रस्य जालमायाया मन्त्रलिङ्गं च भवति। 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते' इति। छायेश्वरान्तरपुमात्मनि छायेश्वरस्य सूर्यमण्डलस्य अन्तरे यः पुमात्मा पुरुषः विष्णुः तस्मिन् योगमाया भवसि। विष्णोर्योगमाया दुर्गासप्तशत्यां गीतासु च प्रसिद्धा। संसारसक्तहृदयेषु संसारे जननमरणात्मके सक्तानां सङ्गिनां हृदयेषु पाशमाया बन्धजननी माया असि ॥

अत्र प्रथमं केवला परमात्मनः ततः विश्वापेक्षया परमेश्वरस्येन्द्रस्य शक्तिः, ततोऽस्य ब्रह्माण्डस्य पितुः भानोर्मध्यवर्तिनः विष्णोः, अन्ते चाध्यात्मं संसारिणश्च मायाः चतस्रः एकस्या एव रूपाणीति प्रत्यपादि ॥१९॥

एवं क्रियात्वेन विजृम्भितां चतुर्विधां मायापदवाच्यां महाशक्तिमभिष्टुत्य सर्वक्रियाधारभूतां समुपसंहृतस्वात्मविलासां स्वस्थां समाहितसर्वसामर्थ्यां लयस्वरूपां निद्रापदवाच्यां तामेव महाशक्तिं प्रस्तौति ॥

**त्वं भूतभर्तरि भवस्यनुभूतिनिद्रा**
**सोमस्य पातरि बिडौजसि मोदनिद्रा ॥**
**सप्ताश्वबिम्बपुरुषात्मनि योगनिद्रा**
**संसारमग्नहृदयेष्वसि मोहनिद्रा ॥२०॥**

त्वमिति– भूतभर्तरि भूतानां प्राणिनां भर्तरि पालके भूतेशे ईश्वरे अनुभूतिरूपिणी निद्रा अनुभूतिनिद्रा भवसि, सोमस्य सोमरसस्य पवमानाख्यस्य पातरि पानं कुर्वति बिडौजसि इन्द्रे, मोदरूपिणी निद्रा मोदनिद्रा आनन्दनिद्रेत्यर्थः। मखभुज इन्द्रस्य सोमपात्वं प्रसिद्धम्। सप्ताश्वबिम्बपुरुषात्मनि सप्ताश्वबिम्बे सूर्यबिम्बे यः पुरुषः तस्यात्मनि विष्णौ योगनिद्रा, राहोः

शिर इव पुरुषात्मनीत्यत्र बोध्यम्।' संसारमग्नहृदयेषु भवाम्बुधौ मग्नानां जनानां हृदयेषु मोहनिद्रा मोहात्मिका निद्रा असि। अत्रेदं बोध्यम्। अव्याकृतनामरूपं परं ब्रह्म सदेव असदिति श्रुतिषु गीयते— 'असद्वा इदमग्र आसीत्' इति इदमेवासत् तमः इति मन्त्रवर्णेनाभिहितम्। 'तम आसीत्तमसा गूळ्हमग्रे' इति, इदं च मूलं तमः सर्वलयात्मकं वस्तु स्वास्थ्यानुभूतिरूपं स्वशक्त्या निद्रापदवाच्यत्वं भजते। इमां च महाशक्तिं तान्त्रिकाः तामसीं कालरात्रिं गायन्ति। सैषैका निद्रा लयस्वभावा भूतेशे स्वस्थानुभूतिः, इन्द्रे आनन्दलहरी, विष्णौ योगसम्पत्तिः, संसारिणि पुरुषे मोहशक्तिश्चेति संक्षेपः॥२०॥

अथ देवीमाहात्म्यचरित्रत्रयप्रतिपादितासु तिसृषु देवीमूर्तिष्वाद्यां कालीं प्रस्तौति॥

**विष्णुश्चकार मधुकैटभनाशनं य-**
**न्मुक्तः सहस्रदलसम्भवसंस्तुता सा॥**
**काली घनाञ्जननिभप्रभदेहशालि-**
**न्युग्रा तवाम्ब भुवनेश्वरि कोऽपि भागः॥२१॥**

विष्णुरिति— अम्ब भुवनेश्वरि, यन्मुक्तः यया योगनिद्रया मुक्तः विष्णुः मधु-कैटभनाशनं मधुः कैटभश्च मधु-कैटभौ एतन्नामानावसुरौ तयोर्नाशनं चकार। सहस्रदलसम्भवसंस्तुता सहस्रदलसम्भवेन पद्मयोनिना ब्रह्मदेवेन संस्तुता सन्नुता, घनाञ्जननिभप्रभदेहशालिनी घनाञ्जननिभा सान्द्रकज्जलाभा प्रभा शोभा यस्य सः देहः तेन शालते शोभत इति घनाञ्जननिभप्रभदेहशालिनी उग्रा उद्गीर्णबला सा काली मूर्तिः तव कोऽपि भागः कलाविशेष इति भावः। अत्रेमे सप्तशतीप्रथमाध्यायश्लोका उल्लेख्या भवन्ति— 'योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते। आस्तीर्य शेषमभजत् कल्पान्ते भगवान्प्रभुः॥ तदा द्वावसुरौ घोरौ विख्यातौ मधु-कैटभौ। विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ॥ स नाभिकमले विष्णोः स्थितो ब्रह्मा प्रजापतिः। तुष्टाव योगनिद्रां ताम् एकाग्रहृदयस्थितः॥' इति। तथा चोत्तरत्र 'एवं स्तुता तदा देवी तामसी तत्र वेधसा' इति अत्र तामसी योगनिद्रेत्यर्थः, 'उत्तस्थौ च जगन्नाथस्तया मुक्तो जनार्दनः' अत्र तया योगनिद्रयेति बोध्यम्। अत एव श्लोके यन्मुक्त इत्यत्र यया योगनिद्रया मुक्त इति व्याख्यातम्॥२१॥

एवं कालीं मधुकैटभदमनीं स्तुत्वा, लक्ष्मीं महिषमर्दिनीं द्वितीयचरितदेवतां देवीमूर्तिं प्रस्तौति ॥

**विद्युत्प्रभामयमधृष्यतमं द्विषद्भि-**
**श्चण्डप्रचण्डमखिलक्षयकार्यशक्तम् ॥**
**यत्ते सवित्रि महिषस्य वधे स्वरूपं**
**तच्चिन्तनादिह नरस्य न पापभीतिः ॥२२॥**

विद्युदिति— सवित्रि जननि, महिषस्य असुरस्य वधे हनने विषये विद्युत्प्रभामयं वैद्युतज्योतिर्मयं दुर्दर्शमिति भावः, द्विषद्भिः शत्रुभिः अधृष्यतमं अनभिगम्यतमम् अत्यन्तदुर्गममित्यर्थः, यत् ते तव चण्डप्रचण्डम् अखिलक्षयकार्यशक्तं स्वरूपम् अभूत् इत्यध्याहार्यम्। तच्चिन्तनात् तस्य चिन्तनात् ध्यानात् नरस्य पापभीतिर्न भवतीति शेषः, महिषासुरवधोद्युक्तं यत्ते दुर्गं दुर्दर्शं वैद्युतप्रभामयं स्वरूपं तस्य ज्योतिर्मयवपुषो ध्यानेन सर्वतमोरूपपापध्वंसो भवतीति नात्र चित्रम् ॥२२॥

अथ शुम्भदमनीं तृतीयचरितदेवतां सरस्वतीमूर्तिं स्तौति ॥

**शुम्भं निशुम्भमपि या जगदेकवीरौ**
**शूलाग्रशान्तमहसौ महती चकार ॥**
**सा कौशिकी भवति काशयशाः कृशोद-**
**र्यात्माङ्गजा तव महेश्वरि कश्चिदंशः ॥२३॥**

शुम्भमिति— महेश्वरि ! जगदेकवीरौ जगतो लोकस्य एकौ मुख्यौ असमानौ वा वीरौ शूरौ जगदेकवीरौ शुम्भम् असुरं निशुम्भमपि तस्य भ्रातरमसुरं या महती तव मूर्तिरित्यर्थः, शूलाग्रशान्तमहसौ शूलस्य आयुधस्याग्रे शान्तं निर्वीर्यं महस्तेजः प्रताप इति यावत्, ययोस्तौ विधेयविशेषणं चकार, या ते महती मूर्तिः शुम्भं निशुम्भं च शूलेन निस्तेजस्कौ व्यधादिति भावः। काशयशाः काशः श्वेतपुष्पविशेषः स इव यशो यस्याः सा शुभ्रयशा इति यावत्, कृशोदरी तनुमध्या आत्माङ्गजा तव शरीरसम्भूता सा कौशिकी एतन्नाम्नी देवी तव कोऽपि भागः अंशविशेष इत्यर्थः। तथा चोक्तमन्यत्र 'कौशिकी नाम सा दुर्गा हन्त्री शुम्भ-निशुम्भयोः' इति ॥२३॥

अथ महाशक्तिमिष्टदेवतां शरणागतिमुखेन तत्प्रसादं याचते ॥

**मायें शिवे श्रितविपद्विनिहन्त्रि मातः**
**पश्य प्रसादभरशीतलया दृशा माम् ॥**
**एषोऽहमात्मजकलत्रसुहृत्समेतो**
**देवि त्वदीयचरणं शरणं गतोऽस्मि ॥२४॥**

मायें इति— मायें कपटनाटकसूत्रभर्त्रि, शिवे, मङ्गलस्वरूपे, श्रितविपद्विनिहन्त्रि, श्रितानामाश्रितानां विपदामापदां विनिहन्त्रि विनिवारिणि मातः अम्ब, प्रसादभरशीतलया प्रसादः प्रसन्नता अनुग्रहश्च तस्य भरेण शीतलया शीतया दृशा दृष्ट्या माम् इमम् जनं पश्य वीक्षस्व। देवि, आत्मजकलत्रसुहृत्समेतः मदाश्रितपुत्रदारमित्रैः सह त्वदीयचरणं शरणं गतोऽस्मि प्रपन्नोऽस्मि। दुर्गा भगवती न केवलं निजचरणाश्रितं जनम् अनिष्टपरिहरणाभीष्टदानाभ्यामनुगृह्णाति, अपि तु तम् अन्येषामाश्रयं च विधत्त इति देव्याः परमकारुणिकत्व-वदान्यत्वे प्रसिद्धे। अत एव मामाश्रितैः आत्मजादिभिः सह शरणं गतोऽस्मीत्युपपन्नम्। तथा च सप्तशत्यां 'त्वामाश्रिता ह्याश्रयतां प्रयान्ति' इति ॥२४॥

अथैभिः वसन्ततिलकानिबद्धैः स्तोत्रैर्देवीप्रीणनाशंसया साधुसङ्घानन्दलाभप्रार्थनया च स्तबकमुपसंहरति ॥

**धिन्वन्तु कोमलपदाः शिववल्लभाया-**
**श्चेतो वसन्ततिलकाः कविकुञ्जरस्य ॥**
**आनन्दयन्तु च पदाश्रितसाधुसङ्घं**
**कष्टं विधूय सकलं च विधाय चेष्टम् ॥२५॥**

धिन्वन्त्विति— कोमलपदाः कोमलानि ललितानि पदानि यस्याः सा कविकुञ्जरस्य कविश्रेष्ठस्य गणपतेर्मम वसन्ततिलका एतन्नामकवृत्तबद्धाः स्तुतयः शिववल्लभायाः उमादेव्याः चेतो हृदयं धिन्वन्तु प्रीणयन्तु। कष्टम् अनिष्टं दुःखं विधूय अपवार्य इष्टम् ईप्सितं विधाय च पदाश्रितसाधुसङ्घं चरणाश्रितसज्जनसमूहम् आनन्दयन्तु च। इमाभिः मदीयाभिः वसन्ततिलकाभिः स्तुतिभिः द्वे अपि कर्मणी निर्वाह्येतां देव्याः प्रीणनकर्मैकम् अपरं च साधुजनानन्दनम् ॥२५॥

सप्तमः स्तबकः सव्याख्यः समाप्तः

# अष्टमः स्तबकः

**तमसामभितो हन्ता चण्डिकाहासवासरः ॥**
**सतां हृदयराजीव- विकासाय प्रकल्पताम् ॥१॥**

तमसामिति— तमसाम् अन्तर्गतानाम् अज्ञानानां पक्षे अन्धकाराणाम् अभितः साकल्येन 'साकल्याभिमुखेऽभितः' इत्यमरः, पक्षे सर्वतः हन्ता निवारयिता चण्डिकाहासवासरः चण्डिकाया देव्याः हास एव वासरः दिवसः सतां सज्जनानां हृदयराजीवविकासाय हृदयमेव राजीवं पद्मं तस्य विकासाय उन्मीलनाय प्रकल्पतां प्रभवतु। राजीवविकासको वासरः हृदयोन्मीलकश्चण्डिकाहासः, अर्थश्लिष्टम् अभितस्तमोपहत्वम् उभयगतम्। एवं विषयिणो वासरस्य रूपेण विषयस्य हासस्य रञ्जनाद्रूपकमलङ्कारः। तेनानुप्राणितं वस्तु। राजीवविकासो वासरसापेक्षः। हृदयोन्मीलनं हाससापेक्षम्। अनेन सतां हृदयविकासो देव्यनुग्रहबलादेवेति द्योत्यते ॥

एवं स्तबकादौ यथापूर्वं हासस्तुतिगर्भिता आशीः प्रयुक्ता ॥१॥

**या निद्रा सर्वभूतानां योगनिद्रा रमापतेः ॥**
**ईड्यतां सा महाकाली महाकालसखी सखे ॥२॥**

येति— सखे, देवताराधकम् आस्तिकं प्रियं प्रति सम्बोधनम्। या सर्वभूतानां निद्रा सर्वविस्मरणरूपा लयावस्था, यैव रमापतेः विष्णोः योगनिद्रा, महाकालसखी महाकालस्येश्वरस्य सखी देवी सा महाकाली ईड्यतां स्तूयतां त्वयेति शेषः। अस्मिन् स्तबके सप्तशतीचरित्रत्रयप्रसिद्धदेवीमूर्तीनां तत्कृतमधुकैटभादिसंहारस्य च प्रस्तावनद्वारा भगवती महाशक्तिः स्तूयते। अतीते स्तबके योगनिद्रा व्याख्याता ॥२॥

**विरिञ्चिना स्तुते मातः कालि त्वं चेन्न मुञ्चसि ॥**
**मधु-कैटभ-संहारं करोतु कथमच्युतः ॥३॥**

विरिञ्चिनेति— विरिञ्चिना ब्रह्मणा स्तुते मातः कालि, त्वं न मुञ्चसि

त्यजसि चेत् अच्युतमिति शेषः। अच्युतः विष्णुः मधुकैटभसंहारं कथं करोतु? न कुर्यात् इत्यर्थः। अत्र काली योगनिद्रा हरिनेत्रकृतालया, यां तुष्टाव ब्रह्मा, यया च मुक्तो भगवान् मधुं कैटभं च सञ्जहार। अन्यत् प्राग्व्याख्यातम् ॥३॥

अथ सप्तशतीद्वितीयचरितदेवतायाः माहात्म्यं तुष्टूषुः तया निहतस्य महिषस्य प्रचण्डं साहसम् आधिपत्यं द्वादशभिः श्लोकैराचष्टे ॥

**वासवः काशनीकाश- यशोलङ्कृतदिङ्मुखः ॥**
**महोग्रविक्रमाद्यस्मा- दासीदाजौ पराङ्मुखः ॥४॥**

वासव इति— महोग्रविक्रमात् महान् उरुः उग्रः प्रचण्डः विक्रमः पराक्रमः यस्य तस्मात् बहुपदबहुव्रीहिः, यस्मान्महिषात् यच्छब्दस्य पञ्चदशे श्लोके 'महिषं तं महावीर्यम्' इत्यत्र तच्छब्देन सम्बन्धः, काशनीकाशयशोऽलङ्कृतदिङ्मुखः काशनीकाशेन काशपुष्पाभेन शुभ्रेणेति यावत्, यशसा अलङ्कृतानि भूषितानि दिङ्मुखानि दिशां प्रदेशाः इति यावत्, यस्य सः सर्वासु दिक्षु व्यापकविमलश्लोको वासवः पूर्वदिक्पालकः आजौ युद्धे पराङ्मुखः पराचीनः प्रतिनिवृत्त इति यावत्, आसीत् अभूत्। महायशाः देवराडपि यस्मात्पराजयं प्राप्त इति भावः ॥४॥

**यत्प्रतापेन सन्तप्तो मन्ये बाडबरूपभृत् ॥**
**भगवाननलोऽद्यापि सिन्धुवासं न मुञ्चति ॥५॥**

यत्प्रतापेनेति— यत्प्रतापेन यस्य प्रभावेण सन्तप्तः जातसन्तापः भगवाननलोऽग्निः दक्षिणपूर्वदिक्पालकः बाडबरूपभृत् बडबायां भवं बाडबं रूपं तद्बिभर्ति और्वोऽग्निरित्यर्थः, तथाभूतः सन् अद्यापि इदानीमपि सिन्धुवासं समुद्रवासं न मुञ्चति न त्यजति, इति मन्ये शङ्के। बाडबोऽग्निः समुद्रे वसतीति पुराणप्रसिद्धिः। अग्नेः सिन्धुवासस्य महिषासुरप्रतापजन्यसन्तापशमनं हेतुरिति अहेतोर्हेतुत्वेन सम्भावना हेतूत्प्रेक्षा। सा च सिन्धुवासस्य पुराणप्रसिद्धेः सिद्धविषया ॥५॥

**कुर्वाणे भूतकदनं यस्मिन्विस्मितचेतसः ॥**
**एष एवान्तको नाह- मित्यासीदन्तकस्य धीः ॥६॥**

कुर्वाण इति— यस्मिन् महिषे भूतकदनं भूतानां प्राणिनां कदनं नाशनं कुर्वाणे विदधति सति, एषोऽसुर एव अन्तको यमः, नाहमिति विस्मितचेतसः जाताद्‌भुतमनसः अन्तकस्य दक्षिणदिगीशस्य धीः मतिः आसीत्। महिषासुरकृतभूतजातकदनदर्शनात् स्वस्य अन्तकत्वं विस्मृत्य स एवान्तक इति भ्रान्तिरजायतान्तकस्येति पर्यस्तापह्नव-भ्रान्त्यलङ्कारयोः सङ्करः ॥६॥

**रणे येनातिरस्कृत्य त्यक्तो राक्षस इत्यतः ॥**
**चिराय हरिदीशेषु कोणेशः प्राप्तवान्यशः ॥७॥**

रणे इति— येन महिषेण रणे युद्धे कोणेशः दक्षिण-पश्चिमयोर्यदन्तरालं तस्य कोणस्येशः निर्ऋती राक्षस इत्यतो हेतोः अतिरस्कृत्य अनवमान्य जातिपक्षपातात्, त्यक्तः विसृष्टः सन् हरिदीशेषु दिक्पालकेषु चिराय यशः प्राप्तवान्। राक्षस इति सजातीयपक्षपातात् हेतोः निर्ऋतिर्न महिषेण तिरस्कृत इति सम्भावना। तस्मात् उत्प्रेक्षावाचकेवादिशब्दादर्शनाद् गम्योत्प्रेक्षा ॥७॥

**यन्नियन्तुमशक्तस्य कुर्वाणमसतीः क्रियाः ॥**
**नियन्तुरसतामासी- त्पाशिनो मलिनं यशः ॥८॥**

यदिति— असतीः दुष्टाः क्रियाः कुर्वाणं दुष्कर्माण्याचरन्तमित्यर्थः, यं महिषासुरं नियन्तुं दमयितुम् अशक्तस्य असमर्थस्य असतां पापानां नियन्तुः निग्रहीतुः पाशिनो वरुणस्य पश्चिमदिङ्नाथस्य यशः मलिनं मन्दमासीत्। सर्वपापदमनविश्रुतस्य वरुणदेवस्य यशो महिषनियमनाशक्तेर्मन्दं बभूवेति भावः। अत्र महिषदमनासामर्थ्यहेतुकेन कविकल्पितेन वरुणयशोमालिन्यसिद्धिरूपेण वस्तुनोत्प्रेक्षा गम्यते। एवं च कविप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः ॥८॥

**बाहुवीर्यपराभूतो यस्य प्रायेण मारुतः ॥**
**बभूव क्षणदान्तेषु रतान्तपरिचारकः ॥९॥**

बाहुवीर्यपराभूत इति— यस्यासुरस्य बाहुवीर्यपराभूतो भुजबलपराजितो मारुतः पश्चिमोत्तरदिक्पालः क्षणदान्तेषु निशावसानेषु प्रायेण प्रायशः रतान्तपरिचारकः सुरतश्रमापनोदको मन्दो बभूव। महिषपराजितो मारुतो दासो भूत्वा मन्दो जात इति गम्योत्प्रेक्षा ॥९॥

**निधीन्येन जितो हित्वा राजराजः पलायितः ॥**
**स्पष्टं बभाण माधुर्यं प्राणानामखिलादपि ॥१०॥**

निधीनिति— येन महिषहतकेन युद्धे जितः राजराजः कुबेरः निधीन् महापद्मादीन् हित्वा त्यक्त्वा पलायितः सन् अखिलादपि समस्तादपि प्राणानां माधुर्य, महत्यपि कष्टे जीवितम् अत्यन्तप्रियं भवतीत्येतदर्थं वचः स्पष्टं बभाण व्यक्तं भाषितवान्। लघुनि महति वा कष्टे प्राणान् यथाकथञ्चिद्रक्षितुं प्रयतमानस्य जनस्याधीरताम् आख्यातुं 'तस्य प्राणाः गुडम्' इति लोकोक्तिः। इमामेवाश्रित्य 'प्राणानां माधुर्यम्' इति प्रयोगः। महिषस्य पुरस्तात् उत्तरदिक्पालकस्यापि मानादपि निधिभ्यश्चापि प्राणेषु प्रियतरत्वं जनसामान्यस्येवासीदिति द्योतितम् ॥१०॥

**यस्मिन्नुत्तरपूर्वस्या- दिश एकादशाधिपाः ॥**
**कुण्ठा बभूवुरात्मीय- कण्ठोपमितकीर्तयः ॥११॥**

यस्मिन्निति— यस्मिन् महिषासुरे, उत्तरपूर्वस्याः उत्तरस्याः पूर्वस्याश्च यदन्तरालं सा उत्तरपूर्वा तस्याः दिशः एकादश अधिपाः रुद्राः कुण्ठाः मन्दाः आत्मीयकण्ठोपमितकीर्तयः आत्मीयैः कण्ठैः उपमिता तुलिता कीर्तिर्येषां ते बभूवुः, रुद्रस्य नीलकण्ठत्वं प्रसिद्धम्। एकादशरुद्राणां यशः शुभ्रत्वं विहाय नीलिमानमभजतेत्यर्थात् अप्रकाशं तमोनिमग्न जातमिति भावः ॥११॥

**निजशुद्धान्तकान्ताना- माननैरेव निर्जितम् ॥**
**ललज्जे यः पुनर्जित्वा शूरमानी सुधाकरम् ॥१२॥**

निज इति— शूरमानी आत्मानं शूरं मन्यते इति शूरमानी यः महिषः निजशुद्धान्तकान्तानां स्वीयान्तःपुरसुन्दरीणाम् आननैवरे मुखैरेव निर्जितं सुधा-

करं चन्द्रं पुनर्जित्वा ललज्जे लज्जितवान्। प्रागेव जितस्य पुनर्जयः शूरमानिनो लज्जावह एवासीत् ॥१२॥

**बालस्येव क्रीडनकैः प्रवीरैर्यस्य खेलतः।**
**लीलाकन्दुकधीरासीद्देवे दीधितिमालिनि ॥१३॥**

बालस्येति— क्रीडनकैः क्रीडावस्तुभिः खेलतः क्रीडतः बालस्य इव प्रवीरैः प्रकृष्टैः वीरैः खेलतो यस्यासुरस्य देवे दीधितिमालिनि सूर्ये क्रीडाकन्दुकधीः क्रीडार्थं कन्दुकं गोलाकारमिति धीः बुद्धिरासीत्। बालस्य यथा कन्दुकादिक्रीडनके स्वीयत्व-वश्यत्व-क्रीडायोग्यत्वबुद्धिर्भवति, तथा प्रकृष्टवीरेषु क्रीडनकवदाचरतः महिषस्य सूर्ये क्रीडनकबुद्धिरासीत्। तावान् पराक्रमो दर्पश्च तस्य ॥१३॥

**त्रियामाचरशुद्धान्त-भ्रूविलासनिवारणम् ॥**
**विष्णोः सुदर्शनं चक्रं यस्य नापश्यदन्तरम् ॥१४॥**

त्रियामेति— त्रियामाचरशुद्धान्तभ्रूविलासनिवारणं त्रियामाचराणां रात्रिचराणां राक्षसानां शुद्धान्तस्य अन्तःपुरस्य भ्रूविलासानां निवारणं राक्षसस्त्रीणां शोकविह्वलतालम्भकम् इत्यर्थः। विष्णोः सुदर्शनं चक्रं यस्य महिषस्य अन्तरं छिद्रं नापश्यत। महाप्रभावं रक्षःकुलघ्नं विष्णुचक्रमपि तस्य रन्ध्रं न प्रापत् प्रहर्तुम् ॥१४॥

**महिषं तं महावीर्यं या सर्वसुरदेहजा ॥**
**अवधीद्दानवं तस्यै चण्डिकायै नमो नमः ॥१५॥**

महिषमिति— तं तथाविधं महावीर्य गुरुपराक्रमं महिषं दानवमसुरं सर्वसुरदेहजा सर्वेषां सुराणां देहेभ्यो जायत इति सर्वसुरदेहजा या देवी अवधीत् जघान तस्यै चण्डिकायै नमो नमः। द्विरुक्तिर्बहुनमस्कारार्था। हरादितेजःपुञ्जाविर्भूता देवी महिषासुरमर्दिनीति सप्तशत्यां कथ्यते— 'ततः समस्तदेवानां तेजोराशिसमुद्भवाम्। तां विलोक्य मुदं प्रापुरमरा महिषार्दिताः ॥' इति ॥१५॥

**मुखं तवासेचनकं ध्यायं ध्यायं निरन्तरम् ॥**
**मृगेन्द्रवाहे कालेन मृडस्त्वन्मुखतां गतः ॥१६॥**

मुखमिति– मृगेन्द्रवाहे सिंहवाहने, मातः, आसेचनकं यस्य दर्शनात् तृप्तेः नास्त्यन्तः तदासेचनकम् अत्यन्तसुन्दरं तव मुखं निरन्तरम् अनवरतं ध्यायं ध्यायं ध्यात्वा ध्यात्वा मृडस्तव कान्तः शङ्करः कालेन कालक्रमेण त्वन्मुखतां तव मुखमिव मुखं यस्य सः त्वन्मुखस्तस्य भावस्त्वन्मुखता तां गतः प्राप्तः। ध्यातुर्ध्येयताद्रूप्यसिद्धिर्हि ध्यानस्य फलम्। अत एव शिवस्य मुखेऽर्धं पार्वतीमुखमासीदिति गम्योत्प्रेक्षा ॥१६॥

**कार्त्तिकीचन्द्रवदना कालिन्दीवीचिदोर्लता ॥**
**अरुणाम्भोजचरणा जयति त्रिरुचिः शिवा ॥१७॥**

कार्त्तिकीति– कार्त्तिकीचन्द्रवदना कृत्तिकानक्षत्रेण युक्ता पौर्णमासी कार्त्तिकी तस्यां यश्चन्द्रः स इव वदनं यस्याः सा। कालिन्दीवीचिदोर्लता कालिन्दीवीचिः यमुनोर्मिरिव दोर्लता भुजलता यस्याः सा। अरुणाम्भोजचरणा अरुणाम्भोजे रक्ताम्बुजे इव चरणे यस्याः सा। त्रिरुचिः तिस्रः श्वेतकृष्णारुणाः रुचयः प्रभाः यस्याः सा शिवा जयति उत्कर्षेण वर्तते। चन्द्रोपमितं वदनं शुक्लं, कालिन्दीवीच्युपमिता भुजलता कृष्णा, रक्ताम्भोजोपमितं चरणं च लोहितम्। एवं लोहित-शुक्ल-कृष्णा शिवा त्रिरुचिस्त्रिवर्णा त्रिगुणात्मिका 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतिप्रतिपादिता ब्रह्मस्वरूपिणीत्युक्तं भवति ॥१७॥

**यत्ते कचभरः कालो यद्बाहुर्लोकरक्षकः ॥**
**युक्तं द्वयं शिवे मध्य- स्त्वसन्नाको न नाकराट् ॥१८॥**

यदिति– शिवे यत् यतो हेतोः ते तव कचभरः केशातिशयः सान्द्राः केशा इति यावत्, कालः नीलवर्णः कृतान्तो दुष्टानां लोकानां च, यत् यतो हेतोः बाहुः भुजः लोकरक्षकः तत् ततो हेतोः यत्तदोर्नित्यसम्बन्धात् तदित्यध्याहार्यम्। द्वयं, रौद्रतावहः कालात्मा शिक्षकः कचभरः, सौम्यतावहो रक्षको बाहुश्चेति द्वयं युक्तम् उपपन्नम्। मध्यः अवलग्नस्तु नाकराट् स्वर्गराज इन्द्रः, असन्नाकः, न सन् असन् स नाकः स्वर्गो यस्य सः असन्नाकः इति न, सन्नाक एवेत्यर्थः ॥

इदमिह वक्तव्यं– सर्वान्तकृत् महाकालो देव्याः केशपाशतयाऽवस्थितः, लोकरक्षको विष्णुश्च बाहुरूपतया, नाकराडिन्द्रस्तु अवलग्नरूपेण स्थितः। कचभर-बाहुकर्तृकयोर्निग्रहानुग्रहयोः सतोर्नाकराड्भूतावलग्नस्यावशिष्टं कार्यं शून्यमेव भवति। स्वर्गराज्यभोगस्त्ववशिष्टः। अत एव नाकराजस्य नाको नास्तीति न, अस्त्येवेत्युक्तम्। इदं चोत्तरत्र गीयते कविना। भगवत्याः कुक्षौ भूमि-पाताल-स्वर्गलोकाः स्थिताः 'नाकोऽवलग्नमीश्वरि कटिरवनिर्भोगिनां जगन्नाभिः। कुक्षौ न केवलं ते बहिरपि वपुषि त्रयो लोकाः॥' इति चोक्तम्। तत्र मध्य एव नाक इत्याह। मध्यस्य सूक्ष्मत्वं द्योतयितुम् आकाश-मध्या मध्यशून्येत्यादिप्रयोगः कविसमयः। तस्मादिह असन्निव अतिसूक्ष्मो मध्य एव नाकः, मध्यस्य शून्यत्वे तत्रारोपितनाकस्यापि असत्त्वशङ्का स्यात् इति सा निरस्यते 'नाकराट् असन्नाको न' इति। मध्यः ( अवलग्नम् ) असन्नपि नाकराडसन्न, सन्नेव नाकराज्यं भोक्तुम् ॥१८॥

**स्वदेहादेव या देवी प्रदीपादिव दीपिका॥**
**आविर्बभूव देवानां स्तुवतां हर्तुमापदः॥१९॥**

स्वदेहादिति— या देवी कौशिकी प्रदीपाद् दीपिका इव स्वदेहादेव, स्तुवतां स्तोत्रं कुर्वतां देवानाम् आपदः हर्तुम् अपनेतुम्, आविर्बभूव सम्भूतेत्यर्थः। त्रयोविंशे श्लोके ताम् इत्युत्तरेणान्वयः। एकस्या एव देव्याः शरीराद्बह्वयः शक्तयो देवीमूर्तयः तद्विभूत्या सम्भूताः तस्यामेव लीनाश्चेति तृतीयचरिते स्पष्टमुक्तम्— 'ततो देवीशरीरात्तु विनिष्क्रान्ताऽतिभीषणा। चण्डिका-शक्तिरत्युग्रा शिवा शतनिनादिनी॥' तथा च शुम्भं प्रत्याह देवी— 'एकैवाहं जगत्यत्र द्वितीया का ममापरा। अहं विभूत्या बहुभिरिह रूपैर्यदा स्थिता। तत्संहृत्याहमेकैव तिष्ठाम्यद्य स्थिरो भव॥' इत्यादि अत्रावधेयम्॥१९॥

**धैर्य-चातुर्य-गाम्भीर्य- वीर्य-सौन्दर्यशालिनीम्॥**
**रत्नं नितम्बिनीजातौ मेनिरे यां सुरासुराः॥२०॥**

धैर्येति— सुरासुराः सुरा देवा असुराश्च धैर्य-चातुर्य-गाम्भीर्य-वीर्य-सौन्दर्यशालिनीं धैर्येण धीरभावेन, चातुर्येण पाटवेन, गाम्भीर्येण गम्भीरभावेन, वीर्येण वीरस्वभावेन प्रभावेण, सौन्दर्येण रमणीयभावेन च शालते इति धैर्यादिशालिनी तां, यां नितम्बिनीजातौ स्त्रीजातौ रत्नं प्रशस्तं मेनिरे अमंसत। यां कौशिकीं देवीं स्त्रीजातावत्युत्तमां मन्यन्ते स्म देवासुराः इति भावः॥२०॥

**यदीय-हुङ्कृत्यनले धूम्राक्षोऽभवदाहुतिः ॥**
**समाप्ति भीषणं याव- न्नैवावाप विकत्थनम् ॥२१॥**

यदीयेति— यदीयहुङ्कृत्यनले यस्या इयं यदीया हुङ्कृतिः हुङ्कारः एवानलोऽग्निः तस्मिन्, धूम्राक्षो नामासुरः शुम्भासुरसेनानीः, भीषणं भयावहं विकत्थनम् आत्मश्लाघनं कर्तृ समाप्ति पूर्ति यावन्नैवावाप यावत्कालं निश्शेषं दाम्भिकमात्मपराक्रमकीर्तनम् अन्तं नागमत्, तावत् अध्याहार्यम्, आहुतिः अभवत् होमद्रव्यमभूदित्यर्थः। देव्याः क्रोधप्रकाशकहुङ्कारराग्नौ निश्शेषस्वात्मश्लाघनस्य यावदन्तं हूयमान एवासीत् धूम्रलोचन इति भावः। असुरात्मश्लाघावाग्जालस्यैको हुङ्कारो देव्याः प्रत्युत्तरमभूत्, येन विकत्थनो भस्मसात्कृतः। अत्र लोकातिशयसम्पत्तिवर्णनादुदात्तालङ्कारः, 'लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते' इति तल्लक्षणात् ॥२१॥

**चामुण्डा-शिवदूत्यौ य- त्कले दारुणविक्रमे ॥**
**भक्षयामासतुर्मूर्तीः कीर्तिभिः सह रक्षसाम् ॥२२॥**

चामुण्डेति— यत्कले यस्याः कले कलाभूते अंशाविति यावत्, दारुणविक्रमे क्रूरपराक्रमे चामुण्डा-शिवदूत्यौ चामुण्डा शिवदूती च, रक्षसां कीर्तिभिः सह मूर्तीः भक्षयामासतुः। न केवलं राक्षसानां शरीराणि सञ्जह्रतुः तेषां यशांसि चैति भावः। चमत्कृतिजनकयोः भक्षितयोः रक्षोमूर्तिकीर्त्योः साहित्यात् सहोक्तिरलङ्कारः, 'सहोक्तिः सहभावश्चेद् भासते जनरञ्जनः' इति तल्लक्षणात् ॥२२॥

**यस्याः शूले जगामास्तं यशः शुम्भ-निशुम्भयोः ॥**
**नमामि विमलश्लोकां कौशिकीं नाम तामुमाम् ॥२३॥**

यस्या इति— यस्या देव्याः शूले आयुधे शुम्भ-निशुम्भयोः शुम्भस्य तद्भ्रातुः निशुम्भस्य चोभयोः यशोऽस्तं जगाम नाशं प्राप, विमलश्लोकां पुण्यकीर्ति कौशिकीं नाम प्रसिद्धां तामुमां नमामि। शुम्भ-निशुम्भहन्त्री मूर्तिः कौशिकीति प्रसिद्धम्। 'कौशिकी नाम सा दुर्गा हन्त्री शुम्भ-निशुम्भयोः' इति ह्युक्तम् ॥२३॥

**यशोदागर्भजननाद् यशोदां गोकुलस्य ताम् ॥**
**वन्दे भगवतीं नन्दां विन्ध्याचलनिवासिनीम् ॥२४॥**

यशोदेति— यशोदागर्भजननात् यशोदाया नन्दगोपजायाया गर्भे कुक्षौ जननात् हेतोः गोकुलस्य श्रीकृष्णबालक्रीडावासस्थानस्य व्रजस्य यशोदां कीर्तिप्रदां विन्ध्याचलनिवासिनीं तां भगवतीं नन्दां नन्दादेवीं वन्दे स्तौमि। कंसभयाद् गोकुलं नीतः शिशुः देवकीपुत्रः, नन्दशिशुः नन्दा च देवकीगृहं नीता। सैषा महामायैव नन्दा जाता कंसं प्रतार्य अदृश्याऽभूदिति भागवतकथा। सैषा नन्दा भगवती विन्ध्याचलाधिष्ठात्री इति गीयते। देवीमाहात्म्ये मूर्तिरहस्ये चैवं दृश्यते— 'नन्दा भगवती नाम या भविष्यति नन्दजा। सा स्तुता पूजिता ध्याता वशीकुर्याज्जगत्त्रयम् ॥' इत्यादि ॥२४॥

**अम्बिकामुपतिष्ठन्ता- मेताश्चण्डीमनुष्टुभः ॥**
**प्रसन्नाः साध्वलङ्काराः सिद्धपद्मेक्षणा इव ॥२५॥**

अम्बिकामिति— एता अनुष्टुभः अनुष्टुप्छन्दोबद्धाः स्तुतयः चण्डिकामम्बिकाम् उपतिष्ठन्ताम् उपास्य सेवन्ताम्। का इव ? सिद्धपद्मेक्षणा इव, सिद्धाः देवयोनिविशेषाः पद्मेक्षणाः पद्माक्ष्यः सुन्दर्य इति यावत्, ता इव। कथम्भूताः अनुष्टुभः सिद्धपद्मेक्षणाश्च ? प्रसन्नाः शब्दार्थप्रसादगुणविशिष्टाः अक्लिष्टा इत्यर्थः, पक्षे स्वच्छाः। साध्वलङ्काराः साधवः समीचीना निर्दुष्टाः अलङ्कारा उपमाद्या यासां ताः, पक्षे साधवः शोभनाः अलङ्काराः भूषणानि यासां ताः, उपतिष्ठन्तामिति सम्बन्धः। अनुष्टुप्सिद्धपद्मेक्षणानां श्लेषोत्थापितप्रसादसाध्वलङ्कारतासाधर्म्यादुपमालङ्कारः ॥

अत्र स्तबके सप्तशतीप्रोक्तदेवीमहिमानुकीर्तनात् देवीमाहात्म्ये प्रतिपादितायाः देव्याश्चण्डीनाम्ना प्रसिद्धेः, चण्डिकामुपतिष्ठन्तामित्युक्तम् ॥२५॥

इति श्रीमहर्षिरमणभगवत्पादान्तेवासिनो वासिष्ठस्य
नरसिंहसूनोः गणपतिमुनेः कृतावुमासहस्रे
अष्टमः स्तबकः समाप्तः।
समाप्तं च द्वितीयं शतकम्।
प्रभाख्या व्याख्या च समाप्ता ॥

# नवमः स्तबकः

सर्वातिशायिरामणीयको महाप्रभाव उमादेवीमन्दहासो भङ्गीभेदेनास्मिन् स्तबके स्तूयते ॥

**शारदवलक्षपक्ष- क्षणदावैमल्यशिक्षकोऽस्माकम् ॥**
**जागर्तु रक्षणाय स्थाणुपुरन्ध्रीमुखविकासः ॥१॥**

शारदेति— स्थाणुपुरन्ध्रीमुखविकासः स्थाणोः शिवस्य पुरन्ध्र्याः सुन्दर्याः मुखस्य वदनस्य विकासः उत्फुल्लभावः स्मितमिति यावत्, अस्माकं रक्षणाय पालनाय जागर्तु जागरूकतया वर्तताम्, अस्मद्रक्षणविधायको भवत्वित्यर्थः । मुखविकासं विशिनष्टि। शारदवलक्षपक्षक्षणदावैमल्यशिक्षकः शरदोऽयं शारदः वलक्षः शुक्लः पक्षः तस्य क्षणदानां रात्रीणां वैमल्यस्य नैर्मल्यस्य शिक्षकः अध्यापकः। ज्यौत्स्नीवैमल्यात् अप्यधिकः प्रकाशो वदनविकासस्येत्यर्थः। ज्यौत्स्नीवैमल्यस्य उमामुखविकासस्य च प्रकाशकतासाधर्म्यादुपमालङ्कारः। शिक्षकशब्दस्य सादृश्यसूचकत्वात्, तदुक्तं दण्डिना— 'प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः। सदृक्सदृशसंवादिसजातीयानुवादिनः ॥' इत्यारभ्य 'तत्पदव्यां पदं धत्ते तस्य कक्ष्यां विगाहते। तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ॥ तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः । उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥' इति। जागर्तुपदं मुखविकासकर्तृकरक्षणक्रियाप्रकर्षकम्। तस्यार्थसामर्थ्यान्मुखविकासस्य बोधरूपत्वमाक्षिप्यते। तमसि जाड्ये वा ततो भयाद् रक्ष्याणाम् उमामुखविकासजागरणमेव महत्त्राणं भवति। यथाऽन्धतमसे स्थिते निद्राणे वा लोके चराचरशत्रोर्भयस्य सम्भवे सति तन्निवारणाय प्रकाशः कस्यचिद्बलवतो जागरणमलम्। तथा भगवतीचित्प्रकाशात्मकमुखविकासः चराचरशत्रुभ्यो रक्ष्यान् भयेभ्यो भक्तान् जागरणमात्रेण रक्षतीति भावः। चराचरनियन्त्रणसमर्था सैका हि सर्वत्र जागर्ति। तथा चोक्तमाचार्यैः शिवशतके— 'सर्वस्मिन्नचरे चरे च विभवादेका परा जाग्रती शक्तिः काचन सा विचाररसिकैराराध्यते नाथ ते' इति ॥१॥

**व्याख्यानं हर्षस्य प्रत्याख्यानं शरत्सुधाभानोः ।।**
**दिशतु हृदयप्रसादं गौरीवदनप्रसादो नः ।।२।।**

व्याख्यानमिति— गौरीवदनप्रसादः उमावक्त्रप्रसन्नता नः अस्माकं हृदयप्रसादं चित्तवैमल्यं दिशतु अनुगृह्णात्वित्यर्थः। कीदृशः गौरीवदनप्रसादः ? हर्षस्य व्याख्यानं, तस्याः सहजसन्तोषविवरणं; पुनः कीदृशः ? शरत्सुधाभानोः प्रत्याख्यानं, शारदचन्द्रं प्रतिषेधत्यस्याः प्रसन्नता। हर्षव्याख्यानम् इत्यनेन सन्तोषावहत्वं शरच्चन्द्रनिराकृतिरित्यनेन नैर्मल्यावहत्वं उभे च वदनप्रसादस्योक्ते। उभयोः प्रदानेन हृदयस्य प्रसादलाभो भवितुमर्हति। तद्दानसमर्थो वदनप्रसादः प्रार्थितः। एकस्यैव द्विधोल्लेखनात् उल्लेखालङ्कारः ।।२।।

**अन्तर्गतस्य हर्ष- क्षीरसमुद्रस्य कश्चन तरङ्गः ।।**
**हासो हरहरिणदृशो गतपङ्कं मम करोतु मनः ।।३।।**

अन्तरिति— अन्तर्गतस्य हृदयं गतस्य हर्षक्षीरसमुद्रस्य हर्षः सम्मद एव क्षीरमयः समुद्रस्तस्य कश्चन तरङ्ग ऊर्मिविशेषः हरहरिणदृशः ईश्वरकान्तायाः पार्वत्याः हासः मुखविकास इत्यर्थः, मम मनः मानसं गतपङ्कं गतं पङ्कं पापं यस्मात्तत् करोतु। हर्षसमुद्रयोः हासतरङ्गयोः आरोपविषयविषयिणोरभेदाध्यवसायाद्रूपकमलङ्कारः। पङ्के श्लेषः, पापं कर्दमश्च। हासेन पापापनोदनं तरङ्गेण कर्दमापसरणमिति विवेकः। पङ्कपदश्लिष्टार्थसामर्थ्यान्मनश्च पङ्किलं सरस्तटस्थानीयमाक्षिप्यते ।।३।।

**दिशि दिशि विसर्पदंशु- प्रशमिततापं परास्तमालिन्यम् ।।**
**कुशलानि प्रदिशतु नः पशुपतिहृदयेश्वरीहसितम् ।।४।।**

दिशि इति— दिशि दिशि सर्वासु दिक्षु विसर्पदंशुप्रशमिततापं विसर्पद्भिः प्रसरद्भिरंशुभिः किरणैः प्रशमितः शिशिरीकृतः तापो घर्मः यस्य तत्, परास्तमालिन्यं परास्तम् अपगमितं मालिन्यं मलदूषितत्वं येन तत्, पशुपतिहृदयेश्वरीहसितं पशुपतेर्भूतेशस्य हृदयेश्वर्याः पार्वत्याः हसितं नः अस्माकं कुशलानि क्षेमाणि प्रदिशतु विदधात्वित्यर्थः। तापप्रशमन-मालिन्यपरासनाभ्यां हसितस्यामृतकिरणत्वं द्योत्यते तेनोपमाध्वनिः ।।४।।

**अन्तर्गतं च तिमिरं हरन्ति विहसन्ति रोहिणीकान्तम् ॥**
**हसितानि गिरिशसुदृशो मम प्रबोधाय कल्पन्ताम् ॥५॥**

अन्तरिति— अन्तर्गतं हृदयगतं, च अप्यर्थे, तिमिरम् अन्धकारं, हरन्ति तस्य अपहारकाणि, रोहिणीकान्तं चन्द्रं, विहसन्ति तस्य परिहासकानि, चन्द्रो बाह्यं तिमिरमेव अपहन्ति; हसितानि तु अन्तर्गततिमिरमपि हरन्ति तस्मादुपहसनम्। तथाविधानि गिरिशसुदृशः कैलासनाथकान्तायाः हसितानि मम प्रबोधाय कल्पन्ताम् प्रभवन्तु। मम अन्तस्तिमिरापहं प्रबोधं विदधत्विति भावः। अत्रोपमानात् रोहिणीकान्तादुपमेयानां हसितानामाधिक्यात् व्यतिरेकालङ्कारः। 'आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा' इति साहित्यदर्पणे तल्लक्षणात् ॥५॥

**भूषातुषारदीधिति- दीधित्या सह विहायसो रङ्गे ॥**
**विचरन्पुरहरतरुणी- दरहासो मे हरत्वेनः ॥६॥**

भूषेति— भूषातुषारदीधितिदीधित्या भूषाभूतः वतंसभूतः तुषारदीधितिहिमांशुः हरशिरःस्थश्चन्द्र इति यावत्, तस्य दीधित्या चन्द्रिकयेत्यर्थः, सह विहायस आकाशस्य रङ्गे नाट्यस्थले आकाशमेव रङ्गस्थलं राहोः शिर इतिवत् बोध्यम्। विचरन् सञ्चरन् विहारं कुर्वन्नित्यर्थः, पुरहरतरुणीदरहासः पार्वतीमन्दहासः मे मम एनः पापं हरतु अपहरतु। आकाशरङ्गे कान्तेन सह विहरन्त्याः पार्वत्याः मन्दहासः हरशिरोभूषणबालचन्द्रचन्द्रिकया विलसन् ममाघं हरत्विति प्रार्थना। उमामन्दहासस्य हरशिरःस्थबालचन्द्रदीधित्या सह विलसनं तदानुरूप्यादुपपन्नम्। द्वयोरनुरूपयोर्वर्णनात् समालङ्कारः ॥६॥

**रुद्राणीदरहसिता- न्यस्माकं संहरन्तु दुरितानि ॥**
**येषामुदयो दिवसो भूषापीयूषकिरणस्य ॥७॥**

रुद्राणीति— रुद्राणीदरहसितानि रुद्रपत्नीमन्दहसितानि अस्माकं दुरितानि पापानि संहरन्तु नाशयन्तु। येषां दरहसितानामुदयः प्रादुर्भावः भूषापीयूषकिरणस्य भूषेन्दोः शिवशिरःस्थस्य दिवसः भवतीत्यध्याहार्यम्। दिवसस्य चन्द्रप्रभाप्रकर्षकत्वं प्रसिद्धम्। हसितोदये शिवशिरश्चन्द्रिका तिरस्कृता

भवतीत्युक्तं भवति। दिवसपदार्थसामर्थ्यात् प्रतापगर्भतिग्मांशुत्वं हसितानामाक्षिप्यते। तदानुगुण्येन दुरितसंहरणप्रार्थना चौचित्यं पुष्णातीति बोध्यम्। उमाहसितानां भूषेन्दोश्च प्रभालक्षणे तुल्ये सत्यपि, हसितप्रभोत्कर्षेण भूषेन्दुप्रभानिकर्षस्य दिवसपदेन गम्यमानत्वात् भूषेन्दुप्रभायास्तिरोधानात् मीलितं नामालङ्कारः। तदुक्तं साहित्यदर्पणे 'मीलित वस्तुनो गुप्तिः केनचित्तुल्यलक्ष्मणा' इति। उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानं मीलितम् इति भावः ॥७॥

**स्कन्दजननीमुखेन्दो-　　रस्मान्पुष्णातु　सुस्मितज्योत्स्ना ॥**
**मुनिमतिकैरविणीना-　　मुल्लासकथा यदायत्ता ॥८॥**

स्कन्देति— स्कन्दजननीमुखेन्दोः स्कन्दजनन्यास्सुब्रह्मण्यमातुः मुखमेवेन्दुश्चन्द्रस्तस्य सुस्मितज्योत्स्ना शोभनं स्मितं सुस्मितं तदेव ज्योत्स्ना अस्मान पुष्णातु पुष्टान्विदधात्वित्यर्थः। मुनिमतिकैरविणीनां मुनीनां मतयो बुद्धय एव कैरविण्यः कुमुदिन्यस्तासामुल्लासकथा उल्लासस्य विकासस्य कथा उक्तिः यदायत्ता यदधीना भवतीत्यध्याहार्यम्। रूपकमलङ्कारः। तत्रायं विवेकः। स्कन्दजननीमुखम् इन्दुस्थानीयं, स्मितं ज्योत्स्नास्थानीयं, मुनिमतयः कैरविणीस्थानीयाः; मुनिमतीनामुल्लसनं स्कन्दमातृस्मिताधीनं, कैरविणीनामुल्लासश्च ज्योत्स्नाधीनः। मतिपदमत्र हृदयोपलक्षकम् उल्लासशब्दस्वारस्यात्। मुनिहृदयोल्लासप्रसङ्गात् पार्वतीवाचकं स्कन्दजननीपदम् औचित्यपोषकं, स्कन्दस्य सनत्कुमारापराभिधानस्य सर्वेभ्योऽपि मृदितकषायेभ्यो मुनिभ्यः ज्ञानदातृत्वप्रसिद्धेः ॥८॥

**कमनीयकण्ठमाला-　　मुक्तामणितारकावयस्यो नः ॥**
**कामान्वितरतु गौरी-　　दरहासो नाम धवलांशुः ॥९॥**

कमनीयेति— कमनीयकण्ठमालामुक्तामणितारकावयस्यः कमनीयाया मनोज्ञायां कण्ठमालायां कण्ठहारे इत्यर्थः, याः मुक्तामणयः मौक्तिकानीत्यर्थः, ता एव तारकाः ताराः नक्षत्राणीत्यर्थः, तासां वयस्यः सखा, गौरीदरहासो देवीमन्दहासो नाम प्राकाश्ये ख्यात इत्यर्थः, धवलांशुश्चन्द्रः नः अस्मभ्यं कामान् वितरतु ईप्सितानि ददातु। रूपकमलङ्कारः। अत्रेदं विवेचनीयम्। कण्ठमालामुक्तामणिषु तारकारोपणं प्रभा-तरलतासाधर्म्यात्। कमनीयत्वं

तूभयत्र समानम्। दरहासो मुक्तामणीनां वयस्यः सहचरः। धवलांशुः तारकाणां वयस्यः कान्तः। शोभावहत्वाह्लादकत्वादिः दरहासधवलांश्वोः समानधर्मः। एवं सावयवं रूपकम् ॥९॥

**अनवद्यकण्ठमाला- मुक्तावलिकिरणनिवहसहवासी ॥**
**हरदयितादरहासो हरतु ममाशेषमज्ञानम् ॥१०॥**

अनवद्येति– अनवद्या निर्दोषा कण्ठमालायां या मुक्तावलिः तस्याः किरणानां निवहस्य समूहस्य सहवासी सखेत्यर्थः। हरदयितादरहासो हरसुन्दरीमन्दहासः मम अशेषं समस्तमज्ञानं हरतु। हरति भक्तानाम् अज्ञानमार्तिं वेति हरपदव्युत्पत्तेः, अशेषाज्ञानहरणे प्रसक्ते पार्वत्याः हरदयितात्वेन कीर्तनम् औचित्यप्रकर्षकम् ॥१०॥

**ञ इव ज्ञदृश्य उत्तम इलाधराधीशनन्दिनीहासः ॥**
**पूर्णं करोतु मानस- मभिलाषं सर्वमस्माकम् ॥११॥**

ञ इति– ज्ञदृश्यः जकार-ञकारयोः संयोगः ज्ञः तस्मिन् दृश्यः द्रष्टुं शक्यः ञः ञवर्ण इव। ज्ञ इति लिपौ ञकारः प्रायो न दृश्यते अत्यन्तसूक्ष्मतया तु दृश्यते। एवमविस्पष्टं सूक्ष्मं च दृश्यः ञवर्ण इव उत्तम उत्कृष्टः इलाधराधीशनन्दिनीहासः पर्वतराजपुत्रीहासः अस्माकं सर्वं मानसम् अभिलाषं कामं पूर्णं करोतु। प्रायोऽदृश्यत्वात् सूक्ष्मत्वात् उत्तमो हासः। तैत्तिरीयप्रातिशाख्ये ञकार उत्तमसंज्ञः पठितः– सू० १०– वर्णानामानुपूर्व्येण पञ्च पञ्च वर्गाः। सू० ११– प्रथमद्वितीयतृतीयचतुर्थोत्तमाः। उत्तमसंज्ञः ञवर्णः ज्ञदृश्यः प्रातिशाख्यज्ञैः बोध्यः। उत्तमः पार्वतीमन्दहासः ज्ञदृश्यः सूरिभिर्ज्ञेयः ॥११॥

**आलोकमात्रतो यः शङ्करमसमास्त्रकिङ्करं चक्रे ॥**
**अल्पोऽप्यनल्पकर्मा हासो नः पातु स शिवायाः ॥१२॥**

आलोकेति– यः आलोकमात्रतः दर्शनमात्रेण शङ्करं शिवम् असमास्त्रकिङ्करम् असमानि विषमाणि अस्त्राणि आयुधानि यस्य सः कन्दर्पस्तस्य किङ्करम् वशगं चक्रे विदधे, सः अल्पोऽपि मन्दोऽपि अनल्पकर्मा अनल्पानि

अधिकानि कर्माणि यस्य सः शिवाया देव्याः हासः नः अस्मान् पातु रक्षतु। हासस्य दर्शनादेव शङ्करो मदनवशङ्गतः कृत इति भावः। अल्पोऽपि हासः स्वदर्शनमात्रेण शङ्करं कामकिङ्करं चकारेत्यस्य अनल्पकर्मणोऽसम्भाव्यत्व-वर्णनादसम्भवोऽलङ्कारः ॥१२॥

**स्मरमतरतमीशं यः करोति भावप्रसङ्गचातुर्या ॥**
**द्विजगणपुरस्कृतोऽव्यात् स शिवाहासप्रवक्ता नः ॥१३॥**

स्मरेति– यः भावप्रसङ्गचातुर्या भावस्य रसनिष्पादकस्य रत्यादेर्भावस्य प्रसङ्गे प्रस्तावे विषये चातुर्या चतुरस्य भावः चातुरी कुशलता तया करणेन, एवं हासपक्षे, प्रवक्तृपक्षे तु भावस्याभिप्रायस्य प्रसङ्गे आविष्कारे प्रस्तुते चातुर्या कुशलतया करणेन, ईशं शिवं स्मरमतरतं स्मरमते कामतन्त्रे रतं निरतम् आसक्तमिति यावत् करोति विदधाति, स्मरमतपरम् इति पाठे स्मरमतं परं प्रधानं यस्य तमिति व्याख्येयम्। द्विजगणपुरस्कृतः द्विजगणेन दन्तपङ्क्त्या इत्यर्थः पुरस्कृतः अग्रे स्थापितः एवं हासपक्षे, प्रवक्तृपक्षे तु द्विजगणेन विप्रवृन्देन पुरस्कृतः पुरस्तादग्रगण्यत्वेन पूजितः, स शिवाहास-प्रवक्ता शिवाया देव्या हास एव प्रवक्ता प्रवचनकृत् नः अस्मानव्याद्रक्ष्यात्। रूपकमलङ्कारः, तस्य सावयवत्वं श्लेषोत्थापितम्। भावप्रसङ्गचातुर्येत्यनेन शृङ्गाररसनिष्पादकानाम् आलम्बनोद्दीपनविभावानुभावादिनिष्पाद्यरतिभावस्य कामेश्वरीमन्दहासगर्भत्वं द्योत्यते। द्विजगणपुरस्कृत इत्यनेन दशनानां पृष्ठतः स्थित्या हासस्य पुरस्ताद्विलसितेन दशनानाम् अस्पष्टदर्शनं हासस्य मन्दत्वेऽपि विस्पष्टदर्शनं च गम्ये। हासे प्रवक्तृत्वारोपणात् प्रवचनकार्यं सर्वम् अवाचा हासेनैव निर्वाह्यत इति च विशदम् ॥१३॥

**रदवाससा रथी मां शरी करैः पातु पार्वतीहासः ॥**
**पावकदृशं जिगीषोः पञ्चपृषत्कस्य सेनानीः ॥१४॥**

रदेति– रदवाससा अधरेण रथी रथवान् अधर एव रथो वाहनमस्ये-त्यर्थः। करैः किरणैः शरी बाणवान् स्वांशव एव बाणा अस्य, पावकदृशं ज्वलननेत्रं कन्दर्पशत्रुं जिगीषोः जेतुमिच्छोः पञ्चपृषत्कस्य पञ्चबाणस्य मदनस्य सेनानीः सैनिकाधिपतिः पार्वतीहासः मां पातु रक्षतु। अधर-रथयोः कर-

शराणां च अभेदाध्यवसायात् वैयधिकरण्येन रूपकमलङ्कारः। ज्वलनाक्षस्य भगवतो हरस्य कामेन विजये प्रसञ्जिते भगवत्याः चारुहास एव युद्धसन्नाहं कुर्वन् विजयं निर्वहति। तत्र अधर एव हासं वहति, अधरे ध्रियमाणस्य हासस्य मयूखा एव बाणा भवन्ति। एवं वर्णितो मन्दहासमहिमा सर्वोत्तर-रामणीयकं पुष्णाति ॥१४॥

**शिवहृदयमर्मभेदि स्मितं तदद्रीशवंशमुक्तायाः ॥**
**दशनद्युतिद्विगुणित- श्रीकं शोकं धुनोतु मम ॥१५॥**

शिवेति– शिवहृदयमर्मभेदि शिवहृदयस्य अत्यन्तगाढस्य महेश्वरहृदयस्य मर्म गूढं जीवस्थानं भेत्तुं भङ्क्तुं शीलमस्येति शिवहृदयमर्मभेदि दशनानां दन्तानां द्युतिभिः कान्तिभिः द्विगुणिता द्वाभ्यां गुणिता श्रीः शोभा यस्य तत् दशनद्युति-द्विगुणितश्रीकम् अद्रीशस्य हिमवतः वंशस्य मुक्तायाः मौक्तिकमणि-भूतायाः (वंशः कुलं वेणुश्च, मुक्ता च तत्फलं बोध्यम्) तत्प्रक्रान्तं स्मितं मन्दहसितं मम शोकं दुःखं धुनोतु अपनयतु। शिवहृदयमपि गाहमानं भग-वतीस्मितम् अस्मदादीनां हृदयं प्रविश्य तद्गतं शोकमपनेतुं किमु न शक्तम्? ॥१५॥

**ब्रह्माण्डरङ्गभाजो नटयाः शिवसूत्रधारसहचर्याः ॥**
**श्रीवर्धनोऽनुलेपो मुखस्य हासः पुनात्वस्मान् ॥१६॥**

ब्रह्माण्डेति– ब्रह्माण्डमेव रङ्गो नाटयस्थलं तं भजत इति ब्रह्माण्डरङ्ग-भाक् तस्याः, शिव एव सूत्रधारः भरताचार्यो नटः तस्य सहचरी सखी तस्याः नटयाः, श्रीवर्धनः शोभाप्रकर्षकः अनुलेपः लेपनद्रव्यमित्यर्थः, मुखस्य वदनस्य हासः अस्मान् पुनातु पवित्रान् करोतु। ब्रह्माण्डं रङ्गस्थलं तत्र शिवः सूत्र-धारः, शिवा तत्सहचरी नटी, शिवामुखहासः नटीमुखशोभावर्धनलेपविशेषः इत्ययं विवेकः। नटयाः मुखं शोभावहेन चूर्णविशेषेण लिप्तं, शिवायाश्च हासेन भ्राजितम्। सावयवं रूपकमलङ्कारः ॥१६॥

**अधरप्रवालशयने नासाभरणप्रभाविलासिन्या ॥**
**रममाणो हररमणी- हासयुवा हरतु नः शोकम् ॥१७॥**

अधरेति– अधरप्रवालशयने अधरः प्रवालं पल्लवमिव अधरप्रवालं पूर्वपदार्थप्राधान्यादुपमितसमासः अधरप्रवालकल्पितं शयनम् अधरप्रवालशयनं तस्मिन् मध्यमपदलोपी समासः, नासाभरणप्रभाविलासिन्या नासाभरणस्य नासिकाभूषणस्य प्रभा सैव विलासिनी विलासवती अङ्गना तया रममाणः रति कुर्वाणः हररमण्याः पार्वत्याः हास एव युवा नोऽस्माकं शोकं हरतु दुःखापहो भवतु। नासाभरणप्रभायाः विलासिनीत्वं हासस्य युवत्वं चेत्युभयोः स्त्रीपुंसयोः अधरशयने अन्योन्यसङ्क्रान्तिलक्षणा रतिर्लोकोत्तरशोभावहेति वस्तु रूपकेणालङ्कारेण व्यज्यते। ॥१७॥

**अधरोष्ठवेदिकायां　　नासाभरणांशुशावकैः साकम् ॥**
**कुलमखिलमवतु खेलन्नद्रिसुताहासबालो नः ॥१८॥**

अधरोष्ठेति– अधरः अधः स्थित ओष्ठः दशनच्छदः स एव वेदिका वितर्दिः तस्याम् अधरोष्ठवेदिकायां नासाभरणांशुशावकैः नासाभरणांशव एव शावकाः तैः नासिकाभूषणकिरणशिशुभिः इत्यर्थः, साकं सह खेलन् क्रीडन् अद्रिसुतायाः हैमवत्याः हास एव बालः नः अस्माकम् अखिलं सकलं कुलम् अवतु रक्षतु। सामान्यतः प्रतिगृहं गृहद्वाराद्बहिः किञ्चिदुन्नता कुट्टिमा भूमिर्निर्मीयते। सा वेदिका उच्यते, बालानां च क्रीडास्थलं भवति। अत्र रूपके, इमानि विविच्य बोध्यानि। उमाहासो बालः नासाभरणांशवः शावकाः क्रीडार्थमागता अन्ये शिशवः। अधरोष्ठ एव क्रीडास्थलं वेदिका। शिशुभ्योऽपि बालोऽधिकः, अधरे भूषणांशुभिः सह मिलन् यथेच्छं विलसन्नपि हासस्य उत्तरा शोभेति रूपकेण वस्तुध्वनिः ॥१८॥

**अनुलेपनस्य वीप्सा　　द्विर्भावः कुचतटीदुकूलस्य ॥**
**हरतु हृदयव्यथां मे　　हसितं हरजीवितेश्वर्याः ॥१९॥**

अनुलेपनस्येति– अनुलेपनस्य श्रीखण्डादिश्रीवर्धनलेपनस्य वीप्सा द्विरुक्तिः, कुचतटीदुकूलस्य वक्षोजवसनस्योत्तरीयस्येति यावत्, द्विर्भावः द्विरावृत्तिः द्विगुणसत्तेति यावत् हरजीवितेश्वर्याः सर्वेश्वरप्राणनायिकायाः हसितं स्मितं मे हृदयव्यथां हृदयस्य चित्तस्य व्यथां पीडां हरतु। अनुलेपनस्योपर्यन्यदनुलेपनं हसितम उत्तरीयस्योपर्यन्यदुत्तरीयं हसितमिति शुभ्रत्वसाधर्म्यात् हसिते अनु-

लेपनं कुचतटीदुकूलं चारोपिते। तेनाभेदरूपकम्। शुभ्रस्य स्मितस्य स्वशोभया वदन-वक्षोजौ व्याप्य स्थितस्य सर्वनैर्मल्यसम्पादिका प्रसन्नता हृदयङ्गमत्वेन हृदयव्यथाव्यपोहनाय प्रभवतीति भावः ॥१९॥

**गिरिशाङ्गरागभसितं स्वागतवचसाऽभिनन्ददादरतः ॥**
**गिरिजालीलाहसितं गरीयसीं मे तनोतु धियम् ॥२०॥**

गिरिशेति— गिरिशाङ्गरागभसितं गिरिशस्य शिवस्य अङ्गरागः देहानुलेपनं यद् भसितं भस्म तत् कर्म स्वागतवचसा आगन्तारं प्रति 'एतु भवान्, विजयताम्' इत्यर्थक वचनं स्वागतवचनं, तेन आदरतः आदरात् अभिनन्दत् अनुमोदमानं गिरिजालीलाहसितं गिरिजायाः पार्वत्याः लीलया विलासपूर्वयेत्यर्थः हसितं स्मितं मे मम गरीयसीं श्रेयसी धियं तनोतु विस्तृणोतु विस्तीर्णं करोत्विति यावत्। भर्तुर्भगवतः शिवस्य भस्मोद्धूलिताङ्गधवलिमानं वीक्ष्य शुभ्रः पार्वतीहासोऽपि स्वेन धवलिम्ना तस्य संवादात् तत्रादरं दर्शयतीति वस्तुनोपमाध्वनिः ॥२०॥

**दयितेन सँल्लपन्त्याः सह तुहिनमरीचिशिशुकिरीटेन ॥**
**वागमृतबुद्बुदोऽव्या- दलसो मामगभुवो हासः ॥२१॥**

दयितेनेति— दयितेन प्रियेण शिशुः बालः तुहिनमरीचिर्हिमांशुः तुहिनमरीचिशिशुः मयूरव्यंसकादिवत्समासः बालचन्द्र इति यावत् तेन किरीटिना चन्द्रचूडेन शिवेन सह सँल्लपन्त्याः प्रियं भाषमाणायाः अगभुवः पर्वतभुवो देव्याः वागमृतबुद्बुदः वागेव अमृतं वाचि अमृतं वा तस्य बुद्बुदः अलसो मन्दो हासः माम् अव्यात् रक्ष्यात्। कान्तेन चन्द्रचूडेन प्रियं सम्भाषमाणायाः देव्याः वाचो निर्गतः हासः अमृतबुद्बुद एवेति अभेदाध्यवसायाद्रूपकम्। अमृतस्य बुद्बुदाकाराः दृश्यन्ते बुद्बुदार्थसामर्थ्यात्सँल्लापादवियोज्यो मथनादेव हास आक्षिप्यते। यथा बुद्बुदस्य स्पष्टं दृश्यमानत्वेऽपि मथ्यमानममृतमाश्रित्य वर्तनं, तथा सँल्लापसमकालनिर्गतो मन्दहासः सँल्लापश्लिष्ट इति बोध्यम् ॥२१॥

**शुद्धः कुचाद्रिनिलया- दपि मुक्ताहारतो हरपुरन्ध्रयाः ॥**
**वदनश्रीप्रासादे विलसन् हासोऽलसोऽवतु माम् ॥२२॥**

शुद्ध इति— हरपुरन्ध्रयाः पार्वत्याः कुचावेव अद्रिः गिरिः स निलयः आवासः यस्य तस्मात् मुक्ताहारतः पञ्चम्यास्तसिल् मौक्तिकहारतोऽपि शुद्धः स्वच्छः वदनश्रीप्रासादे वदनश्रियः वदनलक्ष्म्याः प्रासादे मन्दिरे, यद्वा श्रियः लक्ष्म्याः प्रासादः आलयः पद्ममिति यावत् वदनमेव श्रीप्रासादः पद्मं तस्मिन् विलसन् विलासं कुर्वन् अलसो हासो मन्दहासो माम् अवतु रक्षतु। अद्रे-रुपरिष्टात् स्थितः प्रासादः पुष्णात्यसाधारणं रामणीयकम्। तत्र विलसतो लावण्यातिशयं प्रति किमु वक्तव्यम्? वक्षोजगतमुक्ताहारादपि गरीयान् शुभ्रया शोभया गौरीवदनाम्बुजहास इति भावः ॥२२॥

**व्यर्थीभूते चूते गतवति परिभूतिमसितजलजाते ॥**
**अनिते सिद्धिमशोके कमलेऽपि गलज्जयश्रीके ॥२३॥**

व्यर्थीति— चूते रसाले कामस्य पञ्चसु बाणेषु एकस्मिन् व्यर्थीभूते अव्यर्थे व्यर्थे सम्पद्यमाने भूते विफले जाते सतीति यावत्, असितजलजाते नीलोत्पले बाणे परिभूति गतवति तिरस्क्रियां प्राप्ते सति, अशोके अन्यस्मि-न्नपि बाणपुष्पे सिद्धिम् लक्ष्यभेदरूपां सिद्धिम् अनिते अप्राप्ते, कमलेऽपि बाणे गलज्जयश्रीके गलन्ती विगलन्ती जयश्रीः विजयलक्ष्मीः यस्मात् तस्मिन् सति, उत्तरश्लोकेन सम्बन्धः ॥२३॥

**बहुधा बिभेद हृदयं हरस्य बाणेन येन सुमबाणः ॥**
**तदुमालीलाहसितं मल्लीसुममस्तु मे भूत्यै ॥२४॥**

बहुधेति — येन बाणेन सुमबाणः पुष्पबाणः कामः हरस्य हृदयं लक्ष्यं बहुधा बिभेद भिन्नवान् तदुमालीलाहसितम् मल्लीसुमं मल्लीपुष्पं मम भूत्यै विभूत्यै ऐश्वर्यायेति यावत्, अस्तु। येन बाणेनेति पुँल्लिङ्गेन यच्छब्देन परामृष्टस्य तत्पदस्य नपुसकलिङ्गं तु उमालीलाहसितस्य विधेयत्वात्, विधे-यस्य च प्राधान्यात् युक्तम्। कामस्य चूतादिषु चतुर्षु बाणपुष्पेषु हरहृदय-

भेदने विफलेषु जातेषु उमाहसितमेव पञ्चमस्य मल्लीसुमस्य बाणस्य कार्यं निरवाहयदिति कविप्रौढोक्तिः। पञ्चानामपि पुष्पाणां मल्लीकुसुमस्यैव अल्पाकारत्व-शुभ्रत्वाभ्यां मन्देन शुभ्रेण चोमाहसितेनाभेदाध्यवसायो युक्तः ॥२४॥

**अमलदरस्मितचिह्ना- स्ता एताः सर्वमङ्गला आर्याः ॥**
**कमनीयतमास्वसमा- मुपतिष्ठन्तामुमां देवीम् ॥२५॥**

अमलेति— अमलदरस्मितचिह्नाः अमलं शुद्धं दरस्मितं मन्दहसितं चिह्नं लक्षणं यासां ताः, सर्वमङ्गलाः सर्वत्र स्तबकश्लोकेषु मङ्गलं कल्याणं यासु ताः स्तबके प्रक्रान्ता एताः आर्या आर्यावृत्तनिबद्धाः स्तुतयः कमनीयतमासु रुचिरतमासु असमाम् अद्वितीयां देवीम् उमाम् उपतिष्ठन्ताम् उपासताम्। स्तबके प्रतिश्लोकं मन्दस्मितस्यैव प्रसक्तेः मन्दस्मितं लिङ्गम् आसामार्याणाम्। सर्वत्र माङ्गल्याशासनादेता आर्याः सर्वमङ्गलाः। एवम् आर्याभिरुमोपस्थानमारचय्योपसंहृतः तृतीयशतके प्रथमः स्तबकः समाप्तः ॥२५॥

नवमः स्तबकः सव्याख्यः समाप्तः ॥

# दशमः स्तबकः

अथ दशमः स्तबको भगवत्याः केशादिपादान्तस्तुतिपरः सङ्क्षालनायेत्यादिना आरभ्यते ॥

**सङ्क्षालनाय हरितां विभूतये लोकत्रयस्य मदनाय धूर्जटेः ॥**
**कात्यायनीवदनतः शनैः शनैर्निर्यन्ति शुभ्रहसितानि पान्तु नः ॥१॥**

सङ्क्षालनायेति— हरितां दिशां सङ्क्षालनाय विमलीकरणाय, लोकत्रयस्य त्रिभुवनस्य विभूतये ऐश्वर्याय, धूर्जटेः हरस्य मदनाय कामाय, कात्यायनीवदनतः कात्यायन्याः दुर्गायाः वदनतः मुखात् शनैः शनैः मन्दं मन्दं निर्यन्ति निर्गच्छन्ति, निरुपसर्गाद् गत्यर्थकाद् अदादेः इधातोः शतरि परे निर्यदिति रूपम्, तस्य नपुंसकप्रथमाबहुवचनान्तं निर्यन्ति, शुभ्रहसितानि नः पान्तु रक्षन्तु। जगन्नैर्मल्यैश्वर्य-शिवसाहचर्यसम्पादकानि भगवतीमन्दहसितान्यस्मद्रक्षकत्वेन स्तुतानि। अत्र हरितां सङ्क्षालनायेत्यादिना हेतुमता हेतोः शुभ्रहसितानां वर्णनात् हेतुरलङ्कारः। तथा चोक्तं चन्द्रालोके 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते। असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम्' इति। अथ च शुभ्रहसितानां हरित्सङ्क्षालन-लोकत्रयविभूति-धूर्जटिमदनार्थकत्वेन बहुधोल्लेखनादुल्लेखालङ्कारः। तिलतण्डुलन्यायेन स्फुटावगम्यभेदालङ्कारयोः हेतूल्लेखयोर्मेलनात् उभयोः संसृष्टिः ॥१॥

**स्वल्पोऽपि दिक्षु किरणान्प्रसारयन् मन्दोऽपि बोधममलं दधत्सताम् ॥**
**शुभ्रोऽपि रागकृदनङ्गवैरिणो हासः पुराणसुदृशः पुनातु नः ॥२॥**

स्वल्पोऽपीति— स्वल्पोऽपि सुतरामल्पो लघुरपि दिक्षु सर्वासु किरणान् अंशून् प्रसारयन प्रसृतान् कुर्वन् मन्दोऽपि अलसोऽपि सतां सज्जनानाम् अमलं शुद्धं बोधं दधत् धारयमाणः, शुभ्रोऽपि धवलोऽपि अनङ्गवैरिणः कामशत्रोः शिवस्य रागकृत् शोणवर्णकारः, पुराणसुदृशः पुराणी पुरातनी सुदृक् सुन्दरी तस्या उमायाः हासः नः पुनातु विशुद्धान् करोत्वित्यर्थः। स्वल्पस्य हासस्य सर्वत्र प्रसारणे विरोधः, तस्य स्वाभाविकत्वेन विरोधपरिहारः। मन्दस्य

सद्बोधधाने विरोधः। अत्रापि भगवतीहासस्य स्वाभाविकत्वेन परिहारः। शुभ्रो रागकृद्रञ्जक इति विरोधः, अनुरागकृदिति श्लेषमूलको विरोधाभासः। सर्वत्र विरोधाभासोऽलङ्कारः ॥२॥

**चेतोहरोऽप्यतिजुगुप्सितो भवेत् सर्वोऽपि जीवकलया यया विना ॥**
**सा वर्ण्यतां कथमपारचारुता- पीयूषसिन्धुरखिलेन्द्रसुन्दरी ॥३॥**

चेतोहर इति— यया जीवकलया विना जीवधात्री जीवनाधायिनी कला सुषमा तया विना जीवनाधानसुषमां वर्जयित्वेति यावत् 'जीवो बृहस्पतिप्राण-जीवनात्मखगेषु वा' इति नानार्थरत्नमाला। कला चागमसिद्धायां विद्यायां च वर्तते। 'अंशमात्रे मूलवृद्धौ सुषमा-विद्ययोस्तथा' इति त्रिकाण्डशेषः। इह कलाशब्देन सुषमाग्रहणमेव रमणीयम्, अखिलेन्द्रसुन्दरीविशेषणानुरूप्यात्। चेतोहरोऽपि मनोहरोऽपि सर्वोऽपि लोकः अतिजुगुप्सितो भवेत् जुगुप्सावहो भवेत्। अपारचारुतापीयूषसिन्धुः चारुता सुषमैव पीयूषममृतं तन्मयः सिन्धुः सागरः चारुतापीयूषसिन्धुः अपारोऽनवधिः चारुतापीयूषसिन्धुः अनवधिसौन्दर्यामृतराशिः सा अखिलेन्द्रसुन्दरी अखिलेन्द्रस्य सर्वेश्वरस्य सुन्दरी देवी कथं वर्ण्यतां, कथं तादृशी भगवती वर्णनविषयता गच्छेत्? नेति भाव.। अव्यय-लावण्यामृतराशिर्भगवत्येव सा जीवनशोभा यामन्तरेण बीभत्सरसावहो भवति सर्वोऽपि लोकः। यस्यां मूलकलायां चारुतायां सत्यां जीवनस्य सम्भवः; सत्येव जीवने अन्यानि अङ्गानि रमणीयानि भासन्ते। तस्मात् सर्वेषाम् अङ्ग-सौन्दर्याणां मूलम् अङ्गिनः सौन्दर्यं, तच्च जीवकलेति बोध्यम्। शरीरात् अपेते मूलसौन्दर्ये मृतस्य शरीरस्य अङ्गानां सौन्दर्याणि कथं कस्मै वा रोचेरन्? वैरस्यं एव जनयेयुः। जीवकलासम्पन्न एव अङ्गिनि अङ्गानां सारस्यं सम्पद्यते। अङ्गानां अङ्गिना जीवकलावता संवादादेव तेषां प्रत्येकं साकल्येन च रामणीयकनिष्पत्तिरिति बोध्यम्। सर्वं मृतमसुन्दरमेव विरसम्। सम-रसं सरसं च सौन्दर्यं जीवनभूतममृतं, यदखिलेन्द्रसुन्दरीस्वरूपमिति दिक् ॥३॥

अत्र स्तबके भगवत्याः केशादिपादान्तां स्तुतिमारभमाणः सर्वसौन्दर्यमूल-कलां तां वस्तुतो वर्णयितुं न कोऽपि प्रभुरिति उपक्रमं कुरुते ॥

**अत्यल्पदेववनितां च पार्थिवै- र्भावैर्वयं तुलयितुं न शक्नुमः ॥**
**तां किं पुनः सकलदेवसुन्दरी- लोकाक्षिपारणतनुप्रभामुमाम् ॥४॥**

अत्यल्पेति— अत्यल्पदेववनिताम् अत्यल्पां सामान्यां देववनितां देवाङ्गनां च गन्धर्वादिसाधारणसुरसुन्दरीम् अपि पार्थिवैः पृथिव्या इमे पार्थिवाः भौमाः तैर्भावैः पदार्थैः भूलोकगतरमणीयवस्तुभिरित्यर्थः तुलयितुं समीकर्तुं न शक्नुमः न प्रभवामो वयं मानुषाः कवयः। तां प्रक्रान्तां सकलस्य देवसुन्दरीलोकस्य अक्ष्णां पारणं व्रतान्तभोजनम् सन्तर्पणमिति यावत् तनुप्रभा शरीरशोभा यस्याः तां सकलदेवसुन्दरीलोकाक्षिपारणतनुप्रभाम् उमां देवीं किं पुनः तुलयितुं शक्नुमः? नैव शक्नुमः इत्यर्थापत्तिः। सामान्यसुरसुन्दरीवर्णनेऽप्यशक्तानां भूस्थानां सकलसुरसुन्दरीनयनामृतायमानदेहकान्तिं भगवतीम् ईदृशीति वर्णयितुं कुतः शक्तिः? ॥४॥

**वर्षापयोदपटलस्य सान्द्रता सूर्यात्मजोर्मिचयनिम्नतुङ्गता ॥**
**कालाहिभूमिपतिदीर्घता च ते केशेषु भर्गभवनेश्वरि त्रयम् ॥५॥**

वर्षेति— वर्षापयोदपटलस्य वर्षासु प्रावृट्काले पयोदानां मेघानां पटलस्य समूहस्य सान्द्रता निबिडता, सूर्यात्मजोर्मिचयनिम्नतुङ्गता सूर्यात्मजाया यमुनाया ऊर्मिचयस्य तरङ्गपटलस्य निम्न-तुङ्गता उन्नतानतता भङ्गिमत्तेति यावत्, कालाहिभूमिपतिदीर्घता कालः कृष्णः अहिभूमिपतिः सर्पराजः नागराज इत्यर्थः तस्य दीर्घता आयतता, त्रयम् उक्तवैशिष्ट्या सान्द्रता निम्न-तुङ्गता दीर्घता चेत्येतत्त्रयं, भर्गभवनेश्वरि हरगृहिणि देवि, ते तव केशेषु वर्तत इति क्रियापदमध्याहार्यम्। प्रावृषेण्यपयोदपटले सान्द्रतामात्रं यमुनावीचिषु निम्न-तुङ्गतैव, शेषे च दीर्घतैव, त्रयोप्येते उपमानधर्माः कचेषु भगवत्याः। एवं बह्वनाम् उपमानधर्माणाम् एकत्र केशेषु समावेशान्मालोपमा, 'मालोपमा यदेकस्योपमानं बहु दृश्यते' इति साहित्यदर्पणे तल्लक्षणोक्तेः। ॥५॥

**ईशानसुन्दरि तवास्यमण्डला- न्नीचैर्नितान्तममृतांशुमण्डलम् ॥**
**को वा न कीर्तयति लोष्टपिण्डकं लोके निकृष्टमिह मानवीमुखात् ॥६॥**

ईशानेति— ईशानसुन्दरि! ईश्वरकान्ते तव आस्यमण्डलात् मुखबिम्बात् अमृतांशुमण्डलं चन्द्रबिम्बं नितान्तमत्यन्तं नीचैः अधो निकृष्टमिति यावत्। इह लोके मानवीमुखात् मानुषीवदनात् लोष्टपिण्डकं मृत्पिण्डं निकृष्टम् अधमं विधेयविशेषणं को वा न कीर्तयति? सर्वेऽपि मानुषीमुखान्निकृष्टमेव

मृत्पिण्डं कथयेयुः, जीवन्त्याः सुन्दर्या मुखस्य जडस्य मृत्पिण्डस्य च यावदन्तरं भवति तावद्वक्तव्यम् उमास्यमण्डलेन्दुमण्डलयोरिति भावः । अत्रास्यमण्डल-चन्द्रमण्डलयोर्बिम्बयोः मानवीमुखलोष्टपिण्डकगतप्रतिबिम्बभावेन दृष्टान्तोऽलङ्कारः । तेन प्रकृतस्य समर्थनीयस्य चन्द्रमण्डलनिकृष्टत्वस्य समर्थनात अर्थान्तरन्यासः । प्रकृतार्थसमर्थनस्य अर्थान्तरन्यासस्य प्राधान्यात्तदुपयोगी दृष्टान्तश्चाङ्गम् । एवं दृष्टान्तार्थान्तरन्यासयोरङ्गाङ्गिभावेन सङ्करः ॥६॥

**बिभ्रत्यमर्त्यभुवनस्थदीर्घिका- पङ्केरुहाणि वदनाय ते बलिम् ॥**
**नो चेत्कथं भवति सौरभं मह- द्भिन्ने सुमेभ्य उरुकेशि ते मुखे ॥७॥**

बिभ्रतीति — उरुकेशि ! उरवः पृथुलाः केशाः यस्याः तस्याः सम्बुद्धिः, अमर्त्यभुवनस्थदीर्घिकापङ्केरुहाणि अमर्त्यभुवनस्थानां स्वर्गलोकस्थानां दीर्घिकाणां वापीनां पङ्केरुहाणि जलजानि ते तव वदनाय वदनकृते बलिम् उपहारं 'करोपहारयोः पुंसि बलिः' इत्यमरः । बिभ्रति धारयन्ते । नो चेत् एवं न चेत्, सुमेभ्यः पुष्पेभ्यः भिन्ने इतरस्मिन् ते तव मुखे वक्त्रे महत् सौरभं सौगन्ध्यं कथं भवति ? तव मुखं पुष्पं न भवति, तथाऽपि पुष्पसौरभं तत्र वर्तते, तस्य हेतुर्वर्तेत । सुरलोकवापीवारिजातानि आत्मानं तव बलित्वेनार्पयन्ति । अत एवेदृशं महत्सौरभम् अपुष्पस्य त्वन्मुखस्येति हेतुत्वसम्भावनया गम्या हेतूत्प्रेक्षा ॥७॥

**गीर्वाणलोकतटिनीजलेरुहां गन्धे शुभे भवतु ते मनोरतिः ॥**
**लोकाधिराज्ञि तव वक्त्रसौरभे लोकाधिराजमनसस्तु सम्मदः ॥८॥**

गीर्वाणेति— लोकाधिराज्ञि ! विश्वेश्वरि, गीर्वाणलोकतटिनीजलेरुहां गीर्वाणलोकस्य देवलोकस्य तटिन्याः नद्याः जलेरुहां पद्मानां शुभे शोभने गन्धे परिमले ते तव मनोरतिः भवतु चित्तं रमतामिति यावत् । लोकाधिराजमनसः लोकाधिराजस्य विश्वेश्वरस्य तव कान्तस्य मनसश्चित्तस्य सम्मदः प्रीतिस्तु तव वक्त्रसौरभे वदनपरिमले । तथाविधं सकलमनोहरसुरलोकसुमनस्सौभाग्यातिशायी लोकाधिराजमनस्सम्मादको मुखगन्ध उत्तमायाः पद्मिन्यास्तवेति भावः ॥८॥

**को भाषतां तव सवित्रि चारुतां यस्याः स्मितस्य धवलद्युतिर्लवः ॥**
**यस्याः शरीररुचिसिन्धुवीचयः शम्पालताः पृथुलदीप्तिभूमयः ॥९॥**

क इति– सवित्रि ! जननि, तव चारुतां रुचिरतां को भाषतां को वा वर्णयतु ? न कोऽपीत्यर्थः। तत्र चारुताभाषणाशक्तौ हेतुमाह। यस्यास्तव स्मितस्य लवः लेशः धवलद्युतिश्चन्द्रः, यस्यास्तव शरीररुचिसिन्धुवीचयः शरीररुचयः देहप्रभा एव सिन्धुस्तटिनी तस्याः वीचयस्तरङ्गा इव पृथुलदीप्तिभूमयः पृथुला विपुला दीप्तिभूमयः द्युतिप्रदेशाः यासां ताः शम्पालताः विद्युल्लताः भवन्तीति शेषः। भगवत्याः मन्दस्मितलेश एव चन्द्रः, तरङ्गिणीभङ्गोपमदेहप्रभा एव विपुलप्रकाशदेशाः विद्युल्लता इति उभयत्र स्मितचन्द्रयोः देहरुचि-विद्युल्लतानां च तादात्म्याध्यवसायाद्रूपकमलङ्कारः। भगवत्याः स्मितलेशस्येन्दुरूपत्वात् शरीररुचीनां विद्युद्रूपत्वाच्च भगवत्याः ब्रह्माण्डशरीरत्वं व्यज्यते। तथा चोक्तं शिवशतके– 'बिम्बं मेचकतोयजातसुहृदो मन्दस्मितं सुन्दरम्' इति। शरीरप्रभैव विद्युत्, विद्युदेव शरीरं देव्या इति चेह ग्रन्थे अन्यत्र, इन्द्राणीसप्तशत्यां च द्रष्टव्यम् ॥९॥

**लोकाम्बिके न विलसन्ति के पुरो मन्दस्मितस्य तव रोचिषां निधेः ॥**
**ये तु व्यधायिषत तेन पृष्ठतो हन्तैषु काऽपि तिमिरच्छटा भवेत् ॥१०॥**

लोकाम्बिके इति– लोकाम्बिके ! जगन्मातः रोचिषां निधेः सर्वासां त्विषाम् आकरस्य तव मन्दस्मितस्य पुरः पुरस्तात् के वा न विलसन्ति, तव मन्दस्मितप्रकाशे सर्वेऽपि प्रकाशा भवन्ति। ये तु तेन मन्दस्मितेन पृष्ठतः व्यधायिषत पश्चान्निहिताः अधःकृता इति भावः, व्यधायिषत, विपूर्वकस्य दधातेः कर्मणि लुङि प्रथमपुरुषबहुवचनान्तं रूपम्। एषु तेषु काऽपि एवंलक्षणेति वक्तुमशक्या तिमिरच्छटा तिमिरस्य तमसश्छटा परम्परा भवेत्। हन्त खेदे, पापम्। सर्वतेजोनिधेः स्मितस्य पुरः स्थिताः तेजस्विनो भवेयुः। तेन पृष्ठतः कृतेषु कृतवासा काऽपि तमःपरम्परेति भावः। अनेन निग्रहानुग्रहप्रभावातिशयसम्पन्नं मन्दस्मितमिति भावः ॥१०॥

**किं वा रदावलिरुचिर्मुखस्य किं सम्फुल्लता वरधियः किमूर्मिका ॥**
**सन्तोषपादपसुमं नु शङ्कर- प्रेमस्वरूपमुत देवि ते स्मितम् ॥११॥**

किं वेति– देवि ते तव स्मितं रदावलिरुचिः दन्तपङ्क्तिप्रभा वा किं? मुखस्य वदनस्य सम्फुल्लता विकासिता किम्? वरधियः प्रशस्तप्रज्ञायाः ऊर्मिका ऊर्मिरेव ऊर्मिका वीचिः किम्? 'अङ्गुलीयकमूर्मिका' इति अङ्गुलीयक-पर्यायतया गृहीते बुद्धेः अङ्गुलीयकमिति भावस्यासङ्गतिरचमत्कारिता च। सन्तोषपादपसुमं सन्तोष एव पादपो वृक्षस्तस्य सुमं पुष्पं नु वितर्के। उत अथवा शङ्करप्रेमस्वरूपं शङ्करस्य प्रेम्णस्त्वद्गतस्य स्वरूपं स्वभावो वेति वितर्कः। रदावलिरुच्यादिभिश्चतुर्धा स्मितस्य वितर्क्यमाणत्वात् सन्देहा-लङ्कारः, 'सादृश्यमूला भासमानविरोधका समबला नानाकोटचवगाहिनी धी-रमणीया ससन्देहालङ्कृतिः' इति पण्डितराजः ॥११॥

**दिक्षु प्रकाशपटलं वितन्वता कोटिप्रभाकरविभक्ततेजसा ॥**
**नेत्रेण ते विषमनेत्रवल्लभे पङ्केरुहं क उपमाति पण्डितः ॥१२॥**

दिक्ष्विति– विषमनेत्रवल्लभे! त्रिनेत्रकान्ते पार्वति, दिक्षु प्रकाशपटलं प्रकाशसमूहं वितन्वता विस्तृण्वता कोटिप्रभाकरविभक्ततेजसा कोटिः प्रभाकराः सूर्याः तैर्विभक्तं स्वभागत्वेन प्राप्तं तेजो यस्य तेन ते तव नेत्रेण लोचनेन पङ्केरुहं पङ्कजातं कमलं कः पण्डितो बुधः उपमाति समीकरोति? सर्व-दिग्व्यापिप्रसारं कोटिसूर्येभ्यो विभज्य दत्तस्वतेजोभागं त्वन्नेत्रं क्व? पङ्क-जातं पद्मं क्व? को वा विबुधस्तथाविधेन त्वन्नेत्रेण पङ्कजं तुलयति? न कोऽपीत्यर्थः। विषमालङ्कारः 'विषमं वर्ण्यते यत्र घटनाऽननुरूपयोः' इति तल्लक्षणात् ॥१२॥

**श्रीकर्ण एष तव लोचनाञ्चले भान्त्या दयादयितया प्रबोधितः ॥**
**एतं सवित्रि मम कञ्चन स्तवं श्रुत्वा तनोतु भरतावनेः श्रियम् ॥१३॥**

श्रीकर्ण इति– सवित्रि! मातः एष तव श्रीकर्णः, नामाख्यानात्पूर्वं श्री-शब्दो माननार्थं प्रयुज्यते श्रोत्रमिति यावत्, 'श्रोत्रं सम्पत्' इति श्रुतेः, श्रीरेव कर्णः श्रीकर्णः लोचनाञ्चले नेत्रप्रान्ते कटाक्ष इत्यर्थः, भान्त्या शोभमानया दयादयितया दया अनुकम्पा दयिता प्रियेव तया प्रबोधितः त्याजितनिद्रः सन् एतं मम कञ्चन स्तवं स्तोत्रविशेषं श्रुत्वा आकर्ण्य भरतावनेः भारतानाम् अवनेः भूमेः भरतखण्डस्येति यावत्, श्रियं तनोतु विदधात्वित्यर्थः। अत्र

श्रीयुतः कर्णः श्रीकर्ण इति च विग्रहीतुं शक्यम्। तर्हि श्रीकर्णस्य भारत-श्रीतननं युक्तम्। अत्रेदमवधेयम्। कविकृतिषु पद्येषु केषुचित्खिलेषु इदं पद्यं दृश्यते– 'नेत्रादपि ते श्रोत्रं सुमशरशत्रोः पुरन्ध्रि मुख्यं नः। श्रोत्रे स्तोत्राद्विमुखे नेत्रं नतगात्रि किं कुरुताम्' इति। अत एव कटाक्षस्थया दयादयितया कर्णः प्रबोधितः स्तवमाकर्णयत्वित्युक्तम्। आकर्णनमात्रेण तस्य श्रीमयत्वात् भरतावनिश्रीतननं सुकरम्॥१३॥

**स्वा नासिका भवति युञ्जतां सतां संस्तम्भिनी चलतमस्य चक्षुषः॥**
**त्वन्नासिका पुरहरस्य चक्षुषः संस्तम्भिनी भवति चित्रमम्बिके॥१४॥**

स्वेति– अम्बिके! युञ्जतां योगसाधनं कुर्वतां सतां जनानां स्वा स्वीया नासिका नासा चलतमस्य चञ्चलतमस्य चक्षुषः नयनस्य संस्तम्भिनी स्थैर्य-धात्री भवति। नासाग्रे दृष्टिं निधाय ध्यायतो योगिनः निमेषोन्मेषवर्जितं भवतीक्षणमिति योगिनां मतम्। तस्माद्योगिनः नासा स्वचक्षुस्संयमाय भवति। तव तु नासा अन्यस्य चक्षुषः स्तम्भनाय इत्युत्तरार्धेनाह। त्व-न्नासिका तव नासा तु पुरहरस्य शिवस्य चक्षुषः संस्तम्भिनी भवति चित्रमाश्चर्यमेतत्। भगवतीनासाग्ररामणीयकनिमग्ना हरस्य दृष्टिरिति भावः। अत्र कार्यस्य पुरहरचक्षुस्संस्तम्भनस्य तद्धेतोः अम्बिकानासिकायाश्च भिन्न-देशत्वादसङ्गतिः अलङ्कारः। 'विरुद्धं भिन्नदेशत्वं कार्य-हेत्वोरसङ्गतिः' इति तल्लक्षणात्॥१४॥

**बिम्बप्रवालनवपल्लवादितः पीयूषसारभरणाद् गुणाधिकः॥**
**गोत्रस्य पुत्रि शिवचित्तरञ्जकः श्रेष्ठो नितान्तमधराधरोऽपि ते॥१५॥**

बिम्बेति– गोत्रस्य पर्वतस्य पुत्रि! देवि बिम्बप्रवालनवपल्लवादितः बिम्बं रक्तं बिम्बिकाफलं प्रवालः रक्तो रत्नविशेषः नवपल्लवः रक्तो नव-किसलयश्च आदिः प्रथमः अस्येति बिम्बप्रवालनवपल्लवादिः तद्गुणसंविज्ञानो बहुव्रीहिः तस्मात् पञ्चम्यास्तसिल्, पीयूषसारभरणात् अमृतरसभरत्वाद्धेतोः गुणाधिकः गुणेनामृतधरत्वगुणेनाधिकः गरीयान् अत एव शिवचित्तरञ्जकः हरहृदयस्य रञ्जकः सन्तोषणः रागस्य जनको वा अधराधरोऽपि अधरः नीचैस्तनः अधरोऽधरोष्ठोऽपि नितान्तम अत्यन्तं श्रेष्ठः। रक्ताद्बिम्बफलादेरपि

अमृतधरत्वाद् गुणाधिकः उपमानोपमेययोः बिम्बाद्यधरयो रक्तिम-मार्दवादिसाधर्म्ये सत्यपि उपमेये पीयूषसारभरणस्य विशेषस्य सत्त्वाद्व्यतिरेकोऽलङ्कारः। अधराधरोऽपि श्रेष्ठः इति विरोधः। शिवचित्तरञ्जकत्वात् श्रेष्ठत्वे विरोधः परिहृत इति विरोधाभासः। व्यतिरेक-विरोधाभासयोरङ्गाङ्गिभावेन सङ्करः ॥१५॥

**दोर्वल्लिके जननि ते तटित्प्रभा- मन्दारमाल्यमृदुतापहारिके ॥**
**निश्शेषबन्धदमनस्य धूर्जटे- र्बन्धाय भद्रचरिते बभूवतुः ॥१६॥**

दोर्वल्लिके इति– जननि, भद्रचरिते भद्रं मङ्गलं चरितं शीलं यस्याः तस्याः सम्बुद्धिः, तटित्प्रभामन्दारमाल्यमृदुतापहारिके अपहरन्त्याविति अपहारिके, तटितो विद्युतः प्रभाया मन्दारमाल्यस्य सुरलोकजस्य मन्दारपुष्पस्य च मृदुतायाः कोमलताया अपहारिके ते तव दोर्वल्लिके वल्ल्यावेव वल्लिके लते, वल्लिके इव दोषौ भुजौ, दोर्वल्लिके। निश्शेषबन्धदमनस्य दमयतीति दमनः निश्शेषबन्धस्य समस्तबन्धस्य दमनस्य सर्वबन्धविनिर्मोचकस्य इत्यर्थः, धूर्जटेः शिवस्य बन्धाय बभूवतुः। विद्युत्प्रभा-मन्दारमाल्याभ्यामपि मृदुलतरे तव भुजलते सर्वबन्धनिवारकस्यापि हरस्य बन्धाय आसतुः इति विरोधः प्रेमकृताय बन्धायेति विरोधाभासः ॥१६॥

**हस्ताब्जयोस्तव मृदुत्वमद्भुतं गृह्णाति ये सदयमेव धूर्जटिः ॥**
**अत्यद्भुतं जननि दार्ढ्यमेतयोः शुम्भादिदर्पविलयो ययोरभूत् ॥१७॥**

हस्ताब्जयोरिति– जननि, तव हस्ताब्जयोः करकमलयोः मृदुत्वं मृदुलता अद्भुतम् आश्चर्यकरम्। ये हस्ताब्जे कर्मणी, धूर्जटिः हरः सदयमेव गृह्णाति, दृढं ग्रहणे हस्तयोः व्यथा स्यादिति भिया अतिमृदुलस्पर्शं तव हस्ताब्जग्राही भगवान्। तथाऽपि एतयोः हस्ताब्जयोर्दार्ढ्यं दृढता अत्युद्भुतं कथम्? ययोः हस्ताब्जयोः शुम्भादिदर्पविलयोऽभूत् शुम्भादीनामसुराणां दर्पो मदस्तस्य विलयो विनाशोऽभूत्। अत्रापि विरोधस्य स्वाभाविकेन हस्ताब्जप्रभावेण परिहारः ॥१७॥

**राजन्तु ते कुचसुधाप्रपायिनो लोकस्य मातरनघाः सहस्रशः ॥**
**एतेषु कश्चन गजाननः कृती गायन्ति यं सकलदायिसत्करम् ॥१८॥**

राजन्त्विति– लोकस्य मातः, जगज्जननि ! कुचसुधाप्रपायिनः कुचयोः सुधा स्तन्यं तत् प्रपिबन्तीति मातृस्तन्यपायिनः इत्यर्थः, अनघाः अपापाः पवित्रा इति यावत् ते जनाः कविबुद्धिस्थाः अत एव यच्छब्दनिरपेक्षस्तच्छब्दः, सहस्रशः सहस्रधा राजन्तु बहवो लोके भ्राजन्तां नामेत्यर्थः। एतेषु कुचसुधाप्रपायिषु कश्चन गजाननः गजमुखः गणपतिरिति यावत्, कृती विद्वान् सुकृती वा धन्य इत्यर्थः। यं सकलदायिसत्करं सकलं दातुं शीलमस्येति सकलदायी सः सत्करः शोभनो हस्तः यस्य तं गायन्ति कीर्तयन्ति विद्वांस इति शेषः। मातृ-स्तन्यपायिनां सर्वेषां धन्यतमो गणपतिः, यस्य हस्ते सर्वदानसामर्थ्यं वर्तत इति भावः। तथाविधः तव कुचसुधाप्रभावः। सकलधायिसत्करमिति पाठो-ऽप्यस्ति। तत्र सकलं धातुं धारयितुं शीलमस्येति ज्ञेयम्। अन्यत् समानम् ॥१८॥

**त्वन्नाभिकूपपतितां दृशं प्रभो- र्नेतुं विनिर्मलगुणे पुनस्तटम् ॥**
**सौम्यत्वदीयहृदयप्रसारितः पाशः सवित्रि तव रोमराजिका ॥१९॥**

त्वन्नाभीति– विनिर्मलगुणे विशिष्टपवित्रगुणे सवित्रि, मातः, त्वन्नाभि-कूपपतितां तव नाभिः एव कूपः अन्धुः तस्मिन् पतितां, प्रभोर्हरस्य दृशं दृष्टि पुनस्तटं तीरं नेतुम् उदञ्च्य प्रापयितु सौम्यत्वदीयहृदयप्रसारितः सौम्येन सुन्दरेण त्वदीयेन तव सम्बन्धिना हृदयेन प्रसारितः पाश एव रज्जुरित्यर्थः, तव रोमराजिका रोमराजिरेव रोमराजिका नाभेः उपरि हृदयावधि गता लोमरेखा भवति। तव हृदयं त्वन्नाभौ सक्तां हरस्य दृष्टिं स्वोन्मुखम् आ-चकर्षेति भावं चमत्कर्तुं नाभौ कूपं, हृदये वक्षोजमध्ये तटं रोमराजौ पाशं च तादात्म्येन सम्भावयति। नाभ्यादौ कूपादितादात्म्यमात्र औचित्यं चेत् रूपक-प्रतिपत्तिर्दुर्निवारा। तस्य तादात्म्यसम्भावनायामौचित्यमुपगम्योत्प्रेक्षायां पर्य-वसानं वाच्यम्। एवं रूपकप्रतीतिस्थलेऽपि उत्प्रेक्षाऽवगन्तव्या। तथैव स-मर्थितं चित्रमीमांसायामप्पय्यदीक्षितैः–'रक्षन्तु त्वाम् असितजलजैरञ्जलिः पाद-मूले मीना नाभीसरसि हृदये कौस्तुभाख्या मुरारेः। हाराः कण्ठे हरिमणि-मया वक्त्रपद्मे द्विरेफाः पिञ्छाचूडश्चिकुरनिकरे घोषयोषित्कटाक्षाः ॥' इति उदाहृतम्। इवादिवाचक-प्रयोगाभावेऽपि अत्यन्तं स्फुटत्वात् वाच्यायमान-त्वात् गम्योत्प्रेक्षा ॥१९॥

**त्वन्मध्यमो गगनलोक एव चे- त्वद्दिव्यवैभवविदो न विस्मयः ॥**
**प्राज्ञैर्हि सुन्दरि पुरत्रयद्विष- स्त्वं देहिनी त्रिभुवनेन गीयसे ॥२०॥**

त्वन्मध्यम इति– पुरत्रयद्विषः त्रिपुरारेर्हरस्य सुन्दरि भगवति ! त्वन्मध्यमः तव मध्यमोऽवलग्नः गगनलोक एव अन्तरिक्षलोक एव चेत्, त्वद्दिव्यवैभवविदः तव दिव्यं वैभवं प्राभवं व्यापकत्वं वा वेत्तीति त्वद्दिव्यवैभववित् तस्य जनस्य न विस्मयः, न आश्चर्यं भवतीति शेषः। तव आकाशमेव मध्यमिति चेत्, नैतदाश्चर्यं विदुषो जनस्य। उत्तमस्त्रीणाम् आकाशमेव मध्यमिति वादः कविसमयोऽत्र चमत्कृतिजनकः। कुतो न विस्मयः ? उत्तरार्धेनाह। हि यस्माद्धेतोः त्वं प्राज्ञैः विद्वद्भिः त्रिभुवनेन त्रयाणां भुवनानां समाहारः तेन त्रैलोक्येन देहिनी देहवती गीयसे कीर्त्यसे, तस्मान्न विस्मय इति सम्बन्धः। त्रिभुवनमेव तव शरीरं, तत्र मध्यमलोकोऽन्तरिक्षलोकस्तव मध्यमोऽवलग्न इति महत् ते वैभवं जानतो जनस्य कुतो विस्मयः ? ॥

अत्र मध्यमस्य गगनलोकतोपन्यासः दुष्करविषयत्वात् समर्थनसापेक्षः। तस्य त्रिभुवनेन देहिनीति त्रिभुवनमध्यान्तरिक्षलोकताव्यवहरणेन समर्थनात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते' इति तल्लक्षणात् ॥२९॥

**नाभिह्लदाद्विगलितः कटीशिला- भङ्गात्पुनः पतति किं द्विधाकृतः ॥**
**कान्तोरुयुग्ममिषतः सवित्रि ते भावारिपूर इभशुण्डयोः समः ॥२१॥**

नाभीति– सवित्रि मातः ! नाभिह्लदात् नाभिरेव ह्लदस्तटाकः तस्माद्विगलितः निःसृतः, कटीशिलाभङ्गात् कटी श्रोणिरेव शिला तस्यां भङ्गाद् भेदनात् पुनः द्विधाकृतः द्विविधः खण्डित इत्यर्थः, भावारिपूरः भा कान्तिरेव वारिपूरः प्रवाहः इभशुण्डयोः गजहस्तयोः समस्तुल्यः कान्तोरुयुग्ममिषतः कान्तस्य कमनीयस्य ऊरुयुग्मस्य सक्थिद्वयस्य मिषतः व्याजेन सार्वविभक्तिकस्तसिल्, पतति किं ? सम्भावनायां प्रश्नः। नाभि-ह्लदयोः कटी-शिलयोश्च ताद्रूप्याद्रूपकस्य प्रतिपत्तिः स्यादपि ताद्रूप्यसम्भावनायामेवौचित्यात् उत्प्रेक्षायां पर्यवसानम्। ऊरुयुग्ममिषत इत्यपह्नवात् सापह्नवस्वरूपोत्प्रेक्षा, सा च गम्या इवादिवाचकाप्रयोगात् ॥२१॥

**जङ्घायुगं तव महेशनायिके　लावण्यनिर्झरि जगद्विधायिके ।।**
**अन्तःपरिस्फुरदगुप्तसुप्रभा-　बाणाढ्यतूणयुगलं रतीशितुः ।।२२।।**

जङ्घेति— जगद्विधायिके लोकविधात्रि महेशनायिके देवि, लावण्यनिर्झरि लावण्यस्य रामणीयकस्य निर्झरः प्रवाहः सोऽस्या अस्तीति लावण्यनिर्झरि तव जङ्घायुगं प्रसृतायुग्मं कर्तृ, रतीशितुः मन्मथस्य अन्तःपरिस्फुरदगुप्तसुप्रभाबाणाढ्यतूणयुगलम् अन्तःपरिस्फुरन्त्यः उज्ज्वलन्त्यः अगुप्ताः व्यक्ताः सुप्रभाः शोभनरुचय एव बाणाः शरास्तैः आढ्यं सम्पन्नं तूणयोस्तूणीरयोर्युगलं युग्मं भवतीति शेषः। तव जङ्घायुगलं प्रस्फुरन्मदनबाणानां निषङ्गतां भजत इति भावः। अत्रापि गम्योत्प्रेक्षा ।।२२।।

**पुष्पास्त्रशासननिशान्तराज्ञि ते　लोकत्रयस्थखलकम्पनं बलम् ।।**
**श्रोणीभरेण गमने किल श्रमं　प्राप्नोषि केन तव तत्त्वमुच्यताम् ।।२३।।**

पुष्पेति— पुष्पास्त्रशासननिशान्तराज्ञि पुष्पास्त्रस्य मन्मथस्य शासनस्य शिवस्य निशान्तस्य गृहस्य राज्ञि, कामेशपट्टमहिषि, ते तव बलं लोकत्रयस्थखलकम्पनं लोकानां त्रये तिष्ठन्तीति लोकत्रयस्थाः खलाः दुर्जनाः तेषा कम्पनं धर्षणं भवतीति शेषः। तथाऽपि, गमने गमनक्रियायां पादचार इत्यर्थः, श्रोणीभरेण नितम्बभारेण श्रमं ग्लानि प्राप्नोषि किल श्राम्यसीत्यर्थः, किल सम्प्रदाये। केन हेतुना तव तत्त्वं याथार्थ्यम् उच्यताम्? कथ्यताम्। त्रिलोकदौर्जन्यदमनं तव बलं, तत्कथमल्पेन श्रोणिभारेण श्रमो भवति? किमत्र रहस्यम्? असत्यपि श्रमजनके कारणे श्रमस्य कार्यस्य सत्त्वात् विभावनाऽलङ्कारः, 'विभावना विनाऽपि स्यात् कारणं कार्यजन्म चेत्' इति तल्लक्षणात् ।।२३।।

**यत्रैव नित्यविहृतेरभूद्रमा　राजीवमन्दिरचरीति नामतः ।।**
**तन्मे सदा भणतु मङ्गलं शिवा-　पादाम्बुसम्भवममेयवैभवम् ।।२४।।**

यत्रेति— यत्रैव यस्मिन्नेव नित्यविहृतेः शश्वद्विहरणात् हेतोः रमा लक्ष्मीः नामतः नाम्ना राजीवमन्दिरचरी इति पद्मालयविहारिणी इति अभूत्। लक्ष्म्याः पद्मालयत्वे हेतुः गम्यत्वेन सम्भावितः। अमेयवैभवं परिच्छेदातीत-

प्रभावं तत् शिवापादाम्बुसम्भवं उमापादजलजं मे मम सदा नित्यं मङ्गलं भणतु कथयतु। नेह कथनमात्रं विवक्षितम्; विधानमेव द्योत्यम् ॥२४॥

**केशादिपादकमलान्तगायिनीः कन्तुप्रशासननिशान्तनायिका ॥**
**अङ्गीकरोतु ललिता इमाः कृती- गौरी कवेश्चरणकञ्जसेविनः ॥२५॥**

केशेति— कन्तुप्रशासननिशान्तनायिका कन्तुः कामः, 'कन्तुः काम-कुसूलयोः' इति नानार्थरत्नमाला। तस्य प्रशासनः शिवस्तस्य निशान्तनायिका गृहेश्वरी महेशपट्टमहिषीति यावत्, सा गौरी चरणकञ्जसेविनः पादाम्बुजभजकस्य कवेर्मम, केशादिपादकमलान्तगायिनीः केशानारभ्य पादकमलावधि स्तुवन्तीरिमाः ललिताः ललितावृत्तनिबद्धाः नुतीः अङ्गीकरोतु स्वीकरोतु ॥२५॥

दशमः स्तबकः सव्याख्यः समाप्तः ॥

# एकादशः स्तबकः

अथ अस्मिन् स्तबके पादादिकेशान्तस्तुतिर्भवति। अत्र यथापूर्वं हास-स्तुतिपरः प्रथमः श्लोकः॥

**झषकेतुना प्रयुक्तः सम्मोहनचूर्णमुष्टिरीशाने॥**
**दरहासो धरदुहितुः करोतु भुवनं वशेऽस्माकम्॥१॥**

झषेति– ईशाने ईश्वरे विषये, झषकेतुना मीनध्वजेन मन्मथेनेति यावत्, प्रयुक्तः क्षिप्तः सम्मोहनचूर्णमुष्टिः सम्मोहयतीति सम्मोहनं चूर्णं तस्य मुष्टिः सङ्ग्राहः धरदुहितुः पार्वत्याः हासः अस्माकं वशे भुवनं करोतु विदधातु। ईश्वरं स्ववशे स्थापयितुं झषकेतुप्रयुक्तसम्मोहनचूर्णमुष्टितामापन्नो पार्वत्या मन्दहासोऽस्माकं मानुषाणां भुवनम् अन्यैः असुरादिभिराक्रान्तम् अस्मद्वशे कर्तुं सुतरां समर्थ इति भावः। अत्र हासस्य सम्मोहनचूर्णमुष्टित्वेन सम्भाव्यमानतया गम्योत्प्रेक्षा॥१॥

**उपजीवद्भिः कान्ते- र्लेशांस्ते जगति सुन्दरैर्भावैः॥**
**उपमितुमगङ्गानि तव प्रायो लज्जेऽम्ब यतमानः॥२॥**

उपेति– अम्ब, जगति लोके ते तव कान्तेः शोभायाः लेशान् लवान् उप-जीवद्भिः आश्रित्य जीवद्भिः सुन्दरैर्मनोहरैर्भावैः पदार्थैः तव अङ्गानि कर-चरणादीनि उपमितुं तुलयितुं यतमानः प्रयत्नं कुर्वन्नहं प्रायः प्रायेण लज्जे जातलज्जोऽस्मीत्यर्थः। लोके मुखादेराह्लादकत्वादिधर्मं द्योतयितुं मुखाद-न्यत्र स्थितेन स्वतःसिद्धेन चन्द्रादिना औपम्यं ब्रुवते कवयः। इह तु त्वद-ङ्गसौन्दर्यवर्णने उपमानार्थाः सर्वेऽपि लोके सुन्दराः भावाः त्वत्कान्तेर्लब्ध-सत्ताकाः, त्वत्कान्तेः पृथक्कान्त्या रहिताः अत एव न भवन्ति स्वतःसिद्धाः। उपमानस्य विषयिणो विषयस्योपमेयस्य च पृथग्भावे सत्येव हि उभयोः साधर्म्यवर्णनादुपमायाः सम्भवः। तस्मादसम्भवेऽस्मिन् त्वदङ्गसौन्दर्योपमान-कथनकर्मणि प्रवृत्तस्य मम लज्जा। तथाऽपि न प्रयत्नस्त्यक्तः। अत एव

'प्रायो लज्जे' नात्यन्तिकी लज्जा मम। तस्मात् त्वत्कान्तेरन्यत्र न काऽपि कान्तिः इत्यतः कुत उपमानं स्यात्, अत्र द्वितीयसदृशव्यवच्छेदफलकवर्णन-विषयीभूतत्वात् अनन्वयध्वनिः। रसगङ्गाधरकारास्तु–'सर्वथैवोपमानिषेधोऽसमाख्योऽलङ्कारः' इत्याहुः। 'अयं च अनन्वये व्यङ्ग्योऽपि तच्चमत्कारानुगुणतया पृथगलङ्कारतां भजते' इति तैरेवाभिहितम्॥२॥

**अवतंसपल्लवतुलां बिभ्राणं श्रुतिनतभ्रुवः शिरसि॥**
**चरणं व्रजामि शरणं वामं कामारिललनायाः॥३॥**

अवतंसेति– श्रुतिनतभ्रुवः श्रुतिः वेदः नतभ्रूरिव सुन्दरी तस्याः शिरसि अग्रे वेदान्ते इत्यर्थः, अवतंसपल्लवतुलां अवतंसार्थेन अलङ्कारार्थेन पल्लवेन किसलयेन तुलां साम्यं बिभ्राणं धारयमाणं 'तुला राशौ पलशते साम्येऽप्युन्मानसाधने' इति नानार्थरत्नमाला। कामारिललनाया हरसुन्दर्याः वामं सुन्दरं चरणं पादं, यद्वा दक्षिणेतरं, हरस्य वामार्धं हि देवी, शरणं व्रजामि। वेदशिरसि भूषणं भवति किसलयोपमं देवीचरणम्। 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुति-स्तुतं तव चरणं मम शरणमिति भावः॥३॥

**शङ्करनयनोन्मादन- मतिमधुरं भाति मतिमता वर्ण्ये॥**
**जङ्घायुगं भवत्याः कुसुमपृषत्कस्य सर्वस्वम्॥४॥**

शङ्करेति– मतिमता धीमता वर्ण्ये स्तुत्ये अम्ब, शङ्करनयनोन्मादनं शिवनयनसम्मोहनम् अतिमधुरम् अत्यन्तरमणीयं भवत्या जङ्घायुगं प्रसृताद्वयं कुसुमपृषत्कस्य पुष्पबाणस्य मन्मथस्येति यावत्, सर्वस्वं सर्वधनं भाति राजति। जङ्घायुगं मन्मथस्य सर्वस्वमिति सम्भावितम्॥४॥

**एकैकलोकने द्वय- मन्योन्यस्मरणहेतुतामेति॥**
**देवि भवस्य तवोरुः शुण्डा च गजेन्द्रवदनस्य॥५॥**

एकैकेति– भवस्य देवि, महेशमहिषि, तव ऊरुः सक्थि गजेन्द्रवदनस्य गणपतेः शुण्डा हस्तश्च द्वयं कर्तृ, इमे द्वे अपीत्यर्थः। एकैकलोकने एकै-

कस्य लोकने दर्शने कर्मणि षष्ठी, 'एकं बहुव्रीहिवत्' इत्यनेन द्विरुक्तस्य एकशब्दस्य सुब्लोपः। पुंवद्भावश्च, अन्योन्यस्मरणहेतुताम् अन्योन्यस्य परस्परस्य स्मरणस्य हेतोर्भावस्ताम् एति गच्छति। कर्मव्यतिहारे सर्वनाम्नि द्वे वाच्ये इति वार्त्तिकात् क्रियाविनिमये अन्यपदस्य द्वित्वम्। अयं भावः, द्वयोरूरुशुण्डयोरेकस्य ऊरोर्लोकने शुण्डास्मृतिर्जायते अपरस्याः शुण्डायाः लोकने ऊरोः स्मृतिर्भवति। एवं द्वयं चान्योन्यस्मारकं भवति। 'सदृशानुभवाद् वस्तुस्मृतिः स्मरणमुच्यते।' इति साहित्यदर्पणलक्षणात् स्मरणालङ्कारः ॥५॥

**नाकोऽवलग्नमीश्वरि कटिरवनिर्भोगिनां जगन्नाभिः ॥**
**कुक्षौ न केवलं ते बहिरपि वपुषि त्रयो लोकाः ॥६॥**

नाक इति– ईश्वरि! ते कुक्षौ जठरे नाकः स्वर्गलोकः अवलग्नं मध्यम् अवनिः भूलोकः कटिः श्रोणिः, भोगिनां जगत् पाताललोकः नाभिः, एवं त्रयो लोकाः स्वर्गावनिपातालाः सन्ति इति अध्याहार्यम्। न केवलं ते कुक्षावेव त्रयो लोकाः, बहिरपि वपुषि अवलग्नकटिनाभिरूपास्ते सन्तीति भावः ॥६॥

**मन्ये महाकृपाणं तव वेणीमचलपुत्रि मदनस्य ॥**
**असिधेनुकां विशङ्के निशिततराग्रां तु रोमालिम् ॥७॥**

मन्य इति– अचलपुत्रि! पार्वति, तव वेणी बन्धपरिष्कृता केशपाशीं मदनस्य महाकृपाणं महान्तं कृपाणं खड्गं मन्ये शङ्के। रोमालिं रोमराजिं तु निशिततराग्राम् अतिशयेन निशितम् तेजितम् अग्रं यस्यास्ताम् असिधेनुकाम् असिपुत्रिकां विशङ्के। स्फुटा स्वरूपोत्प्रेक्षा। ॥७॥

**द्विरदवदनेन पीतं षड्वदनेनाथ सकलभुवनेन ॥**
**अक्षय्यक्षीरामृत- मम्बायाः कुचयुगं जयति ॥८॥**

द्विरदेति– द्विरदवदनेन गजमुखेन गणपतिनेति यावत्, षड्वदनेन षण्मुखेन सुब्रह्मण्येन, अथ अनन्तरं सकलभुवनेन पीतं धीतं अक्षय्यक्षीरामृतं क्षेतुं शक्यं क्षय्यं न क्षय्यम् अक्षय्यं क्षीरं तदेवामृतं यस्य तदम्बायाः पार्वत्याः कुचयुगं स्तनयुगलं जयति उत्कर्षेण वर्तते ॥८॥

**जगदम्ब लम्बमाना पार्श्वद्वितये तवागलाद्भाति ॥**
**सान्द्रग्रथितमनोज्ञ- प्रसूनमालेव भुजयुगली ॥९॥**

जगदिति— जगदम्ब ! लोकमातः, तव भुजयुगली बाहुद्वयी आगलात् कण्ठम् आरभ्येत्यर्थः, आङ अभिविध्यर्थकः, पार्श्वद्वितये पार्श्वस्य द्वितये उभयोः पार्श्वयोः इत्यर्थः लम्बमाना सान्द्रग्रथितमनोज्ञप्रसूनमाला सान्द्रं निबिडं यथा तथा ग्रथिता गुम्फिता मनोज्ञा रुचिरा प्रसूनमाला पुष्पमाला इव भाति। कण्ठात् उभयपार्श्वगा भुजयुगली पुष्पमालेवेति सम्भावनया उत्प्रेक्षालङ्कारः। पुष्पमाला कोमलाऽपि सान्द्रग्रथिता, भुजयुगली च कोमलाऽपि दृढसन्धिबन्धसम्पन्नेति गम्यते ॥९॥

**जानन्ति शक्तिमसुराः सुषमां सख्यो वदान्यतामृषयः ॥**
**मृदुतां तवाम्ब पाणे- र्वेद स देवः पुरां भेत्ता ॥१०॥**

जानन्तीति— अम्ब, असुराः तव शक्तिं जानन्ति, तस्यास्तेषां सम्मर्दनलाभात्। सख्यः सुषमां परमां शोभां जानन्ति, सहवासभाग्यात्तासां तव पाणेः लोकोत्तरशोभा विदिता। ऋषयः मुनयः वदान्यतां दानशौण्डतां जानन्ति, तेषाम् अभीष्टवरलाभात्। पुरां भेत्ता स देवः शिवः पाणेर्मृदुतां कोमलतां वेद जानाति, पाणिग्रहणात्। शक्तेत्यसुराः, सुषमामयीति सख्यः, वदान्येति ऋषयः मृदुलपाणिरिति पुरभिच्च त्वां जानन्ति। बहुभिर्बहुधोल्लेखनादुल्लेखालङ्कारः ॥१०॥

**कम्बुसदृगम्ब जगतां मणिवेषोडुस्रजाकृताकल्पः ॥**
**कण्ठोऽनघस्वरस्ते धूर्जटिदोर्नयनकर्णहितः ॥११॥**

कम्ब्विति— जगताम् अम्ब ! मातः, ते तव कण्ठः कम्बुसदृक् कम्बुना शङ्खेन सदृक् तुल्यः, मणिवेषोडुस्रजाकृताकल्पः मणिवेषया कण्ठालङ्कारार्थरत्नरूपेण स्थितया उडुस्रजया उडुरचितया नक्षत्ररचितया स्रजया मालया कृतः कल्पितः आकल्पः भूषणं यस्य सः रत्नमिषेण नक्षत्राणि मालायन्त इत्यर्थः।

अनघस्वरः अनघो निर्दुष्टः श्रवणसुभगः स्वरः कण्ठध्वनिर्यस्य सः, धूर्जटिदोर्नयनकर्णहितः धूर्जटेः हरस्य दोष्णः भुजस्य नयनस्य दृष्टेः कर्णस्य श्रोत्रस्य च हितः अनुकूलः श्रवणरतिजनक इति यावत्। कण्ठस्य कम्बुसादृश्यं धूर्जटिदोर्हितम् आलिङ्गनसुखकरत्वात्, उडुस्रजाकल्पत्वं शिवदृष्टिहितं नयनसुभगत्वात्, अनघस्वरत्वं कर्णहितं श्रुतिसुखत्वात्। यथासङ्ख्यालङ्कारः 'यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः' इति तल्लक्षणात् ॥११॥

**हरकान्ते वदनं ते　दर्शं दर्शं वतंसशीतांशुः ॥**
**पूर्णोऽप्यवाप कृशतां　प्रायेणासूयया शुष्कः ॥१२॥**

हरकान्त इति— हरकान्ते हरसुन्दरि भगवति ! वतंसशीतांशुः हरशिरोभूषणचन्द्रः ते तव वदनम् आननं दर्शं दर्शं दृष्ट्वा दृष्ट्वा, पूर्णोऽपि प्रायेण प्रायशः असूयया त्वन्मुखप्रभाऽसहनजन्येन गुणवति त्वद्वदने दोषारोपेणेत्यर्थः, शुष्कः नीरसः सन कृशतां कार्श्यमवाप। शिवशिरःस्थार्धचन्द्रस्यार्धत्वे उमामुखदर्शनजाता चन्द्रस्यासूया हेतुरिति सम्भाव्यमानत्वात् उत्प्रेक्षा गम्यते ॥१२॥

**चन्द्रं रणाय सकला　चपलाक्षीवदनजातिराह्वयताम् ॥**
**तं तु महसा मुखं ते　महेशकान्ते जिगायैकम् ॥१३॥**

चन्द्रमिति— महेशकान्ते ! सकला चपलाक्षीवदनजातिः चपलाक्षीणां सुन्दरीणां वदनानां जातिः समस्तः समूह इति यावत्, चन्द्रं रणाय आह्वयताम्। सर्वाणि स्त्रीजातिवदनानि समूह्य चन्द्रं प्रभया जेतुं प्रयतन्तामित्यर्थः। ते तव एकं मुखं वदनं तं तु सकलस्त्रीवदनैरभियुज्यमानमपि अजीयमानं तमेव चन्द्रं महसा रोचिषा जिगाय अजयत्। तथाविधं सर्वशोभातिशायि महस्ते मुखस्येति भावः ॥१३॥

**वदनकमलं तवेश्वरि　कमलजयाद्दर्पितं सुधाभानुम् ॥**
**निर्जित्य कमलजाते-　रमलं महदाजहार यशः ॥१४॥**

**वदनं तवाद्रिदुहित-　विजिताय नताय शीतकिरणाय ।।**
**द्वारपपदवीं प्रददा-　वयमिह दरहासनामधरः ।।१७।।**

वदनमिति— अद्रिदुहितः ! पार्वति, तव वदनं कर्तृ, विजिताय शीतल-प्रभया साधनेन पराजिताय, अत एव नताय जितत्वान्नम्राय, शीतकिरणाय चन्द्राय द्वारपपदवीं द्वारपस्य पदवीं द्वारपालस्थानम् इत्यर्थः प्रददौ विततार। जितश्च चन्द्रः दासो भूत्वा द्वारपालत्वेन स्थापित इत्यर्थः। अयमेव चन्द्रः इह दरहासनामधरः दरहासो मन्दहास इति नाम्नो धरः धारकः चन्द्रो मुखे मन्द-हास इति नाम्ना स्थापितः। कविप्रौढोक्तिसिद्धा सहेतुका असिद्धविषया स्वरूपोत्प्रेक्षा ।।१७।।

**ते ते वदन्तु सन्तो　नयनं ताटङ्कमालयं मुकुटम् ।।**
**कवयो वयं वदामः　सितमहसं देवि ते हासम् ।।१८।।**

ते इति— देवि, सन्तः सज्जनाः ते ते पूर्वे कवयः सितमहसं सितं शुभ्रं महः शोचिर्यस्य तं चन्द्रं, नयनं नेत्रं, ताटङ्कं कर्णभूषणम्, आलयम् आवासं, मुकुटं किरीटं वदन्तु। त्रिणेत्रस्य वामार्धे चन्द्रो लोचनतां गतः, ततो देव्या-श्चन्द्रो नयनं भवतीति पुराणप्रसिद्धम्। एके चन्द्रं देव्यास्ताटङ्कमाहुः 'ताट-ङ्कयुगलीभूततपनोडुपमण्डला' इति ललितासहस्रनामावलौ। तत्रैव— 'चन्द्र-मण्डलमध्यगा' इति चोच्यते। ततः देव्यालयं वदन्ति चन्द्रम्। चन्द्रचूडेति प्रसिद्धेर्मुकुटं चाहुस्तम्। एवं चतुर्धा भणन्तु पूर्वे सन्तः कवयः। वयं तु तं सितमहसं हासं वदामः। अत्र परपक्षानङ्गीकारोपन्यासेन सितमहसः हासरूपतासम्भावनायाः सापह्नवोत्प्रेक्षा। 'नयनं ताटङ्कमाननं मुकुटम्' इति पाठान्तरम् ।।१८।।

**बिम्बाधरस्य शोभा-　मम्बायाः को नु वर्णयितुमीष्टे ।।**
**अन्तरपि या प्रविश्य　प्रमथपतेर्वितनुते रागम् ।।१९।।**

बिम्बेति— अम्बायाः पार्वत्याः बिम्बाधरस्य बिम्बं रक्तफलमिव अधर ओष्ठस्तस्य शोभां कान्तिं को नु वर्णयितु सादृश्योपन्यासेन कथयितुम् ईष्टे प्रभवति ? न कोऽपि प्रभुरित्यर्थः। वर्णनाशक्तेर्हेतुमाह। या शोभा प्रमथपतेः रुद्रस्य अन्तरपि प्रविश्य रागम् अनुरागं वितनुते। महाविरक्तस्य भगवतो

रुद्रस्य दुरवगाहं हृदयमपि बिम्बाधरशोभा प्रविश्य तद्रक्तवर्णम् अनुरक्तं करोति, बिम्बवदधरस्य रक्तवर्णत्वात् युक्तमेव। रागस्य श्लिष्टार्थत्वादनुरक्तं करोतीति भावः ॥१९॥

**गणपतये स्तनघटयोः पदकमले सप्तलोकभक्तेभ्यः ॥**
**अधरपुटे त्रिपुरजिते दधासि पीयूषमम्ब त्वम् ॥२०॥**

गणपतय इति– अम्ब, त्वं गणपतये तव पुत्राय स्तनघटयोः पीयूषम् अमृतं स्तन्यरूपेण दधासि धारयसे, सप्तलोकभक्तेभ्यः पदकमले पादारविन्दे पीयूषं मकरन्दरूपेण दधासि, त्रिपुरजिते कान्ताय हराय अधरपुटे अधरोष्ठतले रसरूपेण पीयूषं दधासि। एवं पुत्राय, भक्तेभ्यः, कान्ताय च तत्तदनुरूप-रूपेण अमृतं ददासीति भावः ॥२०॥

**दृक्पीयूषतटिन्यां नासासेतौ विनिर्मिते विधिना ॥**
**भासां भवति शिवे ते मुखे विहारो निरातङ्कः ॥२१॥**

दृगिति– शिवे, दृक्पीयूषतटिन्यां दृक् दृष्टिरेव पीयूषतटिनी अमृतसरित् तस्यां नासासेतौ नासा नासिकैव सेतुः प्रवाहप्रतिबन्धकं मृत्पाषाणादिनिर्माणं सेतुः उच्यते। तस्मिन् विधिना विधात्रा विनिर्मिते सति, ते मुखे भासां कान्तीनां विहारः विलासः निरातङ्कः निर्भयो भवति। असति सेतौ नदीप्रवाहभयाद्विहारो निश्शङ्को न स्यात्। अत एव विधिः नासां सेतुत्वेन निर्माय, मुखभासः प्रवहन्त्यां दृशि मा मग्ना भूवन्निति दृग्देशस्य मर्यादां व्यधात्। अत्र दृक्तटिन्योः नासासेत्वोश्च ताद्रूप्यात् रूपकं तच्च, सेतुनिर्मितेः हेतोः भासां निरातङ्कविहारफलकत्वेन सम्भावनायाः फलोत्प्रेक्षाया अङ्गम्। एवमुभयोरङ्गाङ्गिभावेन सङ्करः ॥२१॥

**कमलाविलासभवनं करुणाकेलीगृहं च कमनीये ॥**
**हरदयिते विनतहिते नयने ते जननि विजयेते ॥२२॥**

कमलेति– जननि! कमनीये सुन्दरे ते तव नयने उभे नेत्रे कमला-विलासभवनं लक्ष्मीविहारगृहं, करुणाकेलीगृहं कारुण्यलीलावासभूः, हरदयिते हरस्य दयिते प्रिये, विनतहिते नम्राणाम् अनुकूले, एवंभूते विजयेते विजयं कुरुतः ॥२२॥

**सर्वाण्यप्यङ्गानि श्रीमन्ति तवेन्दुचूडकुलकान्ते ।।**
**कविनिवहविनुतिपात्रे श्रोत्रे देवि श्रियावेव ।।२३।।**

सर्वाणीति– इन्दुचूडकुलकान्ते ! चन्द्रशेखरकुलाङ्गने (कुलयोषे इति च पाठः) देवि, तव सर्वाणि अपि अङ्गानि करचरणादीनि सकलानि श्रीमन्ति श्रीः शोभा एषाम् अस्तीति श्रीमन्ति भवन्तीति शेषः। कविनिवहविनुतिपात्रे कविनिवहस्य कविसमूहस्य विनुतीनां स्तुतीनां पात्रे आस्पदे श्रोत्रे उभे श्रिया-वेव, न तु श्रीमती। विनुतीनाम् आधेयत्वात् श्रोत्रस्याधारकत्वाच्च श्रोत्रं पात्रं भवति। अन्येषामङ्गानां श्रीमत्त्वमुक्तम्। श्रोत्रं तु श्रीरेवेति विशेषोऽस्य अन्येषामङ्गानां च। कथमिदमुच्यते श्रोत्रं न श्रीमत् किंतु श्रीरेवेति ? श्रीकर्ण एष इत्यतीतस्तबकश्लोकव्याख्याने किञ्चित् प्रदर्शितम्। श्रोत्रमेव श्रीरित्यत्र श्रीशब्दस्य सम्पदर्थः। छान्दोग्ये पञ्चमप्रपाठके 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' इत्यारभ्य 'अथ हैनं श्रोत्रमुवाच यदहं सम्पदस्मि त्वं तत्सम्पदसि' इति श्रेष्ठं प्राणं प्रत्याह श्रोत्रमिति श्रूयते। सम्पद्यमानानां सर्वासां विद्यानां शब्दात्मकतया श्रोत्रेऽन्तस्सन्निहितत्वात् श्रोत्रं सम्पदिति भावः ।।२३।।

**अपि कुटिलमलिनमुग्ध- स्तव केशः पुत्रि गोत्रसुत्राम्णः ।।**
**बिभ्रत्सुमानि कान्यपि हृदयं भुवनप्रभोर्हरति ।।२४।।**

अपीति– गोत्रसुत्राम्णः पर्वतेन्द्रस्य पुत्रि, देवि तव केशः कचः कुटिल-मलिनमुग्धः कुटिलो वक्रः न ऋजुः, मलिनः न शुद्धः, मुग्धः जडत्वात् मूढः च अपि, कान्यपि सामान्यानि सुमानि पुष्पाणि बिभ्रत् दधत् भुवनप्रभोः शिवस्य हृदयं हरति। कौटिल्य-मालिन्याद्यपकर्षकगुणविशिष्टः केशः हृदय-माकर्षतीति लोकविरुद्धमेतत्। अथ न विरुद्धं, यतः कुटिलः उन्नतानतः केशो दर्शनीयः, मलिनः कृष्णवर्णत्वात् कचस्य मेघ-मयूरादिवर्ण एव सौन्दर्या-वहः, मुग्धः सुन्दरः। एवं विरोधस्य परिहारात् किमयं विरोधाभासः; अथवा अपिशब्दस्वारस्यात्, असत्यपि जगत्प्रभुहृदयाकर्षककारणे कार्यस्य हृदयहारि-त्वस्योक्तेर्विभावना वा ? इति विभावना-विरोधाभासयोः सङ्करः। सन्देह-सङ्करोऽलङ्कारः ।।२४।।

रुद्रस्य दुरवगाहं हृदयमपि बिम्बाधरशोभा प्रविश्य तद्रक्तवर्णम् अनुरक्तं करोति, बिम्बवदधरस्य रक्तवर्णत्वात् युक्तमेव। रागस्य श्लिष्टार्थत्वादनुरक्तं करोतीति भावः ॥१९॥

**गणपतये स्तनघटयोः पदकमले सप्तलोकभक्तेभ्यः ॥**
**अधरपुटे त्रिपुरजिते दधासि पीयूषमम्ब त्वम् ॥२०॥**

गणपतय इति— अम्ब, त्वं गणपतये तव पुत्राय स्तनघटयोः पीयूषम् अमृतं स्तन्यरूपेण दधासि धारयसे, सप्तलोकभक्तेभ्यः पदकमले पादारविन्दे पीयूषं मकरन्दरूपेण दधासि, त्रिपुरजिते कान्ताय हराय अधरपुटे अधरोष्ठतले रसरूपेण पीयूषं दधासि। एवं पुत्राय, भक्तेभ्यः, कान्ताय च तत्तदनुरूप-रूपेण अमृतं ददासीति भावः ॥२०॥

**दृक्पीयूषतटिन्यां नासासेतौ विनिर्मिते विधिना ॥**
**भासां भवति शिवे ते मुखे विहारो निरातङ्कः ॥२१॥**

दृगिति— शिवे, दृक्पीयूषतटिन्यां दृक् दृष्टिरेव पीयूषतटिनी अमृतसरित् तस्यां नासासेतौ नासा नासिकैव सेतुः प्रवाहप्रतिबन्धकं मृत्पाषाणादिनिर्माणं सेतुः उच्यते। तस्मिन् विधिना विधात्रा विनिर्मिते सति, ते मुखे भासां कान्तीनां विहारः विलासः निरातङ्कः निर्भयो भवति। असति सेतौ नदीप्रवाहभयाद्विहारो निश्शङ्को न स्यात्। अत एव विधिः नासां सेतुत्वेन निर्माय, मुखभासः प्रवहन्त्यां दृशि मा मग्ना भूवन्निति दृग्देशस्य मर्यादां व्यधात्। अत्र दृक्तटिन्योः नासासेत्वोश्च ताद्रूप्यात् रूपकं तच्च, सेतुनिर्मितेः हेतोः भासां निरातङ्कविहारफलकत्वेन सम्भावनायाः फलोत्प्रेक्षाया अङ्गम्। एवमुभयोरङ्गाङ्गिभावेन सङ्करः ॥२१॥

**कमलाविलासभवनं करुणाकेलीगृहं च कमनीये ॥**
**हरदयिते विनतहिते नयने ते जननि विजयेते ॥२२॥**

कमलेति— जननि! कमनीये सुन्दरे ते तव नयने उभे नेत्रे कमला-विलासभवनं लक्ष्मीविहारगृहं, करुणाकेलीगृहं कारुण्यलीलावासभूः, हरदयिते हरस्य दयिते प्रिये, विनतहिते नम्राणाम् अनुकूले, एवंभूते विजयेते विजयं कुरुतः ॥२२॥

**सर्वाण्यप्यङ्गानि श्रीमन्ति तवेन्दुचूडकुलकान्ते ॥**
**कविनिवहविनुतिपात्रे श्रोत्रे देवि श्रियावेव ॥२३॥**

सर्वाणीति– इन्दुचूडकुलकान्ते ! चन्द्रशेखरकुलाङ्गने (कुलयोषे इति च पाठः) देवि, तव सर्वाणि अपि अङ्गानि करचरणादीनि सकलानि श्रीमन्ति श्रीः शोभा एषाम् अस्तीति श्रीमन्ति भवन्तीति शेषः। कविनिवहविनुतिपात्रे कविनिवहस्य कविसमूहस्य विनुतीनां स्तुतीनां पात्रे आस्पदे श्रोत्रे उभे श्रिया-वेव, न तु श्रीमती। विनुतीनाम् आधेयत्वात् श्रोत्रस्याधारकत्वाच्च श्रोत्रं पात्रं भवति। अन्येषामङ्गानां श्रीमत्त्वमुक्तम्। श्रोत्रं तु श्रीरेवेति विशेषोऽस्य अन्येषामङ्गानां च। कथमिदमुच्यते श्रोत्रं न श्रीमत् किंतु श्रीरेवेति ? श्रीकर्ण एष इत्यतीतस्तबकश्लोकव्याख्याने किञ्चित् प्रदर्शितम्। श्रोत्रमेव श्रीरित्यत्र श्रीशब्दस्य सम्पदर्थः। छान्दोग्ये पञ्चमप्रपाठके 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' इत्यारभ्य 'अथ हैनं श्रोत्रमुवाच यदहं सम्पदस्मि त्वं तत्सम्पदसि' इति श्रेष्ठं प्राणं प्रत्याह श्रोत्रमिति श्रूयते। सम्पद्यमानानां सर्वासां विद्यानां शब्दात्मकतया श्रोत्रेऽन्तस्सन्निहितत्वात् श्रोत्रं सम्पदिति भावः ॥२३॥

**अपि कुटिलमलिनमुग्ध- स्तव केशः पुत्रि गोत्रसुत्राम्णः ॥**
**बिभ्रत्सुमानि कान्यपि हृदयं भुवनप्रभोर्हरति ॥२४॥**

अपीति– गोत्रसुत्राम्णः पर्वतेन्द्रस्य पुत्रि, देवि तव केशः कचः कुटिल-मलिनमुग्धः कुटिलो वक्रः न ऋजुः, मलिनः न शुद्धः, मुग्धः जडत्वात् मूढः च अपि, कान्यपि सामान्यानि सुमानि पुष्पाणि बिभ्रत् दधत् भुवनप्रभोः शिवस्य हृदयं हरति। कौटिल्य-मालिन्याद्यपकर्षकगुणविशिष्टः केशः हृदय-माकर्षतीति लोकविरुद्धमेतत्। अथ न विरुद्धं, यतः कुटिलः उन्नतानतः केशो दर्शनीयः, मलिनः कृष्णवर्णत्वात् कचस्य मेघ-मयूरादिवर्ण एव सौन्दर्या-वहः, मुग्धः सुन्दरः। एवं विरोधस्य परिहारात् किमयं विरोधाभासः; अथवा अपिशब्दस्वारस्यात्, असत्यपि जगत्प्रभुहृदयाकर्षककारणे कार्यस्य हृदयहारि-त्वस्योक्तेर्विभावना वा ? इति विभावना-विरोधाभासयोः सङ्करः। सन्देह-सङ्करोऽलङ्कारः ॥२४॥

**चरणादिकुन्तलान्त- प्रकृष्टसौन्दर्यगायिनीरेताः ॥**
**अङ्गीकरोतु शम्भो- रम्भोजदृगात्मजस्यार्याः ॥२५॥**

चरणेति– शम्भोः शिवस्य अम्भोजदृक् पद्माक्षी सुन्दरी उमा चरणादिकुन्तलान्तस्य पादादिकेशान्तस्य अङ्गस्य प्रकृष्टं श्रेष्ठं सौन्दर्यं गातुमासां शीलमस्तीति चरणादिकुन्तलान्तप्रकृष्टसौन्दर्यगायिन्यः ताः आत्मजस्य गणपतेरेताः आर्याः आर्यावृत्तकलिताः स्तुतीः अङ्गीकरोतु स्वीकरोतु ॥२५॥

एकादशः स्तबकः सव्याख्यः समाप्तः ॥

# द्वादशः स्तबकः

अथ शिवयोः शृङ्गाररसभरोऽयं स्तबक आरभ्यते। तत्रादौ मन्दहासः स्तूयते ॥

**शर्वधैर्यगुणशातशस्त्रिका शम्बरारिजयकेतुपट्टिका ॥**
**मन्दहासकलिका मदापदं पर्वतेन्द्रदुहितुर्व्यपोहतु ॥१॥**

शर्वेति– शर्वधैर्यगुणशातशस्त्रिका शर्वस्य शिवस्य धैर्यगुणस्य दूरीकृत-चेतोविकारं धैर्यं तदेव गुणः रज्जुः तस्य शाता निशिता शस्त्रिका शस्त्र्येव शस्त्रिका असिपुत्री 'शुल्बं वटारकं स्त्री तु रज्जुस्त्रिषु वटी गुणः' इत्यमरः। शम्बरारिजयकेतुपट्टिका शम्बरारेः मन्मथस्य जयकेतुपट्टिका विजयध्वजपताका पर्वतेन्द्रदुहितुः पार्वत्याः मन्दहासकलिका मन्दहासः कलिका कोरक इव, आपद्व्यपोहनसमर्थस्य मन्दहासस्य पूर्वपदस्य प्राधान्यादुपमितसमासः। मदापदं मम विपदं व्यपोहत्वपहरतु। कलिकापदार्थसामर्थ्यादाक्षिप्यमाणं हासस्य पुष्पत्वं मदनप्रयोज्यबाणत्वं गम्यते ॥१॥

**मुक्तभोगिकटकेन पाणिना मुग्धगात्रि परिगृह्य ते करम् ॥**
**एकदा शशिकिशोरशेखरः सञ्चचार रजताद्रिभूमिषु ॥२॥**

मुक्तेति– मुग्धगात्रि ! सुन्दराङ्गि, एकदा कदाचित्, शशिकिशोरशेखरः बालचन्द्रचूडः शिवः मुक्तभोगिकटकेन मुक्तः उन्मुक्तः भोगी सर्प एव कटकं वलयः यस्मात्तेन पाणिना हस्तेन ते तव करं हस्तं परिगृह्य गृहीत्वा रजताद्रिभूमिषु कैलासप्रदेशेषु सञ्चचार विजहार। भूषणसर्पं स्वहस्तादपसार्य सुन्दरमूर्तिश्चन्द्रचूडः परिणयानन्तरं पार्वत्या सह कैलासोपान्तेषु विहाराय प्रवृत्त इति भावः। नागभूषण-जटा-गजचर्मादि भीति-जुगुप्सावहमिति तत्सर्वं परित्यज्य शृङ्गारभावानुगुणेन शशिकिशोरधरवेषेण भगवान् शुभ्रेण हस्तेन भगवतीं हस्ते परिगृह्य विहृतवानिति विशदम्। परिणयकल्याणवार्ताप्रस्तावने

द्वितीयशतकस्य प्रथमस्तबके पुरारेः ज्वलत्कपर्दत्वादि प्रसिद्धं रूपं कथयित्वा, समयान्तरेषु 'कान्तं वपुः कान्ततराश्च लीलास्त्वया समं खेलितुमेष धत्ते' इति ह्युक्तम् ॥

तत इदानीं कमनीयभावेन देव्या सह विहरतः परमेश्वरस्य तस्याम् अभिलाषशृङ्गारे वक्ष्यमाणे उद्दीपनविभावभूतानां सभ्रमरकुसुमितोपवन-हरिण-हारिमञ्जुलकुञ्ज-कोकिलकलादीनां वर्णनं पञ्चभिः श्लोकैः कुरुते ॥२॥

**तस्य तत्र परितः परिभ्रमन् वल्लभां वकुलपुष्पचुम्बिनीम् ॥**
**पार्वति त्वदलकोपमद्युति- श्चञ्चरीकतरुणो मनोऽधुनोत् ॥३॥**

तस्येति– पार्वति, तत्र रजताद्रिभूमिषु वकुलपुष्पचुम्बिनीं केसरकुसुम-रसास्वादिनीं वल्लभां प्रियां मधुकरीं परितः अभितः परिभ्रमन् त्वदलकोप-मद्युतिः तवालकैश्चूर्णकुन्तलैः उपमा सादृश्यं यस्याः सा त्वदलकोपमा सा द्युतिः कान्तिर्यस्य स चञ्चरीकतरुणः भ्रमरयुवा तस्य परमेश्वरस्य मनोऽधुनोत् अचालयत्। भ्रमरविलसितपुष्पसमृद्धिदर्शनेन पार्वतीकान्तस्य मनः कम्पित-मभूत् इत्यर्थः ॥३॥

**प्रेयसीं चपलचारुलोचना- मुल्लिखन्वपुषि शृङ्गकोटिना ॥**
**त्वद्विलोकितनिभैर्विलोकितै- र्धूर्जटेरमदयन्मनो मृगः ॥४॥**

प्रेयसीमिति– चपल-चारुलोचनां चपले चञ्चले चारुणी सुन्दरे लोचने नयने यस्यास्तां प्रेयसीं हरिणीं शृङ्गकोटिना शृङ्गाग्रेण वपुषि शरीरे उल्लि-खन् कण्डूयमानः मृगः हरिणः त्वद्विलोकितनिभैः त्वद्वीक्षितोपमैः विलोकितै-र्वीक्षितैः धूर्जटेः परमेश्वरस्य मनोऽमदयत् अमोहयत्। हरिण्यां हरिणेना-विष्कृतप्रीतिविलासदर्शनं धूर्जटिमानसमादकम् अभूत्। त्वद्विलोकितनिभैरित्यत्र उपमानस्योपमेयत्वप्रकल्पनात्प्रतीपमाहुः। पूर्वश्लोके 'त्वदलकोपमद्युतिः'इत्य-त्रापि प्रतीपम् ॥४॥

**मञ्जुकुञ्जभवनानि मालती- पुष्परेणुसुरभिः समीरणः ॥**
**पेशला च पिकबालकाकली मोहमीश्वरि हरस्य तेनिरे ॥५॥**

मञ्जुकुञ्जेति– ईश्वरि, मञ्जुकुञ्जभवनानि मञ्जुललतागृहाणि, मालती-पुष्परेणुसुरभिः मालतीपरागसुगन्धिः समीरणः पवनः, पेशला रमणीया च

पिकबालकाकली बालकोकिलसूक्ष्मकलध्वनिः, एतानि सर्वाणि हरस्य मोहं तेनिरे चक्रुः। लतागृह-पुष्प-गन्धवह-बालकोकिलगानानि हरस्य मोहजनकान्यभूवन् इति भावः ॥५॥

**अग्रतः कुसुमशोभिता लताः पार्श्वतस्त्वमगपालबालिके ॥**
**सर्वतो मदनशिञ्जिनीध्वनि- र्धीरता कथमिवास्य वर्तताम् ॥६॥**

अग्रत इति– अग्रतः शिवस्य पुरस्तात् कुसुमशोभिताः पुष्पभूषिताः लताः स्थिताः, अगपालबालिके पर्वतराजपुत्रि, पार्श्वतः पार्श्वे त्वं, सर्वतः परितः मदनशिञ्जिनीध्वनिः मदनस्य मन्मथस्य शिञ्जिन्याः मौर्व्याः ध्वनिः, कोकिलकाकली मदनज्यायमानेति भावः। अस्य तव कान्तस्य धीरता धैर्य कथमिव वर्तताम्? कथञ्चिदपि धैर्य वर्तितु न शक्यम्। पुरतः पार्श्वतः सर्वतश्चोत्तेजकेषु समापतितेषु पलायितैव धीरता इति भावः ॥६॥

**कीरकूजितसमाकुले वने शम्भुमम्ब तव पार्श्ववर्तिनम् ॥**
**आजघान मकरध्वजश्शरै- रर्दयन्त्यवसरे हि शत्रवः ॥७॥**

कीरेति– अम्ब, कीरकूजितसमाकुले शुककूजितपरीते वने अरण्ये तव पार्श्ववर्तिनं पार्श्वगतं शम्भु मकरध्वजः मीनकेतुः मन्मथः शरैर्बाणैराजघान विव्याध। हि यस्मात अवसरे प्रस्तावे समये प्राप्ते इत्यर्थः, शत्रवः अर्दयन्ति पीडयन्ति। प्रकृतस्य विशेषस्य सामान्येनाप्रकृतेन समर्थनादर्थान्तरन्यासः ॥७॥

**ताडितो मकरकेतुना शरै- रंसदेशमवलम्ब्य पाणिना ॥**
**एकहायनकुरङ्गलोचनां त्वामिदं किल जगाद शङ्करः ॥८॥**

ताडित इति– मकरकेतुना मन्मथेन शरैर्बाणैस्ताडितो विद्धः शङ्करः अंसदेशं स्कन्धं पाणिना अवलम्ब्य बाणपातजन्यवेदनामसहमानः स्वहस्तेन तव स्कन्धप्रदेशमुपधाय इत्यर्थः, एकहायनकुरङ्गलोचनाम् एको हायनः संवत्सरो यस्य सः एकहायनः स कुरङ्गः तस्य लोचने इव लोचने यस्यास्तां त्वाम् इदं जगाद किल। इदं वक्ष्यमाणप्रकारं हि उक्तवान् ॥८॥

**काकलीकलकलं करोत्यसौ बालचूतमधिरुह्य कोकिला ॥**
**वाचमुद्गिर सरोजलोचने गर्वमुन्नतमियं विमुञ्चतु ॥९॥**

काकलीति– असौ इतः पुरो दृश्यमाना कोकिला पिकवधूः वालचूतं रसालवृक्षकम् अधिरुह्य आरुह्य काकलीकलकलं काकल्याः सूक्ष्माव्यक्तमधुरध्वनेः कलकलं कोलाहलं करोति 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे कलः', 'कोलाहलः कलकलः' इत्यमरः। सरोजलोचने पद्माक्षि, वाचम् उद्गिर विसृज तव कण्ठध्वनिं किञ्चित् श्रावय इत्यर्थः, इयं कोकिला उन्नतं गर्वं दर्पं विमुञ्चतु। श्रवणसुभगस्वरसम्पत्त्या गर्वितेतः पुरस्तात् रसालवृक्षे समासीना कोलाहलं कुर्वन्ती कोकिलाऽऽस्ते, ततोऽपि श्रुतिसुभगतरस्ते कण्ठध्वनिः मम कर्णामृतायतामिति भावो व्यज्यते ॥९॥

**फुल्लकुन्दमकरन्दवाहिनो मल्लिकामुकुलधूलिधारिणः ॥**
**कम्पयन्ति शिशवः समीरणाः पल्लवानि हृदयं च तन्वि मे ॥१०॥**

फुल्लेति– तन्वि सुन्दरि, फुल्लकुन्दमकरन्दवाहिनः विकसितमाघीपुष्परसवहाः मल्लिकामुकुलधूलिधारिणः मल्लीकुड्मलपरागधराः शिशवः समीरणाः मन्दमारुताः मे मम हृदयं पल्लवानि किसलयांश्च कम्पयन्ति चालयन्ति। रागोद्दीपनात् हृदयस्य कम्पनं मन्दमारुतकृत्यं, मारुतस्य मन्दत्वात् पल्लवानां कम्पनं न तु चलनमपि। वृद्धे चण्डे तु मारुते, शाखानामपि स्यात् चलनम्। अत्र मन्दमारुतकार्यस्य द्वयोर्हृदय-पल्लवयोः कम्पनस्योक्तेः सहार्थस्य चकारेण वाच्यायमानत्वात् सहोक्तिरलङ्कारः, 'सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः। सा सहोक्तिः' इति साहित्यदर्पणम् ॥१०॥

**वर्णनेन हृतचक्षुषः श्रियः सुप्रसन्नमधुराकृतीनि ते ॥**
**अङ्गकानि दयिते भजेऽर्भकः स्वेदबिन्दुहरणेन वाऽनिलः ॥११॥**

वर्णनेनेति– दयिते! प्रिये, हृतचक्षुषः हृतं चक्षुः दर्शनं यया तस्याः श्रियः शोभायाः वर्णनेन गुणवचनेन, मम दृष्टिमेवापहृतवत्यास्त्वच्छोभाया गुणकीर्तनेनेत्यर्थः, ते तव सुप्रसन्नमधुराकृतीनि सुप्रसन्नाः स्वच्छाः मधुराः

रमणीयाः आकृतयः येषां तानि अङ्गकानि गात्राणि भजे अहं सेवे, क इव? अर्भकः शिशुः अनिलः मारुतः मन्दमारुत इति यावत्, स्वेदबिन्दुहरणेन घर्माम्बुजालकापहरणेन वा इव, 'उपमायां विकल्पे वा' इत्यमरः। यथाऽयं मन्दमारुतः स्वेदापहरणसेवया तव खेदमपनुदति, एवमहमपि तव स्वच्छाकृतिसौभाग्यसम्पन्नानि गात्राणि गुणाभिवर्णनेन तव रतये ममाभिलाषशृङ्गारबलाय च सेवे ॥११॥

**तावदेव मम चेतसो मुदे    बर्हमेतदनघाङ्गि बर्हिणः ॥**
**यावदक्षिपथमेष विश्लथो    गाहते न कबरीभरस्तव ॥१२॥**

तावदिति– अनघाङ्गि! अनवद्यगात्रि, एष इतो मम पार्श्वे विश्लथः मुक्तबन्धः तव कबरीभरः केशपाशः अक्षिपथं अक्ष्णोर्नेत्रयोः पन्थाः मार्गस्तं मम दृक्पथमिति यावत्, यावन्न गाहते न प्रविशति, तावदेव बर्हिणः मयूरस्य एतत् पुरो दृश्यमानं बर्हं पिञ्छं मम चेतसो मनसो मुदे प्रीतये भवतीति शेषः। यावन्न लभे त्वत्कबरीभारदर्शनसौभाग्यं, तावत् एव मयूरस्य शिखण्डं दृष्ट्वा, मम प्रियायाः कबरीभार इवायं भवतीति तृप्यामि इति भावः। बर्हादपि रुचिरतरश्चित्तरञ्जकः कबरीभार इति वाच्यायमानत्वात् प्रतीपालङ्कारो गम्यः ॥१२॥

**रागवानधर एष सन्ततं    निर्मलद्विजसमीपवर्त्यपि ॥**
**एभिरस्य सहवासतः प्रिये    नेषदप्यपगतो निजो गुणः ॥१३॥**

रागवानिति– प्रिये कान्ते, एषोऽधरः तवाधरोष्ठः निर्मलद्विजसमीपवर्त्यपि शुभ्रदन्तनिकटस्थोऽपि सन्ततं नित्यं रागवान् रक्तोऽरुण इति यावत्, एभिः द्विजैः दन्तैः अस्य सहवासतः साङ्गत्यात् ईषदपि किञ्चिन्मात्रमपि निजः स्वीयो गुणः रक्तगुणः नापगतः न विगतः स्थित एवेति भावः। अत्र श्लिष्टानां राग-निर्मल-द्विजशब्दानाम् अनुरागादिपर्यायपरिवृत्त्यसहिष्णुत्वात् शब्दशक्तिमूलानुरणनरूपोपमाध्वनिः। यथा निर्मलानां शुद्धानां सत्त्वगुणानां द्विजानां ब्राह्मणानां समीपवर्त्यपि जनः रागवान् राजसोऽनुराग्येव भवति, तथा निर्मलानां धवलानां द्विजानां दन्तानां समीपवर्त्यपि एषोऽधरो रागवान्

रक्तवर्ण एव। सहवासेन निजगुणापगमो न भवतीति तु उभयत्र समानम्। 'संसर्गजा दोषगुणा भवन्ति' इति न्यायस्य नैसर्गिकेषु गुणेष्वपवाद इति हेतोः अधरस्य अनपगतरागत्वरूपवाक्यार्थस्य समर्थनात् काव्यलिङ्गमलङ्कारः ॥१३॥

**चक्षुषः सुदति ते सगोत्रता कैरवैर्निशि दिने कुशेशयैः ॥**
**कश्यपैरपि वसिष्ठबान्धवै- र्भूसुपर्वण इव द्विगोत्रिणः ॥१४॥**

चक्षुष इति— सुदति, शोभनाः दन्ताः अस्याः सन्तीति सुदती तस्याः सम्बुद्धिः, रुचिरदन्तपङ्क्तिके, ते तव चक्षुषः नेत्रस्य, निशि रात्रौ कैरवैः कुमुदैः समानं गोत्रं कुलं यस्याः सा सगोत्रा तद्भावः सगोत्रता कुमुदकुलस्थतेति यावत्, रात्रौ कुमुदायते तव नेत्रं, चन्द्रबन्धुतयेति भावः, दिने कुशेशयैः कमलैः सूर्यबन्धुतया सगोत्रतेति सम्बन्धः। कस्येव ? द्विगोत्रिणः गोत्रद्वयवतः भूसुपर्वणः भूसुरस्य ब्राह्मणस्य कश्यपैः कश्यपगोत्रजैः वसिष्ठबान्धवैः अपि वसिष्ठवंशजैश्च सगोत्रतेवेति पूर्वेण सम्बन्धः। रात्रौ कश्यपसगोत्राः दिने वसिष्ठसगोत्राश्चेति द्व्यामुष्यायणान् द्विगोत्रिणः प्राहुः। अतस्तैरिव इत्युपमा। चक्षुषः कमल-कैरवसगोत्रताकथनेन रात्रौ कमलं न विकसितं दिवा कुमुदं न, तव चक्षुस्तु सन्ततं विकसितम्। तस्मात्ताभ्यामधिकतरं चक्षुरुल्लसितमिति व्यतिरेकोऽलङ्कारो व्यज्यते ॥१४॥

**अल्पयाऽप्यतिसमर्थया स्मित- ज्योत्स्नया गगनगं हरत्तमः ॥**
**केवलं सुवचनामृतं किर- च्चन्द्रबिम्बमतुषारमाननम् ॥१५॥**

अल्पयेति— आननं तव मुखम् अल्पया, सूक्ष्मया अपि अतिसमर्थया अत्यन्तं कुशलया स्मितज्योत्स्नया स्मितमेव ज्योत्स्ना चन्द्रिका तया गगनगम् आकाशगतं तमः अन्धकारं हरत् अपहरत् केवलं सुवचनामृतं सुवचनमेवामृतं निर्णीतं सुवचनामृतं 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इत्यमरः, किरत् वर्षत् अतुषारम् अविद्यमानतुहिनं चन्द्रबिम्बमेव भवतीति शेषः ॥

स्मितज्योत्स्नयो-र्वचनामृतयो-श्चन्द्राननयोश्च अभेदाध्यवसायात् सावयवं रूपकमलङ्कारः। तत्र अतुषारतया प्रसिद्धचन्द्रादपि उत्कर्षादधिकाभेदरूपकम् ॥१५॥

**नित्यमब्जमुखि ते परस्पर-　　श्लिष्टमश्लथपटीकुटीरगम् ॥**
**शर्वरीभयविवर्जितं स्थली-　　चक्रवाकमिथुनं कुचद्वयम् ॥१६॥**

नित्यमिति– अब्जमुखि, चन्द्रवदने ते तव कुचयुगं वक्षोजयुगलं, स्थली-चक्रवाकमिथुनं स्थल्यां स्थले स्थितं कोकपक्षिद्वन्द्वं भवतीति शेषः, चक्रवाको व्योमचरः इह तु स्थलस्थ इति भेदः। स्थलीचक्रवाकमिथुनं विशिनष्टि। नित्यं सततं परस्परश्लिष्टं परस्परेण अन्योन्येन श्लिष्टं संयुक्तं न कदाऽपि वियुक्तमिति यावत्। व्योमचरकोकमिथुनस्य तु रात्रौ भवति वियोगः। अश्लथपटीकुटीरगम् अश्लथा दृढबद्धा पटी वक्षोजवसनमेव कुटीरं कुटी तं गच्छतीति अश्लथपटीकुटीरगम् दृढबन्धमुत्तरीयान्तरमेव नित्यवासभूः व्योमचरचक्रमिथुनस्य नैकत्रापि तथा भवति। शर्वरीभयविवर्जितं रात्रिभीति-वर्जितं प्रसिद्धचक्रवाकमिथुनस्य रात्रेर्भयं भवत्येव वियोगात्तस्य। एवम् इद-मपि व्योमचरचक्रवाकादुत्कर्षादधिकाभेदरूपकम् ॥१६॥

**लालनीयमयि देवमौलिभिः　　कोमलं चरणपल्लवद्वयम् ॥**
**कच्चिदद्रिपुरुहूतपुत्रिके　　न स्थली तुदति कर्कशा तव ॥१७॥**

लालनीयमिति– अयि सानुनयसम्बोधने 'अनुनये त्वयि' अद्रिपुरुहूत-पुत्रिके! पर्वतेन्द्रपुत्रि, देवमौलिभिः देवानां किरीटैः लालनीयम् ईप्सनीयं, लल ईप्सायाम्। कोमलं सुकुमारं चरणपल्लवद्वयं पल्लवमृदुलं पादयुगलं कर्म, कर्कशा कठिना स्थली न तुदति कच्चित् न बाधते किम्? 'कच्चित् काम-प्रवेदने'। न बाधत इत्याशंसे। पर्वतचक्रवर्तिपुत्रिकायाः कोमलपादतलं शिलाकार्कश्येन बाधितं स्यादिति तदाश्वासनाय प्रियां पृच्छति। ईदृशेषु प्रश्नो-पचारेषु प्रियकृतेषु प्रियायाः सत्यामपि किञ्चिद्वेदनायां प्रीतिः जायते ॥१७॥

**एवमादि वदति त्रिलोचने　　त्वन्मुखे लसति मौनमुद्रया ॥**
**आततान जलचारिकेतनो　　नर्तनं नगमहेन्द्रबालिके ॥१८॥**

एवमिति– नगमहेन्द्रबालिके! पार्वति! एवमादि इत्यादि वचनं त्रि-लोचने भगवति शिवे वदति ब्रुवति सति, त्वन्मुखे तव वदने मौनमुद्रया

मौनस्य अवचनस्य मुद्रया लक्षणेन लसति विलसति सति, प्रतिवचनमदत्वा तूष्णीं स्थितेऽपि त्वद्वदने आसीदेव किमपि विलसितं, तथा त्वन्मुखे विलसिते सति, अयमेव अवसर इति जलचारिकेतनो मकरध्वजो मदनः नर्तनम् आततान स्वीयं नर्तनं विस्तृतवान्। प्रत्युत्तरादानेनैव प्रवृद्धोऽभूदनुरागस्तव प्रियस्य, येन मन्मथस्तमाविश्योत्तरोत्तरोपचारान् तव कारयामासेति भावः ॥१८॥

**देवि ते पुरजिता वतंसितः पारिजातकुसुमस्रजा कचः ॥**
**मानसं पुरजितोऽमुना हृतं स्मर्यते क्व मलिनात्मना कृतम् ॥१९॥**

देवीति– देवि ! ते तव कचः शिरोजः पुरजिता हरेण प्रभुणा पारिजातकुसुमस्रजा पारिजातपुष्पमालया वतंसितः अलङ्कृतः। अमुना कचेन पुरजितो विभोः शिवस्य मानसं हृतम् अपहृतम्। मलिनात्मना अशुभ्रेण पक्षे पापात्मना कृतं क्व स्मर्यते? न स्मर्यत इत्यर्थः। पापः सर्वथा कृतघ्नो भवतीत्यर्थः। कचस्य कार्ष्ण्यात् जडत्वाच्च मलिनं स्वरूपम्। अत्र परमेश्वरेण प्रभुणा कचाय पारिजातप्रसाधनं दत्तं, तस्य मानसापहरणं कचेन प्रतिकृतम् इत्यर्थेन देवीकचप्रसाधनकैङ्कर्यलाभस्य स्वमनोदानमेव मूल्यमासीदिति व्यज्यते। तस्मात् परिवृत्तिरलङ्कारो ध्वन्यते। कचापहृतपुरजिन्मानसापहरणस्य प्रकृतस्य विशेषस्य सामान्येन मलिनात्मकृतघ्नतारूपार्थान्तरेण समर्थनादर्थान्तरन्यासः ॥१९॥

**ब्रह्मचर्यनियमादचञ्चला नायिका यदि लुलायमर्दिनी ॥**
**नायकश्च सुमबाणसूदनो वेद को रतिरहस्यमेतयोः ॥२०॥**

ब्रह्मचर्येति– लुलायमर्दिनी महिषमर्दिनी नायिका भगवती ब्रह्मचर्यनियमात् अप्राकृतशरीरत्वान्नित्यब्रह्मचर्यव्रतादचञ्चला अच्युता स्थिरा यदि, नायकश्च सुमबाणसूदनो मन्मथनाशनो यदि, एतयोः रतिरहस्यं को वेद ? न कोऽपि प्रपञ्चमाता-पित्रोः पार्वती-परमेश्वरयोः अप्रमेयं रतिस्वरूपं जानाति ज्ञातुं वा प्रभुः। अतीतैः श्लोकैः शृङ्गारोपन्यासात् पामरस्त्रीपुरुषोचित-मदनविलासः शिवयोर्मा भूदारोपित इत्यभिप्रायेण अयं श्लोको गीतः ॥२०॥

**लोचनोत्सवविधौ विशारदे　वारिदावरणदोषवर्जिते ॥**
**मर्दयत्यपि नभोगतं तमः　श्यामिकारहितसुन्दराकृतौ ॥२१॥**

**भाति शीतकिरणस्तनन्धये　प्राणनायकजटाकुटीजुषि ॥**
**शुभ्रपर्वततटे शुभाङ्गि ते　सम्मदाय न बभूव का निशा ॥२२॥**

लोचनेति (युग्मम्)– शुभाङ्गि मङ्गलविग्रहे भगवति, लोचनोत्सवविधौ लोचनयोः नेत्रयोः उत्सवस्य महस्य विधौ विधाने विशारदे विचक्षणे नेत्रानन्दजननकुशले इत्यर्थः। वारिदावरणदोषवर्जिते वारिदानां मेघानाम् आवरणेन छादनेन वर्जिते मेघपटलावृतिरहिते इत्यर्थः, नभोगतम् आकाशगं तमः अन्धकारं मर्दयत्यपि ताडयत्यपि श्यामिकारहितसुन्दराकृतौ श्यामिकया कलङ्केन रहिता सुन्दरी मनोहरी आकृतिर्यस्य तस्मिन् तमोमर्दनेन तत्स्पर्शजकालुष्यहीनमनोहररूपे इत्यर्थः। प्राणनायकस्य परमेश्वरस्य जटैव कुटी कुटीरं तत् जुषते इति प्राणनायकजटाकुटीजुट् तस्मिन् शीतकिरणस्तनन्धये बालचन्द्रे भाति विलसति सति, शुभ्रपर्वततटे श्वेतगिरिप्रदेशे कैलासप्रान्ते का निशा रात्रिः ते तव सम्मदाय आनन्दाय न बभूव ? सर्वा अपि रात्रयः आनन्दाय प्राभवन्नित्यर्थः ॥

प्रसिद्धचन्द्राद्व्यतिरिक्तस्य नित्यनेत्रोत्सवविधायिनोऽकलङ्करुचिरस्यालौकिकमूर्तेः परमेश्वरजटाकृतावासविलासस्य बालचन्द्रस्य वैभवस्तुत्या पार्वतीगतप्राणनायकविषयकरतिभावो ध्वन्यते ॥२१-२२॥

**सन्तु भूषणसुधांशुदीधिति-　व्यक्तमुग्धमुखशोभयोर्मिथः ॥**
**तानि तानि गिरिजा-गिरीशयोः　क्रीडितानि जगतो विभूतये ॥२३॥**

सन्त्विति– भूषणसुधांशोः शिरोभूषणचन्द्रस्य दीधितिभिः मरीचिभिः व्यक्ते स्पष्टे मुग्धे सुन्दर्यौ मुखशोभे मुखप्रभे ययोः तयोः गिरिजा-गिरीशयोः पार्वतीकैलासनाथयोः मिथः परस्परं तानि तानि श्वेताद्रिवनान्तभूमिषु वृत्तानि क्रीडितानि विलसितानि जगतो लोकस्य विभूतये ऐश्वर्याय सन्तु कल्पन्ताम्। पार्वती-परमेश्वरयोः अनिर्वाच्यरहस्यरतिविलसितानि जगतः श्रेयःप्रदानि भवन्त्वित्याशीरियं शृङ्गारवर्णनोपसंहारसन्दर्भेत्यवदातम् ॥२३॥

**मोदकादनपरस्य सृष्टये क्रीडितं जननि वां किमप्यभूत् ॥**
**शक्तिभृत्तनयरत्नजन्मने किञ्चिदीश्वरि बभूव खेलनम् ॥२४॥**

मोदकेति– जननि मातः, मोदकादनपरस्य मोदकस्य भक्ष्यविशेषस्यादनं भक्षण परं प्रधानं यस्य तस्य लम्बोदरस्य गणपतेः सृष्टये उत्पत्तये वां युवयोः किमपि क्रीडितं रतिविलसितविशेषम् अभूत्। ईश्वरि, शक्ति बिभर्तीति शक्तिभृत् स तनयः पुत्रो रत्नमिव तस्य जन्मने जननाय, शक्तिधरस्य कुमारश्रेष्ठस्य स्कन्दस्य सम्भवाय किञ्चित् खेलनं किमपि क्रीडितं बभूव आस॥

गणपति-सुब्रह्मण्ययोर्जन्मनी निमित्तीकृत्य युवयोर्द्विविधमप्रमेयं विलसितमासीत्, अत एव तौ युवयोस्तनयौ नैकस्वभावौ। एको भोजनपरः, अन्यः शक्तिधरः। अत्र 'महेश्वरस्त्वां परिणीय लेभे' (२ श. १ स्त. २४ श्लो.) इति श्लोकः सव्याख्योऽवधेयः ॥२४॥

**माधुरीरसपरिप्लुता इमाः काव्यकण्ठविदुषो रथोद्धताः ॥**
**आदधत्वचलनाथनन्दिनी- मानसे कमपि मोदमुत्तमम् ॥२५॥**

माधुरीति– माधुरी माधुर्यम् एव रसः विगलितवेद्यान्तरः अनुभवैकवेद्यः तेन परिप्लुताः व्याप्ताः शिवयोरन्योन्यप्रीतिविलसितनिष्पाद्यमानश्रृङ्गाररसपूरिता इत्यर्थः, काव्यकण्ठविदुषः काव्यकण्ठ इति अन्वर्थोपनामधेयत्वेन सतां सम्मतः काव्यकण्ठपदलाञ्छनः विद्वान् विबुधः तस्य इमाः स्तबके गीताः रथोद्धताः एतद्वृत्तरचिताः नुतयः अचलनाथनन्दिनीमानसे पर्वतराजपुत्रिकायाः मनसि कमपि मोदम् आनन्दविशेषम् आदधतु जनयन्तु॥

अयं च स्तबकः कुमारसम्भवाष्टमसर्गधोरणीमवलम्ब्य निबद्ध इति कालिदासकाव्यज्ञानां विशदमेव विदितं भवेत्। उभयत्र रथोद्धतावृत्तम्। श्रृङ्गारो विषयः। पार्वतीं सम्बोध्य परमेश्वरकृतं श्रृङ्गारोद्दीपनं कुसुमितोपवन-सन्ध्याकाल-रात्र्यादिवर्णनं 'व्याजहार सहधर्मचारिणीम्।' 'पद्मकान्तिमरुणत्रिभागयोः' (कु. स. ८. श्लो. ३.) इत्यादिना वर्णितम्। इहापि तथाविधं वर्णनं स्पष्टम्। 'त्वामिदं किल जगाद शङ्करः' इत्यादिना पार्वतीं प्रतीश्वरकृतं वर्णनम्। उभयोर्विशेषस्तु लक्षणीयः। अद्वितीयस्य कविसार्वभौमस्य कालिदासस्य कवितायां नित्यसञ्जातरतिरुमासहस्रकविः काव्यकण्ठो मुनिरिति तु

सत्यम्। तथाऽपि प्रपञ्चमाता-पित्रोः पार्वती-परमेश्वरयोः सुरतवर्णनं कालिदास इव अकुर्वन् यथाकथञ्चित् तत् परिवर्ज्यमिति धिया, रत्युत्पादकशृङ्गारवर्णनस्य 'ब्रह्मचर्यनियमादचञ्चला' इत्यारभ्य 'वेद को रतिरहस्यमेतयोः' इति पर्यवसानं समर्थितवान्। वेदवेदान्तमन्त्रतन्त्रज्ञानयोगोपासनाद्युपबृंहितस्य भक्तिपरस्य महतोऽस्य स्तोत्रकाव्यस्यानुरूपमेवोमा-महेश्वरयोः अप्रमेयरतिरहस्यस्तवनेनोपसमाहार्षीत् स्तबकम् ॥२५॥

इति श्रीमहर्षिरमणभगवत्पादान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतिमुनेः कृतावुमासहस्रे द्वादशः स्तबकः समाप्तः।

समाप्तं च तृतीयं शतकम्।

प्रभाख्या व्याख्या च समाप्ता॥

# त्रयोदशः स्तबकः

अथास्मिन् स्तबके भगवत्याः कटाक्षमहिमानुवर्णनं भवति। तत्रादौ हासस्तुतिः ॥

**भवाम्बुधिं तारयताद्भवन्तं हासोऽद्भुतः कुञ्जरवक्त्रमातुः ॥**
**यो हन्ति बिम्बाधरलङ्घनेऽपि व्यक्तालसत्वो हरितां तमांसि ॥१॥**

भवाम्बुधिमिति– कुञ्जरवक्त्रमातुः गजाननमातुः अद्भुतः आश्चर्यकरः हासः भवन्तं भवाम्बुधिं जन्मसागरं तारयतात् तारयतु। तरतेर्हेतुमण्ण्यन्ताल्लोटि रूपम्। द्विकर्मकम्। हासो भवन्तं तीर्णभवसागरं करोत्वित्यर्थः। हासस्याद्भुतत्वे हेतुमाह। यो हासः बिम्बाधरलङ्घनेऽपि बिम्बाधरस्य रक्तफलोपमाधरोष्ठस्य लङ्घने अतिक्रमणेऽपि व्यक्तालसत्वः व्यक्तं स्पष्टम् अलसत्वं मन्दत्वं यस्य स हासः दन्तवाससं लङ्घयित्वैव मुखान्निर्गन्तु प्रभवति। समीपतमवर्तिनो मुखद्वारि तिष्ठतोऽधरस्यातिक्रमणेऽपि मन्द एवेति भावः। तावान् मन्दोऽपि हरितां दिशां तमांसि तिमिराणि हन्ति व्यपोहति। एवमतिमन्दोऽपि सर्वदिक्तिमिरव्यपोहनपटुरत एवाद्भुत इत्युक्तम। मन्दहासकर्तृकस्य अमन्दकार्यस्य दिक्तमोहरणरूपार्थस्य निष्पत्तेरसम्भाव्यत्वं गम्यते, तेन असम्भवालङ्कारध्वनिः। विशेषोक्तिशङ्का न कार्या अद्भुतोपादानात् ॥१॥

**सक्तः सदा चन्द्रकलाकलापे सर्वेषु भूतेषु दयां दधानः ॥**
**गौरीकटाक्षो रमणो मुनिर्वा मदीयमज्ञानमपाकरोतु ॥२॥**

सक्त इति– चन्द्रकलाकलापे चन्द्रकला कलापो भूषणं यस्य तस्मिन् चन्द्रचूडे शिवे सक्तः कृतसङ्गोऽत्यन्तमनुरक्त इति यावत्, सर्वेषु सकलेषु भूतेषु प्राणिषु दयाम् अनुकम्पां दधानः बिभ्रत् गौरीकटाक्षः पार्वत्याः अपाङ्गदर्शनं, रमणो मुनिर्वा महर्षिरिति प्रसिद्धो मम गुरुरिव 'वद्वा यथा तथैवैवं साम्ये' इति अमरः, मदीयं ममेदम् अज्ञानम् अपाकरोतु निरस्यतु। चन्द्रचूडे सक्तिः, कान्तेऽनुरागाद् गौरीकटाक्षस्य, रमणस्य मुनेस्तु एकान्तभक्तेः, जगन्मातुः सहजां सर्वभूतदयां कटाक्षो धत्ते, सर्वेषु भूतेषु आत्मदर्शनात् सहजा

भूतदया रमणस्य मुनेः। यथा रमणो महर्षिः मम गुरुरज्ञानमपास्यति तथा गौरीकटाक्षोऽपास्यत्विति भावः। पूर्णोपमा ॥२॥

**कृपावलोको नगकन्यकायाः करोतु मे निर्मलमन्तरङ्गम् ॥**
**येनाङ्कितः शङ्कर एकतत्त्वं विश्वं लुलोके जगते जगौ च ॥३॥**

कृपेति— नगकन्यकायाः पर्वतपुत्र्याः कृपावलोकः कृपया करुणया अवलोकः दृष्टिपातः मे मम अन्तरङ्गम् अन्तःकरणं निर्मलं शुद्धं करोतु। येन कृपावलोकेन अङ्कितः मुद्रितः शङ्करः आनन्दलहर्यादिप्रणेता अम्बिकामाराध्य तत्प्रसादं लब्धवान्। शारीरकभाष्यकारः अद्वैताचार्यः विश्वं समस्तम् एकतत्त्वम् एकम् अद्वितीयं तत्त्वं याथार्थ्यं सत्यं यस्य तत् अद्वैतमित्यर्थः विधेयविशेषणं, लुलोके ददर्श, दृष्टं च तत् अद्वैतं जगते जगौ च अगासीत् उपदिष्टवान् इत्यर्थः ॥३॥

**कालीकटाक्षो वचनानि मह्यं ददातु मोचामदमोचनानि ॥**
**यत्पातपूतं रघुवंशकारं नराकृतिं प्राहुरजस्य नारीम् ॥४॥**

कालीति— काल्याः देव्याः कटाक्षः नेत्रान्तदर्शनं मोचामदमोचनानि मोचा रसातिशयवान् कदलीविशेषः तस्याः मदस्य दर्पस्य मोचनानि अपहारकाणि ततोऽपि रसवत्तराणि इत्यर्थः, वचनानि वाग्वैभवानि मह्यं ददातु वितरतु। यत्पातपूतं यस्य कटाक्षस्य पातेन पूतं पवित्रं रघुवंशकारं कालिदासं नराकृतिं नरस्याकृतिरिवाकृतिर्यस्याः ताम् अजस्य ब्रह्मणः नारीं स्त्रियं सरस्वतीं प्राहुः वदन्ति बुधा इति शेषः। कालीप्रसादलाभेन कालिदासो महाकविरभूदिति ऐतिह्यानुवादेनेदमुक्तम्। तथा सोऽवतारः सरस्वत्या इति च। सत्सु सुप्रख्यातशाकुन्तलादिनाटकेषु कुमारसम्भवे च महाकाव्ये कालिदासकृतिषु, रघुवंशकारमिति निर्देशेन अद्वितीयकविताशोभानामपि सर्वासां कृतीनां रघुवंशस्य प्राधान्यमभिमन्यते कविरिति बोध्यम् ॥४॥

**युष्माकमग्र्यां वितनोतु वाणी- मेणीदृगेषा गिरिशस्य योषा ॥**
**यस्याः कटाक्षस्य विसारि वीर्यं गिरामयं मे विविधो विलासः ॥५॥**

युष्माकमिति— एणीदृक् मृगीदृक् एषा गिरिशस्य शिवस्य योषा सुन्दरी युष्माकम् अग्र्यां श्रेष्ठां वाणीं सरस्वतीं वितनोतु विस्तृणोतु, सारस्वतसम्पत्ति

विदधात्वित्यर्थः। यस्याः गिरिशयोषायाः कटाक्षस्य विसारि सर्वतः प्रसरणशीलं वीर्यं बलं मे मम गिरां वाचां विविधो नानाविधोऽयं विलासः। भगवत्याः कटाक्षप्रभाव एव मम नानाविधवाग्विलासरूपतया जयतीत्यर्थः। विविध इति प्रयोगेण न केवलमाशुधाराकविताऽष्टावधानादिर्महाकवेर्मम वाग्विलासः। सर्वतोमुखं मे सारस्वतवैभवं मद्विरचितेषु निगमागमविमर्शनेषु नानाशास्त्रग्रन्थेषु विलसितं धीगुणवतां तोषाय भवतीति बोध्यम्। 'हेतुहेतुमतोरैक्यं हेतु केचित्प्रचक्षते' इति चन्द्रालोकोक्तेः गौरीकटाक्षस्य हेतोः गीर्विलासस्य हेतुमतश्च ऐक्यप्रतिपादनात् हेतुरलङ्कारः ॥५॥

**नगात्मजायाः करुणोर्मिशाली दृगन्तसन्तानधुनीप्रवाहः ॥**
**भीष्मेण तप्तान्भवनामकेन ग्रीष्मेण युष्माँच्छिशिरीकरोतु ॥६॥**

नगात्मजाया इति– नगात्मजायाः देव्याः पर्वतपुत्र्याः करुणैव ऊर्मयो वीचयः ताभिः शोभत इति करुणोर्मिशाली, दृगन्तस्य अपाङ्गस्य सन्तानो विस्तार एव धुनीप्रवाहः नदीप्रवाहः भीष्मेण भीकरेण भवनामकेन भवो जननं नाम यस्य स भवनामा स एव भवनामकः तेन ग्रीष्मेण निदाघेन तप्तान् युष्मान् शिशिरीकरोतु अशिशिरान् शिशिरान् सम्पद्यमानान् करोतु शीतलयत्वित्यर्थः। अत्र सावयवं रूपकमलङ्कारः। घोरं जन्मतापं भगवत्याः करुणापूर्णकटाक्षो व्यपोह्य युष्मान् सुखिनः करोत्विति तात्पर्यम्। करुणादृगन्तसन्तानेषु ऊर्मिधुनीप्रवाहाः आरोपिताः, भवे ग्रीष्मश्च। भीष्मत्वं भव-ग्रीष्मयोः समानम्। तप्तान् भवेन दुःखितान् ग्रीष्मेण सन्तप्तान् । एवं विवेकः ॥६॥

**अजस्रमार्द्रा दययाऽन्तरङ्गे यथा भवो निम्नगयोत्तमाङ्गे ॥**
**सन्तापशान्तिं भवसुन्दरी मे करोतु शीतेन विलोकितेन ॥७॥**

अजस्रमिति– अन्तरङ्गे हृदये अजस्रम् अनवरतं दयया कृपया आर्द्रा सरसा, यथा भवः शिवः निम्नगया नद्या गङ्गया अजस्रम् उत्तमाङ्गे शिरसि आर्द्रस्तथेति सम्बन्धः भवसुन्दरी शिवप्रिया शीतेन तापहरणेन विलोकितेन वीक्षितेन मे मम सन्तापशान्तिं सञ्ज्वरोपशमनं करोतु, यथा शिवस्य शिरसि

सततं स्रवन्ती गङ्गा तं तत्र आर्द्रं करोति, तथा पार्वत्या हृदये सन्ततं प्रवहन्ती दया तदार्द्रं करोतीत्युपमालङ्कारः ॥७॥

**पुण्या सदाऽपीश्वर एव सक्ता　पतिव्रतासाम्यमिता तवेक्षा ॥**
**कुलाचलाधीश्वरकन्यके मे　संहारमंहोविततेर्विधत्ताम् ॥८॥**

पुण्येति– कुलाचलाधीश्वरकन्ये पर्वतराजपुत्रि, तव ईक्षा दृष्टिः पुण्या पवित्रा सदाऽपि निरन्तरम् अपि सम्भावनायाम् ईश्वर एव सक्ता सङ्गवती 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः, अत एव पतिव्रतासाम्यं पतिव्रतया साध्व्या साम्यं तुल्यताम् इता गता मे मम अंहोवितते: अंहसः पापस्य वितते: विस्तृतेः संहारं सङ्कोचं नाशनमिति यावत्, विधत्ताम् करोतु विस्तृतस्य पापस्य उपसंहरणं कुरुतामित्यर्थः। यथा पतिव्रता पत्युः अन्यत्र न चलति तथा तवेक्षा ईश्वरान्नापसरति। तस्मात्पतिव्रतासाम्यं गतेति उपमा। यद्यपि ईश्वरादन्यत्र न पतति तथाऽपि पातिव्रत्यप्रभावेन पापसंहार इव तवेक्षातोऽपि स भवत्विति भावः ॥८॥

**शर्वस्य रामे नियमेन हीना　श्यामा तवेक्षा गणिकाङ्गनेव ॥**
**नीचेऽपि मर्त्ये निपतत्यनर्घा　बिभर्ति ना षोडश यः सुवर्णान् ॥९॥**

शर्वस्येति– शर्वस्य भर्गस्य रामे सुन्दरि, श्यामा कृष्णा सुन्दरी च तव ईक्षा दृष्टिः गणिकाङ्गना वारवनितेव नियमेन हीना नियताचारशून्या एकत्र स्थितौ नास्ति व्रतमस्या इत्यर्थः। नीचेऽपि निकृष्टेऽपि मर्त्ये मानुषे स्वयम् अनर्घा अमूल्या, निपतति यो ना मनुजः षोडश सुवर्णान् शोभनान् वर्णान् अक्षराणि षोडशाक्षरीमन्त्रमित्यर्थः, पक्षे सौवर्णं धनमित्यर्थः। बिभर्ति धरति। वेश्याङ्गना यथा स्वर्णवति नीचेऽपि मानुषेऽनुरक्ता, तथा तवेक्षा षोडशाक्षरमन्त्रधरे पुरुषेऽनुग्रहवती। श्लिष्टोपमा ॥९॥

**पद्मायताक्षि क्षितिधारिकन्ये　कटाक्षनामा तव कालसर्पः ॥**
**यं सन्दशत्येष जगत्समस्तं　विस्मृत्य चाहो न दधाति मोहम् ॥१०॥**

पद्मेति– पद्मे कमले इव आयते दीर्घे अक्षिणी यस्याः तस्याः सम्बुद्धिः **पद्मायताक्षि,** क्षितिधारिकन्ये भूधरबाले पार्वति, तव कटाक्षो नामाभिधानं

यस्य स कटाक्षनामा कालसर्पः कृष्णसर्पः यं सन्दशति सम्यक् दंशयते एष स समस्तं जगत् भुवनं विस्मृत्य च विस्मृतवानपीत्यर्थः, मोहं मूर्छां न दधाति न वहति। अहो आश्चर्यम्। कटाक्ष-कृष्णसर्पयोरभेदानुरञ्जनाद्रूपकमलङ्कारः। मोहाधानकारणे सत्यपि मोहाभावस्य कार्यस्य सिद्धेर्विशेषोक्तिरलङ्कारः। स च रूपकेणानुप्राणितः। कालसर्पात् कटाक्षस्याधिकगुणोक्तिः व्यतिरेकं गमयति। रूपकविशेषोक्त्योस्तु समप्रधानः सङ्करः ॥१०॥

**ईशद्विषा शैलमहेन्द्रकन्ये करोति मैत्रीं विषमायुधेन ॥**
**प्रभाषते पातकिनश्च पक्षे कुतः कटाक्षो न तवाम्ब मुग्धः ॥११॥**

ईशेति— शैलमहेन्द्रकन्ये पार्वति, अम्ब, तव कटाक्षः ईशद्विषा ईशं द्वेष्टीति ईशद्विट् तेन विषमायुधेन मन्मथेन मैत्रीं मित्रभावं सख्यं करोति। पातकिनः पातकं पापमस्येति पातकी तस्य मदनस्य पक्षे प्रभाषते तत्पक्षपाती तत्सहायो भवतीत्यर्थः, 'पक्षे सहायेऽपि' इत्यमरः। कुतः कस्माद्धेतोः स न मुग्धः मूढः? तव प्राणनायकस्येश्वरस्य शत्रोर्मदनस्य पक्षबलं दत्वा पापिनः तस्य सहायो भवतीति हेतोः मूढ एव। ईशद्वेषिण्यपि परमकारुणिकस्ते कटाक्ष इति स्तुतिपर्यवसायिनीयं निन्दा। 'उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः' इति लक्षणात् व्याजस्तुतिः अलङ्कारः ॥११॥

**कृपान्वितः कर्णसमीपचारी श्रीमान्सदा पुण्यजनानुकूलः ॥**
**साम्यं कुरूणामधिपस्य शम्भोः प्राणप्रिये ते भजते कटाक्षः ॥१२॥**

कृपेति— शम्भोः प्राणप्रिये, पार्वति, ते तव कटाक्षः, कृपान्वितः कृपया दयया अन्वितः, कर्णसमीपचारी, कर्णयोः श्रोत्रयोः समीपचारी, श्रोत्रान्तविश्रान्तः कटाक्ष इत्यर्थः, श्रीमान् शोभावान्, सदा पुण्यजनानुकूलः पुण्यजनानां पावननाम् अनुकूलः, एवम्भूतः सन् कुरूणामधिपस्य दुर्योधनस्य साम्यं सादृश्यं भजते। कथम्? कुरूणामधिपोऽपि कृपान्वितः धनुर्विद्याचार्येण नाम्ना कृपेण अन्वितः युतः, कर्णसमीपचारी कर्णस्य कुन्तीपुत्रस्य समीपे चरति, श्रीमान् राज्यलक्ष्मीवान्, पुण्यजनानुकूलः पुण्यजनानां राक्षसानाम् अनुकूलः। कटाक्षस्य दुर्योधनसाम्यवर्णनं पुण्यजनानुकूलतत्कारुण्यवैभवस्य विरुद्धम्। स च विरोधः दयान्वितादिशब्दश्लेषैः परिहृतः इति विरोधाभासोऽलङ्कारः ॥१२॥

**कर्णान्तिकस्थोऽपि न धर्मवैरी　कृष्णोऽपि मातर्नकुलं न पाति ।।**
**शीतोऽपि सन्दीपयति स्मराग्निं　हरस्य ते शैलसुते कटाक्षः ।।१३।।**

कर्णान्तिकस्थ इति— शैलसुते पार्वति, ते तव कटाक्षः कर्णान्तिकस्थः कर्णस्य दुर्योधनपक्षगस्य कौन्तेयस्य अन्तिकस्थोऽपि समीपवर्त्यपि धर्मवैरी धर्मपुत्रस्य वैरी शत्रुर्न भवति, कर्णः धर्मपुत्रप्रतिपक्ष एव प्रसिद्धः, स तथा नेत्युक्तौ विरोधः, श्रोत्रसमीपगः अपि श्रोत्रधर्मस्य श्रवणस्य न वैरी दर्शनश्रवणयोर्मैत्र्येव। एवं शब्दश्लेषेण विरोधाभासः। कृष्णोऽपि भगवानपि नकुलं पाण्डवं न पाति न रक्षति। अयमपि विरोध इतिहासस्य। कृष्णोऽपि श्यामोऽपि मलिनवद् दृश्यमानो कुलं न पाति न रक्षति इति न; पात्येवेत्यर्थः। अत्रापि शब्दश्लेषेण विरोध-परिहारः। शीतोऽपि शीतलोऽपि हरस्य शिवस्य स्मराग्नि कामाग्नि सन्दीपयति ज्वलयति न तु शामयति, शीतोऽग्निवर्धन इति विरोधः। कटाक्षप्रभावस्य स्वाभाविकी कामारिकामाग्निदीपिनी प्रवृत्तिरिति विरोधाभासः ।।१३।।

**अयं कटाक्षस्तव तोयवाहः　कारुण्यकाले परिजृम्भमाणः ।।**
**गृहेषु लीनान्सुखिनो विहाय　निराश्रयान् सिञ्चति विश्वमातः ।।१४।।**

अयमिति— विश्वमातः जगज्जननि, अयं तव कटाक्षः एतन्नाना तोयवाहः मेघः कारुण्यकाले करुणाप्रदर्शनसमये परिजृम्भमाणः परितो व्याप्नुवन् गृहेषु दारेषु, पक्षे स्वनिकेतनेषु लीनान् सुखिनः पामरतया मन्दसुखमग्नान्, पक्षे निलीनान् विहायोज्झित्वा, निराश्रयान् अनन्याश्रयान्, पक्षे आवासगृहमना-श्रित्य बहिःस्थितान् सिञ्चति सिक्तान् करोतीत्यर्थः। कारुण्यकाल इत्यत्र रूपकसामर्थ्याद्वर्षाकाल इत्याक्षिप्यते। गृहशब्देन पुत्रदारादयोऽपि ग्राह्याः, ये स्वीयत्वेन गृह-पुत्र-वित्तादीन् परिगृह्याश्रित्य तैरात्मानं आवृण्वते तेषाम् उचिते काले देवीकरुणाकटाक्ष उपस्थितोऽपि फलप्रदो न भवति। ये पुनः स्वीयत्वेन किमप्यनाश्रित्य निरावरणास्तिष्ठन्ति ते कटाक्षास्पदं भवन्तीति भावः। कटाक्ष-तोयवाहयोः कारुण्य-वर्षाकालयोश्च अभेदेन रञ्जनाद्रूपकमलङ्कारः ।।१४।।

**कस्यापि वाचा वपुषा बलेन　समस्य सर्वैरपि यन्निदेशाः ।।**
**अम्भोधिवेलास्वपि न स्खलन्ति　शम्भोः प्रियेऽयं तव दृक्प्रसादः ।।१५।।**

कस्येति— शम्भोः प्रिय देवि, सर्वैरपि मानवैः वाचा वपुषा शरीरेण बलेन वीर्येण च समस्य-तुल्यस्य कस्यापि पुरुषस्य निदेशाः शासनानि अम्भो-

धिवेलासु अपि समुद्रनीरविकारेष्वपि 'अम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः, न स्खलन्ति न स्खलितानि विफलानि भवन्तीति यत् अयं तव दृक्प्रसादः दृशः दृष्टेः प्रसादोऽनुग्रहः। वाक्शरीरबलैः सर्वैः मानवैः समानः न तु विशिष्टः पुरुषः अधृष्यगम्भीरसागराणां कल्लोलितानामपि नियमनं कर्तुं प्रभवति। बाह्यदृष्टेः साधारण इव दृश्यमानः पुरुषोऽपि त्वत्प्रसादेन उल्लोलेषु सागरेष्वपि आज्ञां करोतीति भाव.। सेतुबन्धादिरत्र निदर्शनम् ॥१५॥

**द्वारेषु तेषां विचरन्ति शूराः सौधेषु सारङ्गदृशस्तरुण्यः ॥**
**प्रगल्भवाचः कवयः सभासु शर्वाणि ते येषु कृपाकटाक्षः ॥१६॥**

द्वारेष्विति– शर्वाणि, शर्वपत्नि, देवि, येषु ते तव कृपाकटाक्षः, करुणावाही कटाक्षः भवतीत्यध्याहार्यं तेषां द्वारेषु गृहद्वारेषु शूराः वीराः विचरन्ति वीरपुरुषसमाश्रयाः ते विक्रान्ता राजानो भवन्ति इत्यर्थः। तेषां सौधेषु प्रासादेषु सारङ्गदृशः मृगीदृशः सुन्दर्यस्तरुण्यो युवतयो भवन्तीत्यध्याहार्यम्, विलसन्तीत्यर्थः। बहुपुण्यफलभोगाः श्रीमन्तो भवन्तीति भावः। तेषां सभासु परिषत्सु राजसदस्सु प्रगल्भवाचः प्रगल्भा अतिप्रौढा वाक् सरस्वती येषां ते कवयः काव्यब्रह्माणः भवन्तीत्यध्याहार्यम्। काल्याः शौर्यं, लक्ष्म्याः सम्पत्, सरस्वतीतो विद्येति पादत्रयेण क्रमशः एतत्त्रयं कटाक्षवता पुरुषेण लभ्यत इत्यर्थः। अनेन काली-लक्ष्मी-सरस्वतीमूर्तिविभूतिगर्भितः शर्वाणीकटाक्ष इति गम्यते ॥१६॥

**यत्राम्ब ते कोऽपि कटाक्षलेशः स दुर्जयः सङ्गरसीम्नि शूरः ॥**
**पूर्वं दिवं पूरयति द्विषद्भि- स्ततो यशोभिर्भुवमिन्दुगौरैः ॥१७॥**

यत्रेति– अम्ब, यत्र यस्मिन् जने ते तव कोऽपि यः कोऽपि कटाक्षलेशः कटाक्षलवः वर्तते इत्यध्याहार्यम्, स सङ्गरसीम्नि युद्धरङ्गे दुर्जयः दुःखेन जेतुं शक्यः शूरो वीरः सन् पूर्वं प्रथमं दिवं स्वर्गलोकं द्विषद्भिः शत्रुभिर्वीरैः पूरयति, स्वर्गं शत्रुवीरपूरितं करोतीत्यर्थः। पराजितस्यापि वीरस्वर्गलाभः प्रसिद्धः। ततः अनन्तरं भुवं भूलोकम् इन्दुगौरैः इन्दुः सितांशुरिव गौराः तैः शुभ्रैः यशोभिः पूरयतीति शेषः। कटाक्षवतो जनस्य महोन्नतशौर्यप्राप्तिप्रस्तावेन

कटाक्षस्य कालीवैभवम् उक्तं भवति। पूर्वं द्विषतां स्वर्गप्रापणं, ततो भुवः शुभ्रैर्यशोभिः पूरणमिति कथनात् कार्यशैघ्रचप्रत्यायनार्था अतिशयोक्तिरलङ्कारः ॥१७॥

**यं तारकाकान्तकलापकान्ते न लोकसे कोऽपि न लोकते तम् ॥**
**यं लोकसे तेन विलोकितोऽपि श्रियं समृद्धां समुपैति लोकः ॥१८॥**

यमिति– तारकाकान्तस्य चन्द्रस्य कला भागः कलापो भूषणं यस्य तस्य कान्ते, रमणि, भगवति, यं जनं न लोकसे त्वं न पश्यसि तं न कोऽपि लोकते, सोऽविदितः सर्वैरुपेक्ष्यो भवति। अश्रीः अनामधेयः सर्वथोपेक्षितो भवतीति भावः। यं जनं लोकसे वीक्षसे तेन त्वल्लोकितजनेन विलोकितः वीक्षितोऽपि लोकः जनः 'लोकस्तु भुवने जने' इत्यमरः, समृद्धां पुष्कलां श्रियं सम्पदं समुपैति प्राप्नोति। यस्मिन् कस्मिंश्चित् जने तव दृष्टेः सम्पर्के साक्षादसत्यपि, परम्परया सति तु स एवाश्रयो भवत्येषाम् आश्रितानामिति भावः। अनेन कटाक्षस्य लक्ष्मीविभूतिः प्रस्तुता ॥१८॥

**सुधां हसन्ती मधु चाक्षिपन्ती यशो हरन्ती वनिताधरस्य ॥**
**परिष्करोत्यस्य कवित्वधारा मुखं हरप्रेयसि लोकसे यम् ॥१९॥**

सुधामिति– हरप्रेयसि, शिवकान्ते, देवि, यं लोकसे त्वमीक्षसे, अस्य तस्य जनस्य मुखं वदनं 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः, वाचम् इति यावत् कवित्वधारा काव्यसम्पातः परिष्करोति भूषयति। कथम्भूता कवित्वधारा? सुधां हसन्ती अमृतमुपहसन्ती स्वोत्कर्षात्, मधु च मकरन्दं च आक्षिपन्ती प्रतिषेधन्ती, वनिताधरस्य योषिज्जनानाम् अधरोष्ठस्य यशः कीर्तिं लोभनीयानुत्तरमधुमधुरमधरमिति सिद्धां ख्यातिमिति यावत्, हरन्ती अपहरन्ती कवित्वधारा परिष्करोतीति सम्बन्धः। अनेन सरस्वतीविभूतिमत्ता कटाक्षस्योक्ता। हसनाक्षेपणहरणान्युपमावाचकानि प्रागुपन्यस्तानि। एकस्याः कवित्वधारायाः बहूपमानदर्शनात् मालोपमाऽलङ्कारः ॥१९॥

**सर्वेन्द्रियानन्दकरी पुरन्ध्री विद्याऽनवद्या विपुला च लक्ष्मीः ॥**
**इयं त्रिरत्नी पुरुषस्य यस्य दुर्गे त्वया दृष्टमिमं तु विद्यः ॥२०॥**

सर्वेति– दुर्गे, देवि, सर्वेषाम् इन्द्रियाणां भोगकरणानाम् आनन्दं सम्मदं करोति इति सर्वेन्द्रियानन्दकरी पुरन्ध्री स्त्री सर्वलक्षणसम्पन्नशरीरान्तरङ्गा

रमणीति यावत्, अनवद्या निर्दुष्टा शुद्धा विद्या, विपुला बहुला लक्ष्मीः सम्पच्च इयं त्रिरत्नी त्रयाणां रत्नाना श्रेष्ठानां स्त्र्यादीना समाहारः त्रिरत्नी यस्य पुरुषस्य भवतीत्यध्याहार्यम्, इमं तं पुरुषं त्वया दृष्टम् अवलोकितं विद्मः जानीमः। त्वत्करुणाकटाक्षं विना एकस्य इदं त्रय न सम्भवतीति भावः ॥२०॥

**मुधा क्षिपस्यद्रिसुते कटाक्षान् कैलासकान्तारमहीरुहेषु ॥**
**इतः किरेषत्तव नास्ति हानिः सिद्ध्यत्यभीष्टं च समस्तमस्य ॥२१॥**

मुधेति— अद्रिसुते पर्वतपुत्रि, कैलासकान्तारमहीरुहेषु कैलासप्रान्तारण्यवृक्षेषु कटाक्षान् दृगन्तदृष्टीः मुधा वृथा क्षिपसि किरसि। इतः इह जने ईषत् किञ्चित् किर क्षिप। तव हानिर्नास्ति तथेषत्कटाक्षक्षेपेणेत्यर्थः। न केवलं तव हानिर्न, किन्तु अस्य जनस्य समस्तं सकलमभीष्टम् ईप्सितं सिद्ध्यति सिद्ध भवतीत्यर्थः। कटाक्षपातेन तव किमपि न हीयते मम तु महान् लाभः। ततो याचे ॥२१॥

**शीताचलाधीशकुमारि शीतः संरक्षणे संश्रितमानवानाम् ॥**
**दुर्धर्षदुष्टासुरमर्दनेषु नितान्तमुष्णश्च तवावलोकः ॥२२॥**

शीतेति— शीताचलाधीशकुमारि! शीतशैलेश्वरकन्ये पार्वति, तव अवलोकः दृष्टिपातः संश्रितमानवानां त्वामाश्रितमनुजानां संरक्षणे अवने शीतः शीतलः दयार्द्रः इति यावत्। दुर्धर्षदुष्टासुरमर्दनेषु दुःखेन धर्षयितुं शक्यानां दुर्धर्षाणां दुर्जयानां दुष्टानामसुराणां मर्दनेषु ताडनेषु नितान्तम् उष्णश्च तीव्रो भवन् तापद इति भावः। एक एव अवलोकः शीतः उष्णश्च निमित्तभेदाद्भवतीत्यर्थ.। एकस्य द्विधोल्लेखनादुल्लेखः अलङ्कारः ॥२२॥

**रुषा समेतं विदधाति नाशं करोति पोषं कृपया सनाथम् ॥**
**अम्बौषधस्येव तवेक्षितस्य योगस्य भेदेन गुणस्य भेदः ॥२३॥**

रुषेति— रुषा रोषेण समेतं युक्तं, नाशं विदधाति, ईक्षितमिति विभक्तिव्यत्ययेन कर्तृपदमध्याहार्यम्, ईक्षितस्येत्युत्तरार्धे प्रयोगात्। कृपया सनाथं

सहितं पोषं करोति पुष्णाति इत्यर्थः। अम्ब, औषधस्य भेषजस्य योगस्य प्रमाण-भेदादिसाध्यद्रव्यविशेषसंयोजनस्य भेदेन गुणस्य वात-पित्त-कफघ्नतादिगुणस्य भेद इव, तव ईक्षितस्य योगस्य रुषादिसंयोगस्य भेदेन गुणस्य विनाशादिगुणस्य भेदः। तवेक्षितं रोषयोगेन विनाशं करोति, कृपायोगेन पोषं करोतीतीममर्थम् औषधस्य योगविशेषेण गुणभेद इवेति उपमया चमत्करोति। योगगुणशब्दौ श्लिष्टौ ॥२३॥

**नाशाय तुल्योद्धतकामलोभ-　　क्रोधत्रिदोषस्य भवामयस्य ॥**
**शिवप्रिये वीक्षितभेषजं ते　　क्रीणानि भक्त्या वद भोः कियत्या ॥२४॥**

नाशायेति— शिवप्रिये! देवि तुल्यं समानम् उद्धताः दृप्ताः प्रकुपिताश्च काम-लोभ-क्रोधा एव त्रिदोषाः वात-पित्त-कफा यस्य तस्य भवामयस्य भवो जन्मैव आमयः रोगः तस्य ते तव वीक्षितभेषजं वीक्षितमेव भेषजम् औषधं तत् कियत्या भक्त्या क्रीणानि क्रयेण आददे, कियत् भक्तिमूल्यं दत्वा तत् सम्पादयेयं भोः वद भण। तुल्यमुद्धताना काम-लोभ-क्रोधानां तुल्यधातुप्रकोपात्मकसन्निपातविशिष्टत्रिदोषस्थानीयत्वं, भवस्यामयस्थानीयत्वं, वीक्षितस्य भेषजस्थानीयत्वं, भक्तेः क्रीणानीति क्रियार्थसामर्थ्याक्षिप्तक्रयधनस्थानीयत्वं च विवेकेन ग्राह्यम्। सावयवं ताद्रूप्यरूपकम् ॥२४॥

**अभिष्टुतां चारणसिद्धसङ्घै-　　स्त्रिष्टुब्विशेषा अपि मर्त्यसूनोः ॥**
**कृपाकटाक्षैर्विनतान्पुनानां　　कपर्दिनः सम्मदयन्तु कान्ताम् ॥२५॥**

अभिष्टुतामिति— मर्त्यसूनोः मानवपुत्रस्य मानवगर्भजस्येति यावत्, त्रिष्टुब्विशेषाः त्रिष्टुप्छन्दःप्रस्तारगा. वृत्तविशेषाः अपि, एते मानुषगर्भजेन स्तुता अपीत्यर्थः, चारणानां सिद्धानां च सङ्घैरभिष्टुतां स्तुतां, कृपाकटाक्षैः विनतान् प्रणतान् आश्रितान् पुनानां पूतान् कुर्वाणां कपर्दिनः शिवस्य कान्तां पार्वतीं सम्मदयन्तु आनन्दयन्तु॥

अत्र स्तबके उपजात्युपेन्द्रवज्रावृत्तानि पद्यानि। अतस्त्रिष्टुब्विशेषा इति प्रयुक्तम्। उभयोरपि त्रैष्टुभत्वात्। देवयोनिविशेषैः चारणादिभिः स्तव्या स्तुता च इह मर्त्येन आभिः त्रिष्टुब्भिः स्तुताऽपि आनन्दं लभत एवेति दृढ-धिया तां सम्मदयन्त्विवति कवेराशंसा ॥२५॥

त्रयोदशः स्तबकः सव्याख्यः समाप्तः॥

# चतुर्दशः स्तबकः

अस्मिन् स्तबके देव्याः देश-काल-रूपावस्थानोपन्यासेन योगानुभवदान-दक्षायाः काली, गौरी, कुण्डलिनी इति प्रसक्तायास्तस्याः स्तुतिर्भवति ॥

**कारणमखिलमतीनां वारणमन्तर्लसत्तमसः ॥**
**मन्दस्मितं महेश्वर- सुदृशो मे श्रेयसे भवतु ॥१॥**

कारणमिति— अखिलमतीनाम् अखिलाना सकलानां मतीनां बुद्धीनां ज्ञानानाम् इति यावत् कारणं मूलं, अन्तर्लसत्तमसः अन्तः लसतो व्याप्रियमाणस्य तमसोऽन्धकारस्य अज्ञानस्येत्यर्थः, वारणं निवारणं महेश्वरसुदृशः ईश्वरसुन्दर्याः मन्दस्मितं मे मम श्रेयसे कल्याणाय भवतु। सर्वेषां ज्ञानानां कारणतया स्थितस्य महेश्वरीमन्दस्मितस्य अन्तस्तिमिरस्य मूलाज्ञानस्य निवारकत्वमुपपन्नम्। तस्मात् ज्ञानलाभ-अज्ञानध्वंसाभ्याम् अन्यत् किं परमं श्रेयोऽस्तीति तदुभयसाधकं महेश्वरीमन्दहसितं स्तुतम् ॥१॥

**विश्वतनुस्तनुगात्री वज्रमयी पुष्पसुकुमारी ॥**
**सर्वस्य शक्तिरबला काली गौर्यम्बिका जयति ॥२॥**

विश्वेति— विश्वतनुः विश्वं समस्तं भुवनं तनुः शरीरं यस्याः सा ब्रह्माण्डशरीरा इत्यर्थः, तनुगात्री कृशाङ्गी सुन्दरी स्त्रीत्यर्थः, वज्रमयी स्वार्थे मयट्, वज्रमणिवत् कठोरा, पुष्पसुकुमारी कुसुमवत्कोमला, सर्वस्य सतः शक्तिः सर्वशक्तिः, अबला अविद्यमानबला स्त्री च, काली कालवर्णा, गौरी गौराङ्गी शुभ्रवर्णेत्यर्थः, अम्बिका जयति ॥

शरीरस्य विश्वात्मकत्वात् बृहत्त्वेऽपि तनुत्वं तनुगात्रीति प्रसिद्धेः, वज्रवद्-दृढ-कठोरत्वे अपि कुसुमकोमलत्वं स्त्रीदेहत्वात्, सर्वशक्तिरपि स्त्रीरूपत्वादबलेति प्रसिद्धिः, श्यामलत्वे अपि श्वेतत्वं काली गौरीति उभयथा ख्यातेः। एवमन्योन्यविरुद्धलक्षणा अप्रमेयस्वरूपा भगवती देवीति भावः। वस्तुत-

स्तस्याः स्वरूपे एवंविधविरोधो नेत्युत्तरत्र वक्ष्यति। अस्मदादीनां भाषया यो विरोधो लक्ष्यते, स स्वभावतस्तस्याः सर्वथावर्तनात् परिहृतो भवतीति विरोधाभासोऽलङ्कारः। शर्वस्य शक्तिरिति पाठान्तरम् ॥२॥

**तामाहुर्जगदम्बां  गौरीं केचित्परे कालीम् ॥**
**सा गौरी महिलातनु-  रम्बरतनुरुच्यते काली ॥३॥**

तामिति– केचित् विदः तां जगदम्बां लोकमातरं गौरीमाहुः, परे अन्ये तां कालीमाहुः। उभयथाऽपि एकैव सा जगदम्बेत्यर्थः। सा महिलातनुः स्त्रीशरीरा सती गौरी भवति, सैव अम्बरतनुः आकाशशरीरा सती काली उच्यते। तस्मान्नामरूपभेदेऽपि स्वरूपेणाभेदा जगदम्बेत्युक्तम् ॥३॥

महिलातनुरम्बा पूर्वं स्तुता। इह काल्यास्तत्त्वं व्याख्याय तद्वैभवं पुरस्ताद्व्याचष्टे ॥

**पाचकशक्तेः काल्याः  केवललिङ्गेन भिद्यते कालः ॥**
**यत्पाकतो गभीराद्  भुवने सर्वेऽपि परिणामाः ॥४॥**

पाचकेति– कालः भूतादिव्यवहारहेतुः पाचकशक्तेः पचति सर्वं परिपक्वं करोतीति पाचकः महाकालो रुद्रः तस्य शक्तिः तस्याः पञ्चमी, केवललिङ्गेन लिङ्गमात्रेण भिद्यते। कालः पुंल्लिङ्गः काली स्त्रीलिङ्ग इत्येष एव भेदः काली-कालयोरिति भावः। गभीरात् अत्यन्तमगाधात् यत्पाकतो यस्य कालस्य पाकतः पचनकर्मणः परिपाककार्यात् भुवने लोके सर्वे सकला अपि परिणामाः परिपाकाः भवन्तीति शेष.। सर्वस्यापि सृष्टस्य वस्तुनः रूपाद्रूपान्तरप्राप्तिर्भवतीत्यर्थः ॥४॥

**सर्वभुवनाश्रयत्वात्  काली नाम्ना दिगन्येन ॥**
**लोके तु व्यवहरणं  विदुषां दिक्कालयोर्भाक्तम् ॥५॥**

सर्वेति– सर्वभुवनाश्रयत्वात् सर्वेषां भुवनानाम् आश्रयः अधिष्ठानम् अधिकरणम् इति यावत्, तस्य भावस्तस्माद्धेतोः काली अन्येन नाम्ना नामान्तरेण

दिक् देश: भवति, लोके विदुषां बुधानां दिक्कालयो: दिश: कालस्य च व्यवहरणं व्यवहार:, भाक्तं गौणम्। पूर्वं काली कालात्मेत्युक्तं, इह सा देशात्मापीति कथितम्। विदुषां देश-कालव्यवहारस्तु गौण: न मुख्य:, उभयोरपि मूलरूपं काल्येवेति सिद्धान्तात्। देशकालव्यापारविवरणेनैकैव देवीति विशदयति ॥५॥

**दिगदितिरगाद्यखण्डा परिणमयित्री स्मृता काली ॥**
**दक्षस्यैका दुहिता सा द्वे गुणभेदमुग्धदृशाम् ॥६॥**

दिगिति– दिक् अखण्डा अदिति: अगादि अभ्यधायि। देशस्य विभुत्वात् सकलपरिच्छेदकावकाशोऽपि स्वयम् अपरिच्छेद्यत्वात् अदितिरिति नाम। कथम्? दो–अवखण्डने इति धातोर्निष्पन्नत्वात् खण्डार्थको दितिशब्द:, तस्मादखण्डा अदितिरिति आख्यातम्। काली परिणमयित्री परिपाकविधात्री स्मृता। सा पाचकशक्तिरिति प्रागुक्ते:। एवमुभे अप्येकैवेत्याह। दक्षस्य प्रजापते: एकैव दुहिता पुत्री सती देवी, सा द्वे अदिति: काली इति भवति। केषाम्? गुण-भेदमुग्धदृशा, गुणभेदेन सर्वाश्रयस्थैर्य-सर्वपरिणमनगुणयो: भेदेन मुग्धा मूढा दृष्टिर्येषां तेषां गुणभेददर्शनविमोहितबुद्धीनाम् एकाऽपि सती पृथक् द्वे भवत: ॥६॥

**देहे देहे सेयं कुण्डलिनी नाम जगदम्बा ॥**
**सा स्वपिति संसृतिमतां युञ्जानानां प्रबुद्धा स्यात् ॥७॥**

देहे इति– सेयम् अदिति: कालीति नामभेदेनोक्ता जगदम्बा लोकमाता देहे देहे प्रतिदेहं कुण्डलिनी नाम कुण्डलिनीति ख्याता भवतीति शेष:। सा संसृतिमतां संसारिणां पामराणां देहेषु स्वपिति पामरदेहेषु सुप्ता भवतीत्यर्थ:। युञ्जानानां योगिनां प्रबुद्धा स्यात् योगिदेहेषु उन्निद्रा भवेत्। कुण्डलिनी प्रति प्रथमशतके व्याख्यातम् ॥७॥

**मूलाधारादग्नि- र्ज्वलति शिरस्त: शशी द्रवति ॥**
**कुण्डलिनीमयि मन्ये वीणाशयनात्प्रबुद्धेयम् ॥८॥**

मूलेति– मूलाधारात् षण्णामाधारचक्राणामादिमात् अग्निर्ज्वलति दीप्तो भवति, शिरस्त: सहस्रारात् शशी सोमो द्रवति अमृतं स्रावयतीत्यर्थ:। सह-

स्रारस्यामृतांशुनिलयत्वं मूलाधारस्याग्निकुण्डत्वं च योगिषु प्रसिद्धे। कुण्डलिनीप्रबोधकाले एव योगिनि उक्तमग्निज्वलितं सोमस्रवणं च सम्भवतः। अत एवाह, इयं कुण्डलिनीशक्तिः, वीणाशयनात् मस्तकस्थलमारभ्य आमूलाधारं या अस्थिपञ्जरिका भवति सैव सादृश्यात् वीणेत्युच्यते सैव शयनं तस्मात् प्रबुद्धा इति मन्ये ऊहे। 'यातायातविहारे' 'नूतनुषु विहरन्तीं त्वां' (४ स्त. श्लो. ६-७) इति श्लोकद्वयव्याख्याने इदं तत्त्वं प्राक्प्रदर्शितम् ॥८॥

**यद् द्रवति तत्र किं त्वं    किं तत्र त्वमसि यज्ज्वलति ॥**
**किमु तत्रासि महेश्वरि    यदुभयमेतद्विजानाति ॥९॥**

यदिति— यत् शिरस्तः द्रवति तत्र त्वमसि किम्? यत् मूलाधारात् ज्वलति तत्र त्वमसि किम्? उत अथवा, भोः महेश्वरि! एतदुभयं सोमद्रवणमूलम् अग्निज्वलनमूलं द्वयं च कर्म, यत् कर्तृ, विजानाति तत्रासि किम्? अग्निश्च सोमश्च यत्र प्रतिष्ठितौ तदेवोभयमूलम् उभयं च जानाति, तच्च सर्वेषामाधारचक्राणाम् आधारत्वेन स्थितं दहरपदवाच्यं हृदयाकाशमाहुः। किं तत्रासि त्वम्? ॥९॥

**एतावग्नीषोमौ    ज्वालाभिश्चन्द्रिकाभिरपि ॥**
**आवृणुतस्तनुमनयो-    र्व्यक्तित्वं मे पशुर्भवतु ॥१०॥**

एताविति— एतौ मम त्वाचप्रत्यक्षविषयौ अग्नीषोमौ मूलाधाराग्निः सहस्रारसोमश्च ज्वालाभिः दीप्तिभिः, चन्द्रिकाभिः शीतमरीचिभि. तनुं शरीरम् आवृणुतः, अग्निः ज्वालाभिर्देहमावृणोति सोमो ज्योत्स्नाभिश्चेति क्रमेणैव समन्वयः। अनयोः अग्नीषोमयोः मे मम व्यक्तित्वं साहङ्कारं पृथगात्मत्वं 'व्यक्तिस्तु पृथगात्मता' पशुः आलभ्यो भवतु। प्रथमस्तबके दक्षयागकथा व्याख्याता, अत्र कविस्वानुभवप्रसक्त्या अग्निष्टोमस्य तत्त्वार्थो व्याख्यातः ॥१०॥

**अग्निस्त्वं सोमस्त्वं    त्वमधो ज्वलसि द्रवस्यूर्ध्वम् ॥**
**अमृतमनयोः फलं त्वं    तस्य च भोक्त्री चिदम्ब त्वम् ॥११॥**

अग्निरिति— अम्ब! अग्निः त्वं, त्वमग्निरूपेणासीत्यर्थः, सोमस्त्वं सोमरूपेणापि त्वमेवासीत्यर्थः। त्वम् अधः मूलाधारात् ज्वलसि, न केवलमग्निरसि;

ज्वलनक्रियाऽप्यसि इत्यर्थः। ऊर्ध्वं सहस्रारात् द्रवसि द्रवणक्रियाऽप्यसि, अनयोरग्नीषोमकार्यज्वलन-द्रवणयोः फलम् अमृतं भोग्यं च त्वं, तस्यामृतस्य भोक्त्री चित् चितिरपि त्वम्। एवं भोक्त्री चित्, भोग्यम् अमृतं, भोगक्रिया ज्वलनद्रवणात्मिका भोगकरणभूतौ अग्नीषोमौ इति सर्वमपि त्वमेव भवसि ॥११॥

**किन्नु सुकृतं मया कृत- मखिलेश्वरि किं तपस्तप्तम् ॥**
**क्रीडयसि मां प्रतिक्षण- मानन्दसुधानिधावन्तः ॥१२॥**

किन्न्विति— अखिलेश्वरि! सर्वेश्वरि मया किं सुकृतं पुण्यं कृतम् आचरितम्? नु वितर्के। किं तपस्तप्तम्? कीदृशं वा कायक्लेशजनकचान्द्रायणादिव्रतम् अनन्यविषयध्यानरूपं वा किं तपः अनुष्ठितम्? यस्य सुकृतस्य तपसो वा फलत्वेन मयि असाधारणं प्रसादं कुरुषे इत्युत्तरार्धेनाह। मां प्रतिक्षणं क्षणे क्षणे विच्छेदराहित्येनेति यावत्, अन्तः अन्तरे आनन्दसुधानिधौ आनन्दामृतसागरे क्रीडयसि क्रीडन्तं कुरुषे? ईदृशस्य असामान्यविलासलाभस्यानुगुणं मदाचरितपूर्वं सुकृतं तपो वा न जाने इति भावः ॥१२॥

**क्षान्तं किं मम दुरितं शान्तं किं देवि ते स्वान्तम् ॥**
**अनुगृह्णासि विचित्रं मामप्यपराधिनां प्रथमम् ॥१३॥**

क्षान्तमिति— देवि! मम दुरितं पापं क्षान्तं किं किं सोढम्? पापप्रमार्जनं कृतं वेति पृच्छति। ते स्वान्तं मनः शान्तं किम्? मम विषये तव क्षमया शान्तिर्जाता किम्? प्रसन्नाऽसि किमित्यर्थः। एवं प्रश्नस्य हेतुमाह। अपराधिनां दोषिणां प्रथममाद्यं मामपि अनुगृह्णासि अनुग्रहपात्रं करोषि, विचित्रम् आश्चर्यम् ॥

कथमिह कविरात्मानम् अपराधिनां प्रथममाह? लोके पापविलसितं समस्तं स्वीयत्वेनाभिमान्य अहं पापिनामग्रणीरिति ब्रवीति। अतः प्रथमशब्देन प्रथमगण्यत्वं गम्यते। 'उदारचरितानां तु वसुधैव कुटुम्बकम्' इति अस्य महासत्त्वता व्यज्यते ॥१३॥

**काले काले सन्ध्या-　　रूपा नोपासिता भवती ॥**
**विच्छिन्नः स्मार्ताग्नि-　　स्त्रेता कुत एव वह्नीनाम् ॥१४॥**

काले इति— काले काले श्रौत-स्मार्तकर्मानुष्ठानाय विधिविहितेषु कालेष्वित्यर्थः, सन्ध्यारूपा, सन्धौ अहोरात्रसन्धौ भवा सन्ध्या सा रूपं यस्याः सा भवती न उपासिता मया न सेविता। सायं-प्रातस्सन्ध्यावन्दनमपि न कृतम्। स्मार्ताग्निः औपासनाग्निः विच्छिन्नः उद्वाहात्परम् आहित-विच्छिन्नस्याग्नेः पुनः सन्धानं न कृतम्। स्मार्ताग्नावेव विच्छिन्ने श्रौताग्निविषये का कथेत्याह । वह्नीनां त्रेता त्रयाणां भावः त्रिता त्रितैव त्रेता पृषोदरादित्वादेत्वमिति पूर्वे व्याख्यातारः, कुत एव? दाक्षिणात्यगार्हपत्याहवनीयानां श्रौताग्नीनां त्रयमेव त्रेता कुतो न विच्छिन्ना विच्छिन्नैव। स्मार्ताग्निविच्छेदे श्रौताग्निविच्छेदप्रसङ्गाभावात्। एवं विधिविहितश्रौत-स्मार्तकर्माकरणेऽपि मम अनुग्रहं करोषि ॥१४॥

**दातुं नार्जितमन्नं　　बहु देवेभ्यश्च भूतेभ्यः ॥**
**यत्किञ्चिदर्जितं वा　　कलत्रपुत्रान्वितोऽश्नामि ॥१५॥**

दातुमिति— देवेभ्यः भूतेभ्यश्च दातु बहु बहुलं यथेष्टम् अन्नं नार्जितम् न सम्पादितम्। यत्किञ्चिदर्जितम् वा ईषत्सम्पादितमपि कलत्र-पुत्रान्वितः अश्नामि भुनज्मि, वैश्वदेवमपि नानुष्ठितम्। पञ्चमहायज्ञेषु वेदपाठः पितृतर्पणमुभे च वर्जयित्वा अन्ये न अनुष्ठिताः। 'पूजासपर्याऽध्ययनं ब्रह्मयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्' इति स्मृतिः कर्तव्यान् पञ्चमहायज्ञानाह। तत्र अतिथिपूजनमपि अकृत्वा स्वार्थपरोऽभवम् इति भावः ॥१५॥

**कश्चिदपि पापहारी　　न पुरश्चरितश्च ते मन्त्रः ॥**
**कं गुणमभिलक्ष्य मम　　प्रबुद्ध्यसेऽन्तर्जगन्मातः ॥१६॥**

कश्चिदिति— पापहारी पापनाशनः कश्चिदपि ते तव मन्त्रः न पुरश्चरितः यथोक्तसङ्ख्याभिः न जप्तः । मन्त्रान् बहून् विदन्नपि तन्त्रोक्तविधिना जपपुरश्चर्या न अलक्षयम्। जगन्मातः! जगज्जननि, एवंभूतस्य

मम कं गुणम् अभिलक्ष्य विलोक्य अन्तः प्रबुध्यसे ममान्तरे जातप्रबोधा विलससि ? ॥१६॥

**तव मयि पृथक्तनूज- प्रेमा चेत्पक्षपातोऽयम् ॥**
**अथवा सतां निसर्गः सोऽयं त्वयि चाम्ब सम्भाव्यः ॥१७॥**

तवेति— अम्ब ! मयि पृथक् पार्थक्येन विशिष्टतयेत्यर्थः तनूजप्रेमा पुत्रप्रीतिश्चेत्, यद्यपि लोके सर्वेऽपि तव जाता एव तथाऽपि मयि विशिष्टतया प्रीतिस्तवास्ति चेत्, अयं पक्षपातः भवेदिति शेषः। सर्वेषामेकाऽसि त्वं हि माता। पक्षपातेऽपि न दोष इति अर्थान्तरं न्यस्यति। अथवा पक्षान्तरे सतां सज्जनानां निसर्गः स्वभावः स पक्षपातः, बहुषु पुत्रेषु कस्मिंश्चित् उचितः पक्षपातः इत्यर्थः। अम्ब, अयं त्वयि च सम्भाव्यः सम्भवितुं शक्यः सम्भवक्षमः इत्यर्थः। अनुग्रहहेतुस्तव पक्षपात एव हेतुः, न पुनर्मम गुण-कर्मादि-योगसाधनविशेषाः मया भुज्यमानस्य योगानुभवस्येति भावः ॥१७॥

**लक्ष्यं विनैव मन्त्रः किं सिद्धयति कोटिशोऽप्युक्तः ॥**
**दध्मस्तद्यदि लक्ष्यं तव रूपं गलति हा मन्त्रः ॥१८॥**

लक्ष्यमिति— कोटिशः कोटिसङ्ख्यया जप्तोऽपि पुरश्चरितोऽपि मन्त्रः लक्ष्यं विनैव बहिर्देवविग्रहादौ अन्तः आधारचक्रादौ वा ध्यानगम्यं किमपि वर्जयित्वैव किं सिध्यति ? लक्ष्यं विना न मन्त्रसिद्धिरित्यर्थः। तत् तस्मात् लक्ष्यं तव रूपं दध्मो यदि मनसा बिभृमो यदि, हा कष्टम् ! ! मन्त्रः गलति, जप्यमानो मन्त्र एव हीयते, मनसा तव रूपे लक्ष्ये ध्यायमाने, मन्त्रो जप्त्रा मनसा त्यक्तो भवति, इदं महत् कष्टम् ॥१८॥

**सङ्कल्पानां वाचा- मनुभूतीनां च यन्मूलम् ॥**
**यत्र प्राणो बद्ध- स्तल्लक्ष्यं देवि ते रूपम् ॥१९॥**

सङ्कल्पानामिति— देवि ! सङ्कल्पानां चित्तवृत्तिविशेषाणां वाचाम् उक्तीनाम् उच्चार्यमाणशब्दानामिति यावत्, अनुभूतीनां सकलवेदनानां च मूलम्

उदयस्थानं यत्, यत्र यस्मिन् प्राणः श्वासवायुः बद्धः निरुद्धः तत् ते तव रूपं स्वरूपं लक्ष्यं ध्यानगोचरं भवतीति शेषः। वाक्प्राणमनोऽनुभूतीनां मूलस्थानं यद् वर्तते तदेव ते रूपं ध्यानस्य लक्ष्यं प्राप्तव्यं स्थानं भवतीत्यर्थः ॥१९॥

**नैसर्गिकस्ववृत्ते-　रहङ्कृतेर्मूलमन्विष्य ॥**
**त्वां किल साक्षात्कुरुते　रमणमहर्षेरियं दृष्टिः ॥२०॥**

नैसर्गिकेति— नैसर्गिकी स्वाभाविकी अयत्नसिद्धा स्ववृत्तिः स्वा निजा वृत्तिः आत्मीया वृत्तिः नैसर्गिकस्ववृत्तिः तस्याः अहंकृतेः अहमहमिति करणमेव अहङ्कृतिः सा च स्वभावसिद्धा वृत्तिः, तस्याः मूलम् उत्पत्तिस्थानम् अन्विष्य मृगयित्वा त्वां भगवती चित्स्वरूपिणी साक्षात्कुरुते किल अपरोक्षं पश्यति किल ऐतिह्ये। इयं रमणमहर्षेः मम गुरोः दृष्टिः साक्षाद्दर्शनं भवति। अहङ्कारस्य मूलान्वेषणेन मूलस्वरूपप्राप्तिः भवतीति श्रीमहर्षेः स्वानुभवादुपदेशो भवतीत्यर्थः ॥२०॥

**मन्ये पर्वतकन्ये　मम सेयमहङ्कृतिर्महती ॥**
**अवतरता वर्षगणै-　रपि तन्मूलं न लब्धमहो ॥२१॥**

मन्ये इति— पर्वतकन्ये ! पार्वति मम सेयं प्रस्तुता इयं अहङ्कृतिः महती बलिष्ठेति मन्ये तर्के। तत्र हेतुमाह। वर्षगणैः अवतरता शिरस्तः मनोवृत्तिस्थानात् हृदयं प्रति अवरोहता मया तन्मूलम् अहङ्कृतिमूलं न लब्धम्, अहो कष्टम्। यद्वा, अवतरता लोकान्तरादिहागत्य प्रयतमानेन मया तन्मूल तस्या अहङ्कृतेः मूल वर्षगणैः संवत्सरपूगैरपि न लब्धम्। 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इत्याहुः। स्वर्गस्थाः अहङ्कृतिमूलस्वरूपज्ञानान्मोक्षप्राप्तये मानुषं जन्म लभेरन्निति तत्त्वम्। अत एव श्रुतिर्भवति— 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः' इति। 'मध्ये वामनमासीनं विश्वे देवा उपासते'। इति। इह शरीरस्थं हृदयगं परमात्मानं देवाश्च उपासते। तस्मादहङ्कारस्य मूलं प्राप्तु परलोकादिह मानुषं जन्म मया लब्धम्। एवमवतरणेनापि इयता कालेन न तल्लब्धम् इति तात्पर्यम् ॥२१॥

**एष प्रौढो भगवति बहुलं गर्जत्यहङ्कारः ॥**
**एतस्मिन्नयि काले भवती चाबोधि कुण्डलिनी ॥२२॥**

एष इति– भगवति ! प्रौढः प्रवृद्धः एष मदीयोऽहङ्कारः बहुलमत्यधिकं गर्जति दर्पेण शब्दायते इत्यर्थः। अयि मातः ! एतस्मिन् प्रौढाहङ्कारगर्जनवति काले कुण्डलिनीशक्तिः भवती च अबोधि प्रबुद्धा असि। कुण्डलिनीप्रबोधे अहङ्कारप्राबल्यं न स्यात्। तथाऽपि प्रबल एव स हन्तव्य इति पुरस्ताद्वक्ष्यते ॥२२॥

**तव पश्चात्सम्भूतिं जानाति न सोऽयमद्यापि ॥**
**प्रागिव गर्जति धीरं बिभेति मृत्योर्न नेदिष्ठात् ॥२३॥**

तवेति– सोऽयमहङ्कारः अद्यापि तव पश्चात्संभूतिं पश्चात्प्रादुर्भावं न जानाति। अज्ञत्वादहङ्कारस्य, त्वं तस्य पश्चादाविर्भवसीति स न वेद। अहङ्कारनाशात्परं पूर्णः कुण्डलिनीप्रादुर्भाव इत्यर्थः। योगसाधने पश्चान्मार्गः पुरोमार्ग इति मार्गद्वयं राजयोगसारे प्रतिपादितम्। 'यातायातविहारे' (श. १, स्त. ४, श्लो. ६) इति श्लोके च प्रपञ्चितम्। अहङ्कारे पुरो वर्तमाने सति पश्चात् कुण्डलिनी भगवती प्रबुद्धा विलसति, एतदेव देव्याः पश्चात्सम्भूतिः तां न जानात्युद्धतोऽयं पुरो गर्जन्नहङ्कार इति भावः। अत एव प्रागिव कुण्डलिनीप्रबोधात्पूर्वमिव धीरं गर्जति घोषयति। नेदिष्ठात् अत्यन्तसमीपात् मृत्योः अन्तकात् न बिभेति। मृत्युभीतिरपि तस्य नास्ति। अत एव तं ते बलिं करवाणि इत्याह ॥२३॥

**अतिपुष्टमहङ्कारं पशुमेतं तुभ्यमर्पयते ॥**
**प्रमथपतिप्राणेश्वरि गणपतिरेकान्तभक्तोऽयम् ॥२४॥**

अतिपुष्टमिति– प्रमथपतिप्राणेश्वरि ! भूतेशप्राणनायिके देवि, एकान्तभक्तः अन्तरङ्गभक्तोऽनन्यदेवताकोऽयं गणपतिः तुभ्यम् अतिपुष्टं दृप्तम् एतं मम अहङ्कारं पशुं बलिम् अर्पयते। पुष्टः पशुरेव युक्तं होमद्रव्यं भवति। तं बलिमादाय कुरु कर्तव्यमिति भावः ॥२४॥

**उपगीतयो गणपते- रुपतिष्ठन्तामिमाः प्रीत्या ।।**
**उत्सवसहस्रलोला- मुकारवाच्यस्य गृहनाथाम् ।।२५।।**

उपगीतय इति– गणपतेः स्तोतुः कवेः इमा उपगीतयः उपगीतिवृत्त-रचिताः स्तुतयः उत्सवसहस्रलोलाम् उत्सवानाम् उत्सेकाना सहस्रेषु लोलां चलां, कुण्डलिन्याः सन्ततविलासाः तदुत्सेकाः तेषु चलन्तीम् इत्यर्थः। 'उत्सेकामर्ष-योरिच्छा प्रसवे मह उत्सवे' इत्यमरः। उकारवाच्यस्य उवर्णपदार्थभूतस्य शिवस्य गृहनाथां गृहिणीं पार्वतीम् उपतिष्ठन्ताम् उपस्थाय सेवन्ताम् ।।२५।।

चतुर्दशः स्तबकः सव्याख्यः समाप्तः ।।

# पञ्चदशः स्तबकः

अथास्मिन्पञ्चदशे स्तबके देव्याः वैभवप्रसक्त्या तद्ध्यानप्रकारप्रस्तावो भवति ॥

**आपदामपहरन्तु ततिं नः सम्पदामपि दिशन्तु समृद्धिम् ॥**
**दन्तकुन्दरुचिदत्तबलानि व्योमकेशसुदृशो हसितानि ॥१॥**

आपदामिति— दन्तकुन्दरुचिदत्तबलानि दन्ताः कुन्दानि माघीकुसुमानीव दन्तकुन्दास्तेषां रुचिभ्यः कान्तिभ्यो दत्तं बलं यैस्तानि, व्योमकेशसुदृशः व्योमकेशस्य शिवस्य सुदृशः कान्तायाः पार्वत्याः हसितानि नः अस्माकमापदां विपदां ततिं संहतिम् अपहरन्तु निवारयन्तु, सम्पदां श्रियां समृद्धिं पुष्कलतां दिशन्तु ददतु। कुन्दकुसुमोपमरुचिरदन्तरुचिभ्योऽपि बलदानकथनात् हसितानां शुभ्रशोभावहत्वं गम्यते। हसितानीति बहुवचनात् क्षणक्षणविलासित्वं मन्दत्वं च द्योत्येते। आपन्निवारण-सम्पद्वितरणदक्षाणि देवीमन्दहसितानि स्तबकादौ स्तुतानि ॥१॥

**अल्पमप्यधिकशक्तिसमृद्धं मन्दमप्यधिकसूक्ष्मविसारम् ॥**
**सुस्मितं स्मरविरोधिरमण्याः कल्पतां मम कुलस्य शुभाय ॥२॥**

अल्पमिति— अल्पं तन्वपि अधिकशक्तिसमृद्धं अधिकया अनल्पया शक्त्या समृद्धं पूर्णं, मन्दम् अलसमपि अधिकसूक्ष्मविसारम् अधिकसूक्ष्मः अत्यन्तसूक्ष्मः वेगप्राबल्यात् स्थूलदृगगोचरः विसारः प्रसारः यस्य तत् स्मरविरोधिरमण्याः कामारिकान्तायाः देव्याः सुस्मितं शोभनमन्दहसितं मम कुलस्य शुभाय मङ्गलाय कल्पतां प्रभवतु। अल्पमप्यनल्पशक्ति, मन्दमप्यमन्दविसारि मन्दस्मितं सकलकुलमङ्गलाधानसमर्थं प्रार्थितम् । कामविरोधिनोऽपि कामाधायिनीति साभिप्रायं स्मरविरोधिरमणीपदम्। एवं सर्वत्र अन्योन्यविरोध एव कथितः। सुस्मितप्रभावात् विरोधाभासः। 'हेतूनामसमग्रत्वे

कार्योत्पत्तिश्च सा मता' इति विभावना चन्द्रालोकलक्षणानुसारेण स्यात्। विरोधाभासे तु सुस्मितप्रभावाद् इति विरोधपरिहृतिहेतुराहार्यः ॥२॥

**पुष्कराद्रविमतो भुवमेतां　भूमितश्शशधरं क्रममाणा ॥**
**नैव मुञ्चति पदं बत पूर्वं　नोत्तरं व्रजति नेशपुरन्ध्री ॥३॥**

पुष्करादिति— ईशपुरन्ध्री ईश्वरयोषा देवी पुष्करात् आकाशात् परमाद्व्योम्नः इत्यर्थः, रविम्, अतोऽस्माद्रवेः एतां भुवं भूमिं, भूमितः भूलोकात् शशधरं चन्द्रं क्रममाणा पादेन गच्छन्ती, पूर्वं पदं पादन्यासं नैव मुञ्चति, उत्तरं पदं च न व्रजतीति न, व्रजत्येव, बत आश्चर्यम्। देवी सर्गादिः पुष्करात् प्रस्थाय रवौ पादं निधत्ते, ततः भुवि, ततश्चन्द्रे। एवं पादविक्षेपे पूर्वस्मिन् रवौ निहितं पदम् अविहायैव उत्तरं पदं भूमौ न्यस्यति, उभयत्राप्यत्यक्तपदक्रमा सदा चन्द्रे पादन्यासं कुरुते। इदम् आश्चर्यम्। पूर्वं पदं मुक्त्वैव उत्तरं पदं न्यस्यति लोकः; इयं तु असाधारणपदक्रमेति आश्चर्यं जनयत्यस्माकम्। भगवत्या उत्तरोत्तरसृष्टौ विधीयमानायां पूर्वपूर्वसृष्टिर्न त्यक्ता नोपेक्षिता, तत्तस्या वैभवमिति तात्पर्यम् ॥३॥

**भूषणेष्विव सवित्रि सुवर्णं　मृत्तिकामिव घटेष्वखिलेषु ॥**
**विश्ववस्तुषु निरस्तविशेषां　देवि पश्यति सतीं विबुधस्त्वाम् ॥४॥**

भूषणेष्विति— देवि सवित्रि! जननि, भूषणेषु आभरणेषु सुवर्णं हिरण्यमिव, अखिलेषु घटेषु कुम्भेषु रूपेषु मृत्तिकामिव, यथा कटकरुचकादिषु रूपेषु सुवर्णमेव तेषां स्वरूपं भवति, यथा च मृत्तिकैव स्वरूपं घटानां, तथा त्वं सर्वस्य स्वरूपमसीत्यर्थः। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति छन्दोगाः। अद्वितीयसर्वमयी सर्वेश्वरी विबुधस्य प्रत्यक्षेति भावः। निरस्तविशेष इति च पाठः। निरस्तविशेषामिति पाठे निर्विशेषां त्वां भगवतीमित्यर्थः। विश्ववस्तुषु विश्वस्मिन् सर्वत्र वस्तुषु पदार्थेषु निरस्तविशेषो निरस्तः अपाकृतः विशेषो भेदो येन स विबुधो विद्वान् सतीं निर्विशेषसत्तामात्रेणावस्थितां त्वां पश्यति ॥४॥

**किट्टभूतमखिलेश्वरजाये दृश्यजातमखिलं निजपाके ॥**
**प्राणबुद्धिमनसामिह वर्गः सारभूत इति सूरिजनोक्तिः ॥५॥**

किट्टभूतमिति– अखिलेश्वरजाये ! सर्वेश्वरसहधर्मिणि, निजपाके निजे स्वीये पाके पचनक्रियायां तव परिणमनकर्मणीति यावत्, अखिलं दृश्यजातं समस्तं दृग्गोचरं स्थूलं वस्तुजालं किट्टभूतं किट्टमिव असारांशभूतं मलं भवति, 'किट्टं मलोऽस्त्रियाम्' इत्यमरः। प्राण-बुद्धि-मनसां प्राणानां बुद्धीनां मनसां च वर्गः समूह. सारभूतः सारो भूत. सारतां गत इति सूरिजनोक्ति., विदुषां वचनम्। भूतपदमिह स्वरूपवाचि, न तु सादृश्यपरम्। भूप्राप्तावित्यस्य 'आधृषाद्वा' इति णिजभावे रूपम्। स्थूलं वस्तु सर्वं सारांशमावृत्य किट्टवत् स्थितम्। तस्य पचने प्रवृत्ते, तत्तद्वस्तु तत्तत्सारं विसृजति। स्थूलस्य किट्टत्वं ततोऽपि सूक्ष्मस्य तत्सारत्वं चाभिप्रेत्य श्रुतय उद्घोषयन्ति। अत एव सूरिजनोक्तिरिति उक्तम्। तथा च तैत्तिरीयकाः समामनन्ति 'पृथिव्या ओषधय ओषधीभ्योऽन्नम् अन्नात्पुरुषः स वा एष पुरुषोऽन्नरसमयः' इति पुरुषस्य सारभूततोक्ता। छान्दोग्ये च उद्गीथविद्याप्रस्तावे 'पृथिव्या आपो रसः अपामोषधयो रसः ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसः वाच ऋग्रसः ऋचः साम रसः साम्न उद्गीथो रसः' इति स्थूलात् सूक्ष्मस्य सूक्ष्मात् सूक्ष्मतरस्य च सारांशतामाह श्रुतिः। 'अन्नमशितं त्रेधा विधीयते।' इत्युपक्रम्य छान्दोग्ये षष्ठे प्रपाठके अन्नाप्तेजसां सारांशाः एव मनःप्राणवाचः इति आम्नातम्। सर्वमिदं दृश्यं ब्रह्माण्डम् अस्मदादीनां स्थूलदृष्टेः स्थायिवत् भासमानं वस्त्वपि सर्वेश्वर्या महाशक्त्या परिपच्यमानं परिणमदेव स्वसारं प्राणादिकं दददेव वर्तत इति कवेः हृदयम् ॥५॥

**सारमीश्वरि तिलेष्विव तैलं विग्रहेषु निखिलेषु निगूढम् ॥**
**ये धिया मथनतो विदुरेकं ते भवन्ति विबुधास्त्वयि लीनाः ॥६॥**

सारमिति– ईश्वरि ! तिलेषु धान्यविशेषेषु तैलमिव निखिलेषु सकलेषु विग्रहेषु शरीरेषु निगूढं गुप्तमन्तर्गतम् एकं मुख्यम् अद्वितीयं वा सारं स्थिरांशं रसाख्यं कर्म, ये धिया बुद्धया सूक्ष्मया करणेन, मथनतः विलोडनात् विदुः जानन्ति, ते विविबुधाः द्वांसः त्वयि लीनाः भवन्ति लयं गत्वा त्वदात्मतां भजन्त इत्यर्थः।

'तिलेषु तैलं दधनीव सर्पिरापः स्रोतस्स्वरणीषु चाग्निः। एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति' (श्वेताश्वतरोपनिषत् १-१५) ॥६॥

**आयसं त्रिभुवनेश्वरि पिण्डं　वह्निनेव तपसा तनुपिण्डम् ॥**
**यस्य चिज्ज्वलनजालमयं स्यात्　तप्तमम्ब स तवालयभूतः ॥७॥**

आयसमिति– त्रिभुवनेश्वरि, त्रिलोकनायिके ! वह्निना अग्निना तप्तं ज्वलितम् आयसम् अयसो लोहस्येदम् आयसं पिण्डम् इव यस्य तनुपिण्डं तनुरेव पिण्डं घनं वस्तु शरीरमिति यावत् तपसा तप्तं सत् चिज्ज्वलनजालमयं चिदेव ज्वलनः तस्य जालं संहृतिः तद्विकारः स्यात् भवेत् सः जनः तवालयभूतः भवतीति शेषः। यथा अग्निज्वलितं लोहपिण्डं ज्वलनमयं भवति, तथा योगिनः तपस्तप्तं शरीरं ज्ञानज्वालमयं भवेत्। यस्य योगिन एवं ज्वलितं चिन्मयशरीरं भवति स धन्यः तव आवासस्थानं भवतीति तात्पर्यम् ॥७॥

**योऽरणेर्मथनतोऽतिपवित्रं　वीतिहोत्रमिव वीतकलङ्कः ॥**
**प्राणमुज्ज्वलयति स्वशरीरात्　त्वामसावभयदेऽर्हति यष्टुम् ॥८॥**

योऽरणेरिति– अभयदे, देवि ! यः वीतकलङ्कः वीतः कलङ्कः पाप्मा यस्मात् सः अपहतपाप्मा पुरुषः, अरणेः निर्मन्थ्यदारुणः मथनतः विलोडनात् अतिपवित्रम् अत्यन्तपावनं वीतिहोत्रम् अग्निम् इव, स्वशरीरात् निजदेहात् प्राणं जीवनहेतुं प्राणाख्यं पवनम् उज्ज्वलयति 'वायोरग्निः' इति श्रुतेः असौ सः त्वा यष्टुं पूजयितुम् अर्हति। यथा मथनादग्निमरणेरुज्ज्वाल्य यष्टुमर्हति यजमानः, तथा तपोबलतः शरीरात् प्राणमुज्ज्वाल्यैव योगी त्वामर्चितुम् अर्हति। शरीरमेवारणिः, तपोध्यानादि मथनं, कुण्डलिनीप्रेरितप्राणज्वालैव अग्निः इति उपमानोपमेयविवेकः। एवमन्तर्यागसमाराध्या भगवती प्रतिपादिता। 'स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्याननिर्मथनाभ्यासाद्देवं पश्येत् निगूढवत्' (श्वेताश्वतरोपनिषत् १-१४) ॥८॥

**प्राणता श्वसितमेव विचार्यं　कुर्वता करणमेव निभाल्यम् ॥**
**गच्छता गमनमेव विशोध्यं　तत्तनौ मथनमागमबोध्यम् ॥९॥**

प्राणतेति– प्राणता श्वसता जनेन श्वसितमेव श्वासकर्मैव विचार्यम् आलोच्यम्। कुर्वता कर्माणि कुर्वता करणं क्रियाप्रचलनम् एव निभाल्य

निभालयितुम् आलोकितु योग्यम्, आलोचनीयमिति यावत्। गच्छता गमनक्रियावता गमनमेव विशोध्यम् परीक्षणीयम्, सर्वत्र निभाल्येत्यादेरर्थावृत्तिः। तत् प्राणन-करण-गमनानाम् आलोचनमेव तनौ शरीरे आगमबोध्यम् आगमैः वेदादिशास्त्रैः साधनैः बोध्यम् ग्राह्यं मथनं भवतीति शेषः। पूर्वश्लोके मथनप्रसक्तेः तत्स्वरूपमिह व्याख्यातम्। श्वसन् पुरुषः कथं श्वसिमि, कः श्वसिति ? इति विचारयेत् तथा श्वासस्य प्रत्यवेक्षणम् एकं मथनं, एवं कर्मणि क्रियमाणे, कः करोति कथं करोति ? इति बुद्धया पश्येत्, एवं निभालनं मथनं भवति, गमने एवमेव परीक्ष्यम्। इदं त्रय देहे प्राणोज्ज्वलनं मथनं भवतीति निगमागमतात्पर्यम्। इदं चावधेयम्। अकुर्वता अगच्छताऽपि श्वसतैव भूयते। तथा तूष्णींभावे च श्वसनान्ववेक्षणं मथनं स्यात्। तूष्णीं भवन्, कुर्वन्, गच्छन् वा सर्वथा मथनं चालयेत् इति भावः ॥९॥

**यो रसं पिबति मूर्धसरोजात् सोमपोऽयमनघः प्रयतात्मा ॥**
**अग्निहोत्रमखिलेश्वरि नित्यं मूलकुण्डदहनस्थितिरस्य ॥१०॥**

यो रसमिति– यो योगी मूर्धसरोजात् मूर्धनि शिरसि यत् सरोजं सहस्रारकमलं तस्मात् रसं स्रवन्तं पिबति अयं सोऽनघः अपाप्मा प्रयतात्मा प्रयतो नियत आत्मा अन्तःकरणं प्रकृतिः शरीरं वा यस्य स सोमपः सोमं पिबतीति सोमपो भवतीति शेषः। शिरस्तो द्रवतो रसस्य सोमात्मत्वात् अस्मिन्नन्तर्यागे यजमानस्य सोमपानस्वरूपमेव निरूपितम्। अखिलेश्वरि सर्वेश्वरि, अम्ब ! अस्य सोमपस्य नित्यं सदा अग्निहोत्रं, कालनियमो बहिर्याग इव नास्ति, कुतः ? अस्य नित्यं विच्छेदराहित्येन मूलकुण्डदहनस्थितिः मूलं मूलाधार एव कुण्ड तत्र यो दहनः अग्निः तस्य स्थितिः जाग्रत्तया वर्तनं भवतीति शेषः। नित्यं कुलकुण्डाग्निस्थितेरग्निहोत्रं नित्यमिति भावः ॥१०॥

**चिन्मयी पिबसि सोममिमं किं सोम एव किमसावसि मातः ॥**
**पीयसे पिबसि च स्वयमेका पेयपातृयुगलं किमु भूत्वा ॥११॥**

चिन्मयीति– अम्ब ! त्वं चिन्मयी भोक्त्री सती इमं सोमं सहस्रारात् स्रुतं पिबसि किम् ? मातः, त्वम् असौ सोमः पीयमानरस एवासि किम् ? अथवा पेय-पातृयुगलं पेयं पातृ च पेयपातृणी तयोः युगलं द्वयं भूत्वा स्वयं

पीयसे पिबसि च किमु? त्वमेव पात्री त्वमेव पेयं च भूत्वा उभयधर्ममवलम्बसे किम्? चिन्मय्यास्तवैकस्या एव भोक्तृता भोग्यता च भवतः किम् इति भावः ॥११॥

**तैजसं कनकमग्निवितप्तं　तेज एव कनकाङ्गि यथा स्यात् ॥**
**मोदरूपकलया तव तप्तं　तन्मयं भवति मोदजपिण्डम् ॥१२॥**

तैजसमिति— कनकाङ्गि! सुवर्णविग्रहे तेजोमयशरीरे इत्यर्थः, सुवर्णस्य तैजसत्वात् अग्निवितप्तं विशुद्धये अग्निना वितप्तं तैजसं तेजोमयं कनकं हेम तेज एव यथा स्यात् भवेत्, आकरजं तेज एव सुवर्णमित्याहुः अत एव तैजसमित्युक्तम्। तव मोदरूपकलया मोदरूपस्य आनन्दस्वरूपस्य कलया अंशेन तप्तं तपसा साधितं संस्कृतमिति यावत्, मोदजपिण्डम् आनन्दजातशरीरं तन्मयं मोदमयम् आनन्दमयमेव भवति। यथा आकरजं कनकरूपं तेजः संस्काराय अग्नितप्तं सत् तेज एव भवति, तथा 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति श्रुतिसिद्धम् आनन्दजातं शरीरपिण्डं तव आनन्दकलयैव संस्कृतम् आनन्दमयमेव भवतीति तात्पर्यम् ॥१२॥

**काऽपि मोदलहरी तव वीचि-　र्निर्गता दशशतारसुधाब्धेः ॥**
**पूरयत्यखिलमम्ब शरीरं　नेह वेद्मि परमे जडभागम् ॥१३॥**

काऽपीति— अम्ब! परमे उत्तमे, दशशतारसुधाब्धेः सहस्रारसुधासागरात् निर्गता तव मोदलहरी आनन्दलहरी काऽपि वीचिरूर्मिः अखिलं शरीरं पूरयति आत्मना पूरितं करोति। इह शरीरे जडभागम् अचेतनांशं न वेद्मि। सहस्रारात् निर्गत्य सर्वं मम देहम् आत्मना पूरयन्त्याः सुधावीचेः ममेयं दशा प्राप्ता यत्र सर्वं चिन्मयं मम शरीरम् अनुभवामि इति भावः ॥१३॥

**सेयमुत्तमतमा निपतन्ती　शीतलाद्दशशतारपयोदात् ॥**
**प्रेरितादखिलराज्ञि भवत्या　बुद्धिसस्यमवताद्रसवृष्टिः ॥१४॥**

सेयमिति— अखिलराज्ञि! अम्ब, सेयं तथाविधेयं मयेदानीमनुभूयमाना उत्तमतमा रसवृष्टिः रस एव वृष्टिः वर्षणं शीतलात् सुखस्पर्शाद् भवत्या प्रेरिताद् दशशतारपयोदात् दशशतारं सहस्रारमेव पयोदः मेघस्तस्मात् निपतन्ती अधो व्याप्नुवन्ती, बुद्धिसस्यं बुद्धिर्बोध एव सस्यं क्षेत्ररूढं धान्यम्

अवताद्रक्षतु। शरीरमेव क्षेत्रं तत्रोदितो बोध एव सस्यं सहस्रारं मेघः रस एव वृष्टिः इति विविच्य ग्राह्यम् । स्फुटं रूपकम् ॥१४॥

**दुग्धसिन्धुमथनादमृतं वा शब्दसिन्धुमथनात्प्रणवो वा ॥**
**लभ्यते सुकृतिभिस्तव वीचि- मूर्धकञ्जमथनाद्रस एषः ॥१५॥**

दुग्धेति– अम्ब ! दुग्धसिन्धुमथनात् क्षीरसागरमथनात् अमृतं वा इव, ब्दसिन्धुमथनात् शब्द एव सिन्धुः सागरः तस्य मथनात् प्रणवो वा इव, र्कञ्जमथनात् शिरःकमलस्य सहस्रारस्य मथनादेष रसः तव आनन्दस्व- ायाः वीचिस्तरङ्गः सुकृतिभिः पुण्यवद्भिर्लभ्यते प्राप्यते। यथा सुधाब्धेः नात् तत्सारभूतममृतं लभ्यते, यथा शब्दानां मथनेन तत्सारः प्रणवो लभ्यते, ा सहस्रारमथनात् सोमरसः तवानन्दकला लभ्यत इति भावः ॥१५॥

**अस्थिषु प्रवहति प्रतिवेगं मज्जसारममृतं विदधाना ॥**
**बिभ्रती मदमनुष्णमदोषं मूर्धकञ्जनिलये तव धारा ॥१६॥**

अस्थिष्विति– मूर्धकञ्जं सहस्रारकमलं निलयः आलयः यस्याः तस्याः बुद्धिः, मूर्धकञ्जनिलये, अम्ब ! तव धारा सोमरससम्पात इत्यर्थः, अस्थिषु जसारम् अस्थ्नः अन्तर्द्रवसारः तस्यापि सारभूतम् अमृतं विदधाना वितन्वाना ुष्णं न उष्णम् अदोषम् अविद्यमानदोषं मदं बोधविशेषं, मदसामान्यं तु सदोषं स्मृतिकारकदोषदूषितं, उष्णं तापदं च, अतथाविध मदं बिभ्रती धारयमाणा प्रतिवेगं वेगे वेगे प्रतिप्रवाहम् इत्यर्थः, 'वेगः प्रवाहजवयोरपि' इत्यमरः। प्रव- हति। "मज्जन्"शब्दः नकारान्तः टाबन्तोऽप्यभ्युपगम्यते 'ऊष्मया सार्धमूष्मा- ऽपि मज्जोक्तौ मज्जया सह' इति द्विरूपकोशम् उदाहरति तत्त्वबोधिनीकारः। मज्जत्यस्थिषु इति मज्जा अस्थिसारः ॥१६॥

**तैत्तिरीयकथितो रसलाभः सोऽयमेव सकलागमवर्ण्ये ॥**
**एतदेव शशिमण्डलनाथे तन्त्रभाषितपरामृतपानम् ॥१७॥**

तैत्तिरीयेति– सकलागमवर्ण्ये ! सर्ववेदस्तुत्ये, अम्ब, सोऽयमेव इहानु- भूयमानः मज्ज्ञोऽन्तः प्रवहन् सहस्रारसोमः एव तैत्तिरीयकथितः तैत्तिरीयश्रुतौ

'रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति कथितः रसलाभः भवतीत्यध्याहार्यम्। भोः शशिमण्डलनाथे! सोममण्डलनायिके एतदेव तन्त्रभाषितपरामृतपानं तन्त्रशास्त्रेषु भाषितं प्रोक्तं परम् उत्कृष्टम् अमृतपानं भवति वैदिकाः वहिर्यागे सोमरसमिव तान्त्रिकेषु मध्ये कौलाचाराः बहिः देव्यै निवेदितं सुरामृतं पिबन्ति। उभयोस्तत्त्वमन्तरदोषानुष्णमदमोदलहरीधायी सहस्रारसोम एवेति निर्णयः ॥१७॥

**मूर्धसोममजरामररूपे　युक्तवीक्षणकरेण निपीड्य ॥**
**शम्भुसुन्दरि सुनोमि धिनोमि　त्वां प्रदीप्तकुलकुण्डनिशान्ताम् ॥१८॥**

मूर्धेति– शम्भुसुन्दरि! शङ्करकान्ते, अजरामररूपे अजरं जरारहितम् अमररूपं देवरूप यस्याः तस्याः सम्बुद्धिः, मूर्धसोमं मूर्धनि यः सोमो रसवान् तं युक्तवीक्षणकरेण युक्तं योगस्थं वीक्षणम् आलोकनमेव करस्तेन निपीड्य सुनोमि सवं करोमि, अभिषवणफलके सोमं निष्पीड्य रसमादाय यथा सवं करोति यजमानो यागे तथाऽहं मूर्धनि सोमं निष्पीड्य ततः पवमानं रसं सुनोमि। निष्पीडनसाधनं बहिर्यागे करः, इह योगदृष्टिः इति तात्पर्यम्। तथा सुत्वा प्रदीप्तकुलकुण्डनिशान्तां ज्वलितकुलकुण्डाग्निनिलयां मूलाधारस्थां त्वां धिनोमि तर्पयामि। एवमग्नीषोमीयमन्तर्यजनं मया क्रियत इति भावः ॥१८॥

**दृष्टिरेव रविदीधितिरुग्रा　शीर्षकञ्जशशिनं प्रविशन्ती ॥**
**शीतलामृतमयी खलु भूत्वा　योगिनो द्रवति मोदकला ते ॥१९॥**

दृष्टिरिति– दृष्टिरेव योगदृष्टिरेव उग्रा चण्डा रविदीधितिः रवेः सूर्यस्य दीधितिः कान्तिः, शीर्षकञ्जशशिन सहस्रारकमलस्थं चन्द्रं प्रविशन्ती शीतलामृतमयी भूत्वा ते तव मोदकला सती द्रवति स्रवति। अयं भावः। न स्वयंप्रकाशश्चन्द्रः, उष्णा सूर्यकान्तिः एव चन्द्रबिम्बे प्रतिफलिता शीतला चन्द्रिका भवतीति दैववित्सिद्धान्तः। अत्र देव्येव प्रथमं योगिनो योगदृष्टिः सहस्रारं प्रविश्य ततोऽमृतमयीम् आनन्दलहरीमादधाति इति भावः ॥१९॥

**मूर्धनि द्रवसि योगयुतानां चक्षुषि ज्वलसि शङ्करभामे ॥**
**तिष्ठसि स्थिरपदा कुलकुण्डे बाह्यतः स्खलसि नैव कदाऽपि ॥२०॥**

मूर्धनीति– शङ्करभामे शिवप्रिये ! अम्ब ! योगेन युतानां योगयुतानां नित्ययोगिनां मूर्धनि शिरसि द्रवसि तव तत्रस्थसोमात्मकत्वात्, चक्षुषि तेषां दृष्टौ ज्वलसि दीप्यसि तवैव वस्तुतो द्रष्टृत्वात्, कुलकुण्डे मूलाधारे स्थिर-पदा स्थिरम् अचञ्चलं पदं स्थानं यस्याः सा सती तिष्ठसि स्थिताऽसि। बाह्यतः उक्तेभ्यः स्थानेभ्यः बहिः कदाऽपि नैव स्खलसि च्युताऽसि। योग-युतानां शिरोऽक्षिकुलकुण्डेषु स्थिरस्थितिका त्वं तेभ्यो न कदाऽपि च्यवसी-त्यर्थः ॥२०॥

**सा यदि द्रवति मोदकला स्यात् सा यदि ज्वलति चित्कलिका स्यात् ॥**
**सा परा स्थिरपदा यदि तिष्ठ- त्यक्षरा भवति काचन सत्ता ॥२१॥**

सेति– सा देवी द्रवति सोमो भूत्वा स्रवति यदि, मोदकला स्यात् आनन्दकला भवेत्। सा ज्वलति यदि दीप्ता यदि, चिदेव कलिका चित्कलिका स्यात् चिन्मयी भवेत्। परा सा ईश्वरी स्थिरपदा निश्चल-स्थाना तिष्ठति यदि, अक्षरा अखण्डसत्ता भवति। एकैव सोमात्मिका आनन्दमयी, तेजोरूपिणी चिन्मयी, अक्षरस्वरूपा सती इत्येकस्याः स्थान-क्रियाभेदेन त्रितोक्ताऽपि वस्तुतः सा सर्वं भवति चिदानन्दमयीति भावः ॥२१॥

**पश्यता नयनमण्डलवृत्तिं गृह्यसे त्वमचलाधिपकन्ये ॥**
**जानता दशशतारविलासं स्पृश्यसे विदितमम्ब रहस्यम् ॥२२॥**

पश्यतेति– अचलाधिपकन्ये पार्वति ! नयनमण्डलवृत्तिं नयने नेत्रे मण्डले मण्डलाकारे मयूरव्यंसकादिवत्समासः नयनमण्डले तयोः वृत्तिं व्यापारं दर्शन-क्रियाम् इत्यर्थः, पश्यता योगिना त्वं गृह्यसे लभ्यसे दृष्टेः द्रष्टुर्योगिनस्त्व-त्प्राप्तिरित्यर्थः। दशशतारविलासं सहस्रारस्य विलसितं रसवर्षणात्मकं जानता अवबुद्ध्यमानेन योगिना त्वं स्पृश्यसे तस्य स्पर्शविषयभूताऽसीत्यर्थः। अम्ब, रहस्यं विदितम्। दृष्ट्युपास्त्या त्वां चिन्मयीं साक्षात्कुरुते, सहस्रा-रामृतादानेन आनन्दमयी त्वामुपलभते, इदं रहस्यं ज्ञातम् ॥२२॥

**व्याप्तशक्त्यसुबलेन लसन्ती भानुबिम्बनयनेन तपन्ती ॥**
**चन्द्रबिम्बमनसा विहरन्ती सा पुनर्जयति मूर्ध्नि वसन्ती ॥२३॥**

व्याप्तेति— व्याप्तशक्त्यसुबलेन व्याप्ता, कर्तरि क्तः, विभ्वी शक्तिरेव असुबलं प्राणबलं तेन लसन्ती क्रीडन्ती सर्वत्र व्याप्रियमाणा सर्वं व्यापारयन्ती चेत्यर्थः, भानुबिम्बनयनेन भानुबिम्बमेव नयनं चक्षुस्तेन तपन्ती तपः कुर्वन्ती, चन्द्रबिम्बमनसा चन्द्रबिम्बमेव मनः तेन विहरन्ती विचरन्ती, सा देवी पुनः देहे मूर्ध्नि सहस्रारे वसन्ती जयति। ब्रह्माण्डे व्यापकशक्तिरेव तस्याः प्राणः, सूर्य एव चक्षुः, चन्द्र एव मनः 'चन्द्रमा मनसो जातः चक्षोः सूर्यो अजायत' इति सूर्यस्य चक्षुरात्मकत्वं चन्द्रस्य मानसत्वं च श्रूयेते। अत्र शिवशतकम् एवम् आह 'सौरं मण्डलमुज्ज्वलं तव तपः श्वासश्चरन्मारुतः' इति। आदित्यस्य तपस्त्वं चक्षुस्त्वं च श्रुतिप्रतिपादितम्। एवं ब्रह्माण्डशरीरा भगवती पिण्डाण्डे सहस्रारे विलसतीति भावः ॥२३॥

**स्वागतं सकललोकनुतायै स्वागतं भुवनराजमहिष्यै ॥**
**स्वागतं मयि भृशं सदयायै स्वागतं दशशतारमितायै ॥२४॥**

स्वागतमिति— सकललोकनुतायै समस्तजगद्वन्दितायै देव्यै स्वागतम्। आगच्छतु महादेवीति प्रीतिगौरववचनम्। भुवनराजमहिष्यै सर्वेश्वरहृदयेश्वर्यै स्वागतम्। मयि भक्ते भृशम् अत्यन्तं सदयायै सकरुणायै, ईदृगीर्योगानुभूतीरनुगृह्य स्वां कृपां प्रदर्शितवत्यै स्वागतम। दशशतारं सहस्रारम् इतायै प्राप्तायै स्वागतम्। या सर्वलोकसंस्तुता सर्वेश्वरनायिका सैव मयि सकरुणा मम सहस्रारे सविलासेदानीं विजयते इति भावः। कवौ योगिनि तस्याः शाश्वतप्रतिष्ठायै स्वागतोक्तिरियं स्तबकोपसंहारावसरे दत्ता ॥२४॥

**सत्कविक्षितिभुजो ललिताभिः स्वागताभिरनघाभिरिमाभिः ॥**
**स्वागतं भणितमस्तु भवान्यै खेलनाय शिर एतदितायै ॥२५॥**

सत्कवीति— सत्कविक्षितिभुजः सताम् अभ्यर्हितानां कवीनां क्षितिभुजः राज्ञः पूजनीयकविलोकराजस्य 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत'

इत्यमरः। अनघाभिः अविद्यमानदोषाभिः लक्षणसम्पन्नाभिः ललिताभिः कोमलपदाभिः, पक्षे कोमलगात्रीभिः, इमाभिः, स्वागताभिः सुखेनानायासेन आगताभिः प्रवृत्ताभिः स्वागतावृत्तरचिताभिः स्त्रीलिङ्गसामर्थ्यादङ्गनाभिः, एतत् मम शिरः सहस्रारं खेलनाय विलसनाय इतायै प्राप्तायै भवान्यै भवमहिष्यै पार्वत्यै स्वागतं सुखागमनविजयप्रार्थनं भणितम् उक्तमस्तु भवतु। प्रकृतार्थपरैः पदैः सूच्यार्थस्य स्तबकवृत्तस्य सूचनात् श्लेषोत्थापितो मुद्रालङ्कारः ॥२५॥

पञ्चदशः स्तबकः सव्याख्यः समाप्तः ॥

# षोडशः स्तबकः

अथ षोडशः कुमारललितास्तबकः प्रारभ्यते। योगानुभवानुरूपा स्तुतिः पूर्वस्तबकवत् प्रवर्तते ॥

**महोविहतमोहं महेशमहिलायाः ॥**
**स्मितं वितनुतान्मे गृहेषु महमग्र्यम् ॥१॥**

मह इति— महसा तेजसा विहतोऽपहतो मोहोऽसद्बोधो यस्य तत् महेशमहिलायाः महेश्वर्याः स्मितं मन्दहसितं गृहेषु आवासस्थलेषु अग्र्यं प्रशस्तं महमुत्सवं 'क्षण उद्धर्षो मह उद्धव उत्सवः' इत्यमरः, वितनुतात् विस्तृणोतु विस्तीर्णं विदधात्विति यावत्। गृहेष्विति बहुवचनात्, अहं यत्र यत्र वसामि तत्र तत्र मोहापहमहेश्वरीमन्दहसितकार्यो महोत्सवो भवत्विति भावः। मयि महेश्वरीमन्दस्मितविलासेन दूरीकृतमोहो महोत्सवो मया स्थीयमानेषु स्थलेषु प्रचलत्विति गम्यते ॥१॥

**इयद्बहुलगोलं जगल्लघु दधाना ॥**
**पितामहमुखैर- प्यखण्डितविधाना ॥२॥**

इयदिति— इयत् एवम् अतिबृहत् इति विशालदृष्ट्या हस्तनिर्देशेन इयदित्याह, बहुलगोलं बहुलाः गोलाः यस्मिन् तत् जगत्, नक्षत्रात्मना खे भासमानाः असङ्ख्येयाः भुवनगोलाः यस्मिन् वर्तन्ते तदिदं जगत् विश्वं लघु श्रमेण विना सुभरं दधाना बिभ्रती पितामहमुखैरपि ब्रह्मादिभिरपि अखण्डितविधाना अखण्डितम् अप्रतिहतं विधानं कार्यविधिर्यस्याः सा, तनोत्विति उत्तरेण सम्बन्धः ॥२॥

इत्यमरः। अनघाभिः अविद्यमानदोषाभिः लक्षणसम्पन्नाभिः ललिताभिः कोमलपदाभिः, पक्षे कोमलगात्रीभिः, इमाभिः, स्वागताभिः सुखेनानायासेन आगताभिः प्रवृत्ताभिः स्वागतावृत्तरचिताभिः स्त्रीलिङ्गसामर्थ्यादङ्गनाभिः, एतत् मम शिरः सहस्रारं खेलनाय विलसनाय इतायै प्राप्तायै भवान्यै भव-महिष्यै पार्वत्यै स्वागतं सुखागमनविजयप्रार्थनं भणितम् उक्तमस्तु भवतु। प्रकृतार्थपरैः पदैः सूच्यार्थस्य स्तबकवृत्तस्य सूचनात् श्लेषोत्थापितो मुद्रा-लङ्कारः ॥२५॥

पञ्चदशः स्तबकः सव्याख्यः समाप्तः ॥

# षोडशः स्तबकः

अथ षोडशः कुमारललितास्तबकः प्रारभ्यते। योगानुभवानुरूपा स्तुतिः पूर्वस्तबकवत् प्रवर्तते ॥

**महोविहतमोहं महेशमहिलायाः ॥**
**स्मितं वितनुतान्मे गृहेषु महमग्र्यम् ॥१॥**

मह इति– महसा तेजसा विहतोऽपहतो मोहोऽसद्बोधो यस्य तत् महेशमहिलायाः महेश्वर्याः स्मितं मन्दहसितं गृहेषु आवासस्थलेषु अग्र्यं प्रशस्तं महमुत्सवं 'क्षण उद्धर्षो मह उद्धव उत्सवः' इत्यमरः, वितनुतात् विस्तृणोतु विस्तीर्णं विदधात्विति यावत्। गृहेष्विति बहुवचनात्, अहं यत्र यत्र वसामि तत्र तत्र मोहापहमहेश्वरीमन्दहसितकार्यो महोत्सवो भवत्विति भावः। मयि महेश्वरीमन्दस्मितविलासेन दूरीकृतमोहो महोत्सवो मया स्थीयमानेषु स्थलेषु प्रचलत्विति गम्यते ॥१॥

**इयद्बहुलगोलं जगल्लघु दधाना ॥**
**पितामहमुखैर- प्यखण्डितविधाना ॥२॥**

इयदिति– इयत् एवम् अतिबृहत् इति विशालदृष्ट्या हस्तनिर्देशेन इयदित्याह, बहुलगोलं बहुलाः गोलाः यस्मिन् तत् जगत्, नक्षत्रात्मना खे भासमानाः असङ्ख्येयाः भुवनगोलाः यस्मिन् वर्तन्ते तदिदं जगत् विश्वं लघु श्रमेण विना सुभरं दधाना बिभ्रती पितामहमुखैरपि ब्रह्मादिभिरपि अखण्डितविधाना अखण्डितम् अप्रतिहतं विधानं कार्यविधिर्यस्याः सा, तनोत्विति उत्तरेण सम्बन्धः ॥२॥

**अदुष्टचरितेभ्यः शुभान्यभिदधाना ॥**
**कुलानि मलिनानां हतानि विदधाना ॥३॥**

अदुष्टेति– अदुष्टचरितेभ्यः अदुष्टानि अदोषदूषितानि चरितानि शीलान्याचरणानि येषां तेभ्यः शिष्टाचारेभ्य इति यावत्, शुभानि

मङ्गलानि अभिदधाना भणन्ती, शुभोक्तिर्देव्याः शुभाधानान्नातिरिच्यते। मलिनानां पापानां दुष्टानां कुलानि हतानि प्रणष्टानि विदधाना कुर्वाणा ॥३॥

**दुकूलमरुणांशु- प्रभं परिदधाना ॥**
**हरस्य रजताद्रि- क्षितीशितुरधीना ॥४॥**

दुकूलमिति— अरुणांशुप्रभं बालार्कांशुसन्निभं प्रातस्सन्ध्यारागरञ्जितं दुकूलं वसनं परिदधाना वसाना, रजताद्रिक्षितीशितुः कैलासराजस्य हरस्य अधीना आयत्ता। शुभ्रविग्रहस्य हरस्य रजतगिरीशस्य रागजन्मने प्रभवति अरुणवसनम्। रजतारुणपदप्रयोग औचित्यप्रकर्षकः ॥४॥

**मुनीन्द्रकृततन्त्र- प्रसिद्धबहुदाना ॥**
**उमा बलमलं न- स्तनोत्वतुलमाना ॥५॥**

मुनीन्द्रेति— मुनीन्द्रकृततन्त्रप्रसिद्धबहुदाना, मुनीन्द्रैः आगमिकैः ऋषिश्रेष्ठैः कृतेषु तन्त्रेषु तन्त्रशास्त्रेषु प्रसिद्धं बहु अमितं दानं यस्याः सा। अभीष्टबहुदायिनी भगवतीति तन्त्रग्रन्थेषु प्रसिद्धम्। नेदम् अवितथमिति द्योतयितु मुनीन्द्रकृतमित्युक्तम्। अतुलमाना असमानपरिमाणा इयत्तापरिच्छेदरहिता अप्रमेयेति यावत्, एवम्भूता भगवत्युमा नः अस्माकम् अलं पर्याप्तं बलं वीर्यं तनोतु करोत्विति भावः ॥५॥

**निरस्तविषयां यद् दधाति मतिकीलाम् ॥**
**समस्तजगदीशे धृतिस्तव मतेयम् ॥६॥**

निरस्तेति— समस्तजगदीशे सकललोकेश्वरि ! निरस्तविषयां निरस्ताः निराकृताः विषयाः रूपादयः यया ता मतिकीलां कीला ज्वालेव मतिः बुद्धिः मतिकीला बुद्धिज्वाला तां दधाति धारयते पुरुष इत्यध्याहार्यमिति यत्, इयं तव धृतिर्मता, निर्विषया बुद्धिज्वाला धार्यमाणा धृतिशब्दवाच्येति भावः। निर्विषयबुद्धिधारणैव देवीधारणेति तात्पर्यम् ॥६॥

**श्रुता प्रवणचित्तं　　स्मृता नरमपापम् ॥**
**धृता हृदि विधत्से　　गतस्वपरभावम् ॥७॥**

श्रुतेति— श्रुता सती नरं प्रवणचित्तं प्रवणं प्रह्वं चित्तं चेतो यस्य तं विधत्से, यस्त्वां श्रृणोति तस्य चित्तं त्वयि प्रह्वं विधीयत इत्यर्थः। स्मृता सती नरम् अपापं विधत्से, यः स्मरति त्वां तमपाप्मानं करोषि। हृदि हृदये धृता ध्यानेन गृहीता सती नरं गतस्वपरभावं गतः विगतः स्वश्च आत्मा च परश्च आत्मेतरश्च स्व-परौ तयोर्भावः यस्मात्तं विधत्से, यस्य हृदये स्थितिपदं गताऽसि तस्य आत्मेतरभेदबुद्धिम् अपहंसि इत्यर्थः ॥७॥

**अहंमतितटिन्याः　　सतामवनि मूलम् ॥**
**त्वमेव किल सेयं　　महर्षिरमणोक्तिः ॥८॥**

अहमिति— सतां सज्जनानाम् अवनि पालनि, अहंमतितटिन्याः अहंमतिरेव तटिनी स्रवन्ती तस्याः मूलम् उत्पत्तिस्थानं त्वमेवासि किल इति ऐतिह्ये। सा प्रसिद्धा इयं महर्षिरमणोक्तिः। महर्षेः मम गुरोः रमणस्य उक्तिः। अहमिति स्मरणस्य मूलं चित्स्वरूपमिति प्रसिद्धो महर्षेरुपदेशः। तटिन्याः प्रायेणाचल एव उत्पत्तिस्थानम्। तटिनीशब्दसामर्थ्यात् अहङ्कारमूलस्याचलत्वमाक्षिप्यते ॥८॥

**अहंमतिलताया-　　स्त्वयीशवधु कन्दे ॥**
**स्थितोऽम्ब भुवनस्य　　प्रविन्दति रहस्यम् ॥९॥**

अहमिति— ईशवधु ईश्वरकान्ते! अहंमतिलतायाः अहमिति मतिर्धीः अहंधीः सैव लता वल्ली तस्याः कन्दे मूले त्वयि चिद्रूपिण्यां स्थितो योगी भुवनस्य विश्वस्य रहस्यं प्रविन्दति प्राप्नोति। अहंधियो मूलं जन्मस्थानं चित्स्वरूपं त्वमेवासि, तत्र स्थितस्य भुवनस्य वास्तवं तत्त्वं विदितं भवतीत्ययमर्थः अहन्धी-लतयोः अम्बा-कन्दयोश्च ताद्रूप्यरूपकेण कथितः ॥९॥

मङ्गलानि अभिदधाना भणन्ती, शुभोक्तिर्देव्याः शुभाधानान्नातिरिच्यते। मलिनानां पापानां दुष्टानां कुलानि हतानि प्रणष्टानि विदधाना कुर्वाणा ॥३॥

**दुकूलमरुणांशु- प्रभं परिदधाना ॥**
**हरस्य रजताद्रि- क्षितीशितुरधीना ॥४॥**

दुकूलमिति– अरुणांशुप्रभं बालार्कांशुसन्निभं प्रातस्सन्ध्यारागरञ्जितं दुकूलं वसनं परिदधाना वसाना, रजताद्रिक्षितीशितुः कैलासराजस्य हरस्य अधीना आयत्ता। शुभ्रविग्रहस्य हरस्य रजतगिरीशस्य रागजन्मने प्रभवति अरुणवसनम्। रजतारुणपदप्रयोग औचित्यप्रकर्षकः ॥४॥

**मुनीन्द्रकृततन्त्र- प्रसिद्धबहुदाना ॥**
**उमा बलमलं न- स्तनोत्वतुलमाना ॥५॥**

मुनीन्द्रेति– मुनीन्द्रकृततन्त्रप्रसिद्धबहुदाना, मुनीन्द्रैः आगमिकैः ऋषिश्रेष्ठैः कृतेषु तन्त्रेषु तन्त्रशास्त्रेषु प्रसिद्धं बहु अमितं दानं यस्याः सा। अभीष्टबहुदायिनी भगवतीति तन्त्रग्रन्थेषु प्रसिद्धम्। नेदम् अवितथमिति द्योतयितु मुनीन्द्रकृतमित्युक्तम्। अतुलमाना असमानपरिमाणा इयत्तापरिच्छेदरहिता अप्रमेयेति यावत्, एवम्भूता भगवत्युमा नः अस्माकम् अलं पर्याप्तं बलं वीर्यं तनोतु करोत्विति भावः ॥५॥

**निरस्तविषयां यद् दधाति मतिकीलाम् ॥**
**समस्तजगदीशे धृतिस्तव मतेयम् ॥६॥**

निरस्तेति– समस्तजगदीशे सकललोकेश्वरि ! निरस्तविषया निरस्ताः निराकृताः विषयाः रूपादयः यया तां मतिकीलां कीला ज्वालेव मतिः बुद्धिः मतिकीला बुद्धिज्वाला तां दधाति धारयते पुरुष इत्यध्याहार्यमिति यत्, इयं तव धृतिर्मता, निर्विषया बुद्धिज्वाला धार्यमाणा धृतिशब्दवाच्येति भावः। निर्विषयबुद्धिधारणैव देवीधारणेति तात्पर्यम् ॥६॥

**श्रुता प्रवणचित्तं स्मृता नरमपापम् ॥**
**धृता हृदि विधत्से गतस्वपरभावम् ॥७॥**

श्रुतेति– श्रुता सती नरं प्रवणचित्तं प्रवणं प्रह्वं चित्तं चेतो यस्य तं विधत्से, यस्त्वां शृणोति तस्य चित्तं त्वयि प्रह्वं विधीयत इत्यर्थः। स्मृता सती नरम् अपापं विधत्से, यः स्मरति त्वां तमपाप्मानं करोषि। हृदि हृदये धृता ध्यानेन गृहीता सती नरं गतस्वपरभावं गतः विगतः स्वश्च आत्मा च परश्च आत्मेतरश्च स्व-परौ तयोर्भावः यस्मात्तं विधत्से, यस्य हृदये स्थितिपदं गताऽसि तस्य आत्मेतरभेदबुद्धिम् अपहंसि इत्यर्थः ॥७॥

**अहंमतितटिन्याः सतामवनि मूलम् ॥**
**त्वमेव किल सेयं महर्षिरमणोक्तिः ॥८॥**

अहमिति– सतां सज्जनानाम् अवनि पालनि, अहंमतितटिन्याः अहंमतिरेव तटिनी स्रवन्ती तस्याः मूलम् उत्पत्तिस्थानं त्वमेवासि किल इति ऐतिह्ये। सा प्रसिद्धा इयं महर्षिरमणोक्तिः। महर्षेः मम गुरोः रमणस्य उक्तिः। अहमिति स्मरणस्य मूलं चित्स्वरूपमिति प्रसिद्धो महर्षेरुपदेशः। तटिन्याः प्रायेणाचल एव उत्पत्तिस्थानम्। तटिनीशब्दसामर्थ्यात् अहङ्कारमूलस्याचलत्वमाक्षिप्यते ॥८॥

**अहंमतिलताया- स्त्वयीशवधु कन्दे ॥**
**स्थितोऽम्ब भुवनस्य प्रविन्दति रहस्यम् ॥९॥**

अहमिति– ईशवधु ईश्वरकान्ते! अहंमतिलतायाः अहमिति मतिर्धीः अहंधीः सैव लता वल्ली तस्याः कन्दे मूले त्वयि चिद्रूपिण्यां स्थितो योगी भुवनस्य विश्वस्य रहस्यं प्रविन्दति प्राप्नोति। अहंधियो मूलं जन्मस्थान चित्स्वरूपं त्वमेवासि, तत्र स्थितस्य भुवनस्य वास्तवं तत्त्वं विदितं भवतीत्ययमर्थः अहन्धी-लतयोः अम्बा-कन्दयोश्च ताद्रूप्यरूपकेण कथितः ॥९॥

**यदेतदखिलाम्ब प्रसिद्धमिव दृश्यम् ।।**
**तवैव किल जालं गतो भणति मूलम् ।।१०।।**

यदेतदिति– अखिलाम्ब, सकलजननि ! यत् यस्मात् एतत् प्रसिद्धमिव निस्सन्देहं निश्चितमिव स्थितं दृश्यं जगत् तवैव जालं विधेयविशेषणं जाल-विद्या मायेत्यर्थः, मूलं गतः अहम्मतिमूलं प्राप्तः योगी भणति, तस्माद् भुवन-स्य रहस्यं प्रविन्दतीति पूर्वेण अन्वयः। मूलस्वरूपं प्राप्य स्थितः दृश्यं सर्वं निश्चितसत्यमिव भासमानमपि केवलं मायिकं जालमिति पश्यति। तस्मातथा भणति ।।१०।।

**प्रपश्यसि पराची जगद्विविधभेदम् ।।**
**स्वतः किमपि नान्य- त्प्रतीचि पुरतस्ते ।।११।।**

प्रपश्यसीति– पराची पराचीना बहिर्मुखी सती जगत् विश्वं विविधभेदं विविधो नानाप्रकारः भेदो विशेषः यस्य तत् प्रपश्यसि। भोः प्रतीचि अन्तर्मुखि अम्ब ! ते तव पुरतः पुरस्तात् स्वतोऽन्यत् आत्मन इतरत् किमपि न, नास्ति। त्वं पराग्दृष्टिः सती नानाभेदं पश्यसि। अत एव जगतः स्थितिः, प्रतीच्या अन्तर्दृष्टेः त्वमेव सर्वं भवसि त्वत्तोऽन्यत्किमपि नास्तीति भावः ।।११।।

**स्तुता भवसि शश्वत् स्मृता च भजने त्वम् ।।**
**धृता भवसि योगे तता भवसि बोधे ।।१२।।**

स्तुतेति– त्वं भजने स्तुता स्तोतृभिः भजकैः विनुता भवसि, शश्वत् स्मृता ध्यातृभिः ध्याता च भवसि योगे धृता योगिभिर्भृता भवसि, बोधे ज्ञाने तता व्याप्ता भवसि। स्तुति-स्मृत्यादीनां फलमाहोत्तरश्लोकेन ।।१२।।

**स्तुता दिशसि कामं स्मृता हरसि पापम् ।।**
**धृताऽस्यधिकशक्त्यै तता भवसि मुक्त्यै ।।१३।।**

स्तुतेति– स्तुता सती कामम् अभीष्टं दिशसि ददासि, स्मृता ध्याता सती पापं हरसि ध्यातारं पवित्रयसि, धृता योगेन धृता सती अधिकशक्त्यै बहुल-

शक्तये असि प्रभवसि समृद्धां शक्तिमादधासीत्यर्थः। तता व्याप्ता ज्ञानसिद्धेः व्याप्तिमती सती मुक्त्यै मोक्षाय असि प्रभवसि। अभीष्टदं स्तोत्रं, पापघ्नं ध्यानं, शक्तिप्रदो योगः, मुक्तिप्रदं ज्ञानमिति फलितार्थः ॥१३॥

**विशुध्यति यताशी　प्रमाद्यति न शुद्धः ॥**
**प्रमादरहितस्य　स्फुटे लससि कञ्जे ॥१४॥**

विशुध्यतीति— यताशी नियताशनः आहारनियमवान् विशुध्यति विशुद्धो भवति। शुद्धः तथा विशुद्धः न प्रमाद्यति न प्रमत्तो भवति अस्खलितशीलो भवतीत्यर्थः। तथा प्रमादरहितस्य अप्रमत्तस्य स्फुटे विकसिते कञ्जे कमले प्रकृते सहस्रारे लससि क्रीडसि ॥

नियताशनात् विशुद्धिः विशुद्धेरप्रमादोऽप्रमादात् देवीकृतकञ्जलसनमिति गृहीतमुक्तरीत्या अर्थश्रेणेः वर्णनादेकावलिरलङ्कारः। 'गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता' इति तल्लक्षणात् ॥१४॥

**स्फुटं यदि सरोजं　नटीव पटु नाट्यम् ॥**
**करोषि यतबुद्धे-　र्जगज्जननि शीर्षे ॥१५॥**

स्फुटमिति— जगज्जननि लोकमातः! सरोजं सहस्रारं कमलं स्फुटं विकसितं भवति यदि, यतबुद्धेः यता नियता बुद्धिः यस्य तस्य वशितमनस इत्यर्थः, शीर्षे शिरसि नटी इव रङ्गस्थले नाट्यकारिणीव नाट्यं पटु निपुणं करोषि, नटसि विलससीति यावत् ॥१५॥

**शिरोगतमिदं नः　प्रफुल्लमयि पद्मम् ॥**
**अनल्पमकरन्दं　त्वमम्ब भव भृङ्गी ॥१६॥**

शिर इति— अयि अम्ब! नः अस्माकं शिरोगतं मस्तकस्थम् इदं प्रफुल्लं सम्यग्विकसितं पद्मं कमलम् अनल्पमकरन्दम् अनल्पः बहुलः मकरन्दः पुष्परसः यस्य तत् अमितमध्विति यावत्, भवतीति शेषः। त्वं भृङ्गी मधुकरी भव, त्वं तत्र लसन्ती पात्री भवेति प्रार्थयते ॥१६॥

**सरोजमतुदन्ती पिबाम्ब मकरन्दम् ॥**
**महामधुकरि त्वं भजेर्मदममन्दम् ॥१७॥**

सरोजमिति– अम्ब ! सरोजं सहस्रार कमलम् अतुदन्ती अपीडयन्ती मकरन्दं पिब, कमलाद्रसादानकाले कोमलं कमलं लुलितं मा भूत्; यथा कमलं पीडितं न भवति तथा रस ग्रहीतु जानासि । अत एव महामधुकरि निपुण-तमभृङ्गि इति सम्बोधनं, सर्व बहुलं मधु पातु शक्नोषीति च द्योतयितुम् इदं सम्बोधनम् । त्वम् अमन्दम् अधिक मद बोधविशेष भजे प्राप्नुहि । योगा-नुभवविशेषाणां प्रादुर्भावदशासु योगिनः शारीरकव्यथाः स्युः । अत एव कोमलं कुसुमं मा पीड्यतामिति रूपकेणानुप्राणितं वस्तु ॥१७॥

**अमङ्गलमितः प्राङ्- मयेशवधु भुक्तम् ॥**
**इतः परममेये सुखान्यनुभव त्वम् ॥१८॥**

अमङ्गलमिति– ईशवधु ईश्वरयोषे, अमेये मानातीते ! इतः प्राक् इतः पूर्व मया अमङ्गलम् अशुभं दुःखमिति यावत् भुक्तम् अनुभूतं, इतः परं त्वं सुखानि अनुभव दुःखानि सर्वाणि मया अनुभूतानि, सुखानि त्वम् अनुभव । तव सुखायैव मया दुःखमनुभूतम् । त्वं तु मोदमयी मोदायैवासि इति भावः । बोधात्प्राक् सर्व कष्टं भोक्त्रा अबुद्धेनानुभूयते । बोधात्परं सुखे प्राप्ते अबुद्धस्य भोक्तृत्वमेव नश्यति, तदा भोक्त्री देव्येवेति भावः । 'मयि' इति 'मया' स्थाने पाठभेदो भवति । मयि त्वया अम्बया इतः प्राक् अमङ्गलं भुक्तं, इतः परं सुखान्यनुभव । सर्वथा त्वमेव भोक्त्री भवसीत्यर्थः । मद्दुःखं सर्वं त्वमेवान्वभवः इति भावः ॥१८॥

**अहङ्कृतिवशान्मे चिदीश्वरि पुराऽभूत् ॥**
**तवाभवदिदानीं ममास्ति न विभुत्वम् ॥१९॥**

अहङ्कृतिवशादिति– ईश्वरि ! पुरा ईदृशबोधात्पूर्वम् अहङ्कृतिवशात् अह-ङ्काराधीनत्वाद्धेतोः मे चित् मम चितिः अभूत् । वस्तुतस्तु त्वं चित्, मम चित

तावकी एव, अहङ्कारान्मदीया साऽभूत्। इदानीं सा तव चित् अभवत्। तस्मात मम विभुत्वं चित्प्रभुत्वं नास्ति, मम चितः प्रभुत्वं त्वदीयमेवेति भावः ॥१९॥

**यदाऽभवदियं मे तदाऽन्वभवदार्तिम् ॥**
**तवेश्वरि भवन्ती भुनक्तु शमिदानीम् ॥२०॥**

यदेति– इयं चित् यदा मे मम अभवत् अहङ्कारवशान्मदीयाऽभवदित्यर्थः, तदा आर्ति व्यथामन्वभवत् अनुभूतवती। इदानीं सम्प्रति, भोः ईश्वरि! तव भवन्ती त्वदीया सतीत्यर्थः, शं सुखं भुनक्तु अनुभवतु। ममत्वे दुःखं निर्ममत्वे तु परं सुखम् इति सर्वसिद्धान्तसारः प्रसिद्धः ॥२०॥

**करोत्वियमहन्ता विवादमधुनाऽपि ॥**
**तथाऽपि पुरतस्ते महेश्वरि विवीर्या ॥२१॥**

करोत्विति– महेश्वरि! इयम् अहन्ता अयमहम्भावः अधुनाऽपि यद्यपि इदानीं विवादं विविधं वादं व्यवहारं करोतु 'विवादो व्यवहारः स्यात्' इत्यमरः। तथाऽपि ते तव पुरतः पुरस्तात् विवीर्या विगतवीर्या निःसत्त्वा भवतीति शेषः। क्वेयमहन्ता क्व च त्वम्? ॥२१॥

**इयं च तव बुद्धे- र्यतो भवति वृत्तिः ॥**
**इमामपि कुरु स्वां क्षमावति विरोषा ॥२२॥**

इयमिति– इयं बुद्धेः वृत्तिः धीवृत्तिश्च यतः यस्मात् हेतोः तव भवति त्वदीया भवति, ततः इमामपि वृत्तिं विरोषा रोषहीना शान्ता सती, क्षमावति क्षान्तिमति देवि! स्वां स्वीयां कुरु स्वीकुरु। इयं धीवृत्तिस्त्वदीया तदीशित्री त्वमेव, तस्मात् तामपि अङ्गीकुरु इति भावः ॥२२॥

**सुधाब्धिरिह मात- स्तरङ्गशतमाली ॥**
**चिदभ्रपुरमत्र प्रभापदमदभ्रम् ॥२३॥**

सुधाब्धिरिति– मातः! इह शरीरे सुधाब्धिः अमृतसागरः तरङ्गाणामूर्मीणां शतानां शतसङ्ख्याकानां माला पङ्क्तिरस्यास्तीति तरङ्गशतमाली

बहुलर्वीचिरस्तीत्यर्थः। अनेन सहस्रारविलसितमुक्तं तन्त्रशास्त्रेषु सहस्रारस्यैव सुधासिन्धुरिति वर्ण्यमानत्वात्। अत्र शरीरे अदभ्रमनल्पं प्रभापदं प्रभानां रुचां पदं स्थानं सर्वतेजोमूलस्थानमित्यर्थः। चिदभ्रपुरं चिदाकाशपुरं ब्रह्मपुरं दहरमिति श्रुतिप्रसिद्धं भवतीत्यर्थः। अनेन सूर्यमण्डलतया शास्त्रेषु उपदिष्टं हृदयमुक्तम्। आहाराय अमृताब्धेरमृतं भवति, निवासाय दहरः आकाशो भवति। तस्मात् विजयस्व देवि! ॥२३॥

**कुरु त्वमिदमेकं निजालयशतेषु मे।**
**सवित्रि विहरास्मिन् यथेष्टमयि देहे ॥२४॥**

कुर्विति– अयि सवित्रि जननि! निजेषु स्वीयेषु आलयानां वासगृहाणा शतेषु इदं मम देहम् एकं कुरु, त्वद्वासविलासस्थानेष्विदं परिगण्यतामित्यर्थः। अस्मिन् देहे अधिकरणे मयि देहभूते, देहात्मनि यथेष्टम् इष्टमनतिक्रम्य स्वच्छन्देन विहर विहारं कुरु विलसतु भवतीति यावत् ॥२४॥

**कुमारललितानां कृतिर्गणपतीया ॥**
**करोतु मुदमेषा कपर्दिदयितायाः ॥२५॥**

कुमारेति– गणपतेरियं गणपतीया कुमारललितावृत्तरचितानां कुमारललितानां कृतिः एषा स्तुतिरूपा कविता कपर्दिदयितायाः परमेश्वरप्रियायाः मुदं प्रीतिं करोतु ॥२५॥

इति श्रीमहर्षिरमणभगवत्पादान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतिमुनेः कृतावुमासहस्रे षोडशः स्तबकः समाप्तः।

समाप्तं च चतुर्थं शतकम्।

प्रभाख्या व्याख्या च समाप्ता ॥

# सप्तदशः स्तबकः

पापविधूतौ निर्मलगङ्गा तापनिरासे चन्द्रमरीचिः ॥
भर्गपुरन्ध्रीहासकला मे भद्रममिश्रं काऽपि करोतु ॥१॥

पापेति– पापविधूतौ पापानाम् अंहसां मालिन्यानां च विधूतौ अपनोदने निर्मलगङ्गा पावनी स्वर्णदी, तापनिरासे तापस्य ऊष्मणः दुःखस्य च निरासे निराकरणे चन्द्रमरीचिः शीतला अमृतमयी च चन्द्रकान्तिः, एवम्भूता काऽपि भर्गपुरन्ध्रीहासकला भर्गस्य रुद्रस्य पुरन्ध्र्याः महिष्याः हासस्य कला सुषमा अंशो वा मे मम अमिश्रं शुद्धम् असांसर्गिकं भद्रं कल्याणं करोतु। पापशमने गङ्गा, तापहरणे चन्द्रमरीचिरिति द्विधा हासकलोल्लेखनात् उल्लेखालङ्कारः ॥१॥

शिष्टकुलानां सम्मदयित्री दुष्टजनानां संशमयित्री ॥
कष्टमपारं पादजुषो मे विष्टपराज्ञी सा विधुनोतु ॥२॥

शिष्टेति–शिष्टकुलानां सज्जनवंशानां सम्मदयित्री आनन्दविधात्री, दुष्टजनानां खलानां संशमयित्री दमयित्री सा विष्टपराज्ञी भुवनेश्वरी पादजुषः पादसेविनो मे मम अपारम् अनवधिकं कष्टं दुःखं विधुनोतु अपहरतु ॥२॥

नूतनभास्वद्बिम्बनिभाङ्घ्रिं शीतलरश्मिद्वेषिमुखाब्जाम् ॥
ख्यातविभूतिं पुष्पशरारेः पूतचरित्रां योषितमीडे ॥३॥

नूतनेति– नूतनभास्वद्बिम्बनिभाङ्घ्रिं नूतनो नवो भास्वान् अर्कस्तस्य बिम्बनिभौ बिम्बोपमौ अङ्घ्री पादौ यस्यास्तां बालसूर्यप्रभचरणां, शीतलरश्मिद्वेषिमुखाब्जां शीतलरश्मेः चन्द्रस्य द्वेषि द्विषत् मुखम् अब्जमिव यस्यास्तां चन्द्रजित्वरमुखारविन्दां, ख्यातविभूतिं ख्याता विश्रुता विभूतिरैश्वर्यं यस्यास्तां पूतचरित्रां पावनकथां पुष्पशरारेः पुष्पबाणरिपोः शिवस्य योषितं स्त्रियं पार्वतीम् ईडे स्तौमि ॥३॥

**उज्ज्वलतारे व्योम्नि लसन्ती सारसबन्धौ भाति तपन्ती ॥**
**शीतलभासा चिन्तनकर्त्री पातु कुलं मे विष्टपभर्त्री ॥४॥**

उज्ज्वलेति– उज्ज्वलतारे उज्ज्वला: भास्वरास्तारा: नक्षत्राणि यस्मिंस्तस्मिन् व्योम्नि आकाशे लसन्ती क्रीडन्ती, भाति भासमाने सारसबन्धौ कमलसुहृदि भास्करे तपन्ती तप आलोचने इति धातोर्निष्पन्नत्वादालोचयन्तीत्युपपन्नं सूर्यस्य चक्षुस्त्वात्तपस्त्वाच्च। शीतलभासा चन्द्रेण साधनेन चिन्तनकर्त्री चिन्तयन्तीत्यर्थ:, चन्द्रमसो मनस्त्वश्रुते:। विष्टपभर्त्री लोकधात्री मे मम कुलं पातु रक्षतु ॥४॥

**प्राणमनोवाग्व्यस्तविभूति- र्लोकविधातुः काचन भूतिः ॥**
**पुष्करपृथ्वीपावकरूपा शुष्कमघं नः सा विदधातु ॥५॥**

प्राणेति– प्राणमनोवाग्व्यस्तविभूति: प्राण-मनो-वाग्भि: व्यस्ता विभक्ता विभूतिरैश्वर्यं यस्या: सा लोकविधातु: सर्वलोकस्रष्टुरीश्वरस्य काचन भूतिरैश्वर्यं पुष्कर-पृथ्वी-पावकरूपा पुष्करम् आप:, पृथ्वी भूमिरन्नमिति यावत्, पावकोऽग्निश्च पुष्करपृथ्वीपावका: तेषां रूपाणि यस्या: सा अबन्नतेजोरूपा 'कबन्धमुदकं पाथ: पुष्करं सर्वतोमुखम्' इत्यमर:, न: अस्माकम् अघं पापं शुष्कं नीरसं निस्सारं विदधातु। अबन्नतेजसाम् अणिष्ठांशा: इह क्रमश: प्राणमनोवाग्धातव: विभूतित्वेनोक्ता:, इदं च पूर्वं व्याख्यातम्। अनेन प्राणमनोवाक्कृतम् अघं ध्वंसयितु प्रभ्वी पुष्करादिरूपेणावस्थिता देवी प्रार्थिता भवति ॥५॥

**इष्टफलानामम्ब समृद्ध्यै कष्टफलानां तत्क्षणधूत्यै ॥**
**चेष्टितलेशोद्दीपितशक्तिं विष्टपभर्त्रि त्वामहमीडे ॥६॥**

इष्टेति– विष्टपभर्त्रि! लोकराज्ञि अम्ब, इष्टफलानां अभीप्सितसुखफलानां समृद्ध्यै पूर्णसम्पदे, कष्टफलानां दु:खानुभवानां तत्क्षणधूत्यै सद्योनाशाय चेष्टितलेशोद्दीपितशक्तिं चेष्टितलेशेन ईषच्चलनविशेषेण उद्दीपिता उत्तेजिता शक्तिर्यस्यास्तां त्वाम् ईडे स्तौमि ॥६॥

**भूमिरुहाग्रस्थापितभाण्डाद् यो मधु पायं पायमजस्रम् ॥**
**विस्मृतविश्वो नन्दति मात- स्तत्र किल त्वं धाम दधासि ॥७॥**

भूमीति— मातः! यः भूमिरुहाग्रस्थापितभाण्डात् भूमिरुहस्य वृक्षस्य अग्रे उच्चैःस्थाने स्थापितान्निहिताद्भाण्डात् पात्रात् मधु मदकरं पेयम् अजस्रं सततं पायं पायं पीत्वा पीत्वा विस्मृतविश्वः सन् विस्मृतं विश्वं जगत् येन सः नन्दति मोदते तत्र तस्मिन् त्वं धाम स्थानं दधासि विभर्षि, किल सम्प्रदाये। अत्र शरीरमेव वृक्षः तस्याग्रं शिरः तत्र सहस्रारं भाण्डं तत्र मधु सोमरसोऽमृतं तस्य पानेन ब्रह्मानन्दजः मदः तेन विश्वविस्मरणम्। नारिकेलतालादिवृक्षाग्रे मृद्भाण्डं स्थापयित्वा मद्यमाददते लोके। अधिकं तत्पानेन मत्तो भूत्वा जगद्विस्मरति। अत्र विषयस्य देहसहस्रारादेः स्वशब्देनोल्लेखनं विना विषयिवाचकेनैव भूमिरुहाग्रादिना ग्रहणात् विषयनिगरणं भवति। अनेन शरीरादेर्विषयस्य भूमिरुहादिविषयिरूपतया आहार्यनिश्चयात् विषयनिगरणपूर्वकमध्यवसानमाहुः। तस्मात् रूपकातिशयोक्तिरलङ्कारः 'रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः' इति तल्लक्षणात् ॥७॥

**कोऽपि सहस्रैरेष मुखानां शेष इतीड्यः पन्नगराजः ॥**
**उद्गिरतीदं यद्वदनेभ्यो देवि तनौ मे तद्बत पासि ॥८॥**

कोऽपीति— कोऽपि अयमीदृगिति निर्देष्टुम् अशक्यः, मुखानां सहस्रैः सहस्रवदनैः आदिशेष इति ईड्यः स्तुत्यः पन्नगराजो नागेन्द्रः, एकेन मुखेन वक्तुमशक्यमस्य वीर्यम्। अत एव सहस्रैर्वदनानामीड्य इत्युक्तम्। यत् यस्मात्, इदम् अर्थाद्विषं मे मम तनौ वपुषि उद्गिरति तत् तस्मात् पासि रक्षसि, बत हा कष्टम्! अयं भावः। महायोगे देव्यनुगृहीते प्रचलति, कस्याश्चित् सिद्धेः पूर्वम् अमृतमथनसमये अमृतात्प्राक् गरलम् इव निस्सृत्य देहमावृणोति, तत्र दुर्भरस्तापः विषज इव भवति। इमं स्वानुभवम् अत्र प्रस्तौति योगनिष्ठः कविः ॥८॥

**साकममेये देवि भवत्या पातुमहन्ता यावदुदास्या ॥**
**तावदियं तां मूर्छयतीशे पन्नगराजोद्गारजधारा ॥९॥**

साकमिति— अमेये मानातीते देवि! भवत्या साकं त्वया सहेत्यर्थः, पातुम् उद्गीर्णं गरलं भोक्तुमित्यर्थः, यावत् अहन्ता अहम्भावः उदास्या ऊर्ध्व-

मासितुं योग्या औदासीन्येन स्थेया भवतीत्यर्थः, तावत्, देवि, इयं पन्नगराजोद्गारजधारा पन्नगराजस्य शेषस्य उद्गारजधारा विषधारा ताम् अहन्ताम् अहम्भावं मूर्छयति मोहयति। त्वया अमृतवाहिन्या सह अमृतात् प्राक् निस्सरद्विषं भोक्तुं यावत्कालम् अहन्ता औदासीन्येन भवेत् तावत्कालम् इयं विषधारा तां मूर्छितां करोति। किं करवाणि? अस्यां दशायाम् अनुभूतान् क्लेशान् पुनराह ॥९॥

**शाम्यति चिन्ताजीवितमस्या- मिन्द्रियसत्ताऽप्यस्तमुपैति ॥**
**याति निरुद्धा हा गलदेशे संशयमेषा मातरहन्ता ॥१०॥**

शाम्यतीति– मातः जननि! अस्यां विषधारायां चिन्ताजीवितं चिन्तायाः जीवितं शाम्यति शान्तं भवति, चिन्तनं मृतप्रायं भवतीत्यर्थः। इन्द्रियसत्ता चक्षुरादीन्द्रियाणां सत्ता वर्तनम् अस्तमुपैति नाशं गच्छति, एषा अहन्ता गलदेशे कण्ठप्रदेशे निरुद्धा स्तम्भिता सती संशयं याति, किमिदं योगे वर्तमानस्य शक्तिविलासवतो मम मृत्युरापतित इति सन्दिग्धे ॥१०॥

**गौरि महेशप्राणसखीमां पाहि विपन्नां मातरहन्ताम् ॥**
**सा यदि जीवेदीश्वरि तुभ्यं दासजनस्तामर्पयतेऽयम् ॥११॥**

गौरीति– गौरि महेशप्राणसखि, ईश्वरस्य जीवितसखि मातः! विपन्नां नष्टाम् ईदृशीम् आपदं प्राप्य नश्यन्तीमित्यर्थः, इमाम् अहन्तां पाहि रक्ष। ईश्वरि, सा जीवेद्यदि, दासजनः किङ्करोयं जनः तुभ्यं तामहन्ताम् अर्पयते। योगसाधनविशेषे प्रवृत्ते अवान्तरक्लेशेषु ईदृशेषु अहन्ताविलयो न कदाऽपि स्पृहणीयः। कुतः? परस्यै देव्यै समर्पणीयस्याहम्भावस्य दुःखेषु पतनात् पुनर्दुःखानां वर्धनं सम्भवश्चेति तादृशी मा भूत् दशास्या अहन्ताया इत्येवमुक्तम्। अशुद्धा चेदहन्ता, सा न कदाऽप्यर्पणमनुमन्यते अर्पणीया च न भवति, अत आह ॥११॥

**त्वत्स्मृतिवीर्याच्छान्तिसमृद्धां मातरहन्तां शुद्धतमां मे ॥**
**आत्मभुजिष्यां कर्तुमिदानीं शान्तधियस्ते कोऽस्ति विकल्पः ॥१२॥**

त्वदिति– मातः! शान्तधियः मे मम इमाम् अहन्तां त्वत्स्मृतिवीर्यात् तव स्मृतिः स्मरणं ध्यानमिति यावत्, तस्य बलात् शान्तिसमृद्धां शान्त्या

शमेन समृद्धां सम्पूर्णाम् अत एव शुद्धतमाम् अत्यन्तशुद्धाम् आत्मभुजिष्याम् आत्मनो भुजिष्यां नियोज्यां 'नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः' इत्यमरः, कर्तुं विधातुं ते तव को विकल्पोऽस्ति, वितर्कोऽस्ति? कुतः शङ्कसे? माऽस्तु संशय इत्यर्थः ॥ १२॥

**मन्दरधारी नामृतहेतु- र्वासुकिरज्जुर्नामृतहेतुः ॥**
**मन्थनहेतुस्साऽमृतहेतुः सर्वबलात्मा शर्वपुरन्ध्री ॥१३॥**

मन्दरेति— मन्दरधारी अमृतमथने मन्दरगिरिं धृतवान् कूर्मो हरिः अमृतहेतुः न, वासुकिरेव रज्जुः मथनवटी 'रज्जुस्त्रिषु वटी गुणः' इत्यमरः, सोऽमृतहेतुर्न, मन्थनहेतुः मन्थनस्य विलोडनस्य हेतुः कारण सा सर्वबलात्मा सर्वस्य बलस्य आत्मा जीवभूता यद्वा सर्वं समस्तं बलम् आत्मा शरीरं यस्याः सा शर्वपुरन्ध्री शर्वाणी दुर्गा अमृतहेतुः अमृतलाभकारणं भवतीत्यर्थः। यद्यपि मन्दरमन्था वासुकिरज्जुश्च सहकारिणौ भवतः, तथाऽपि मन्थनस्य मुख्यं निमित्तं दुर्गा भगवत्येवेत्यर्थः ॥१३॥

अमृतमन्थनवृत्तान्तस्य गूढं तत्त्वं द्वाभ्यामाह ॥

**प्राणिशरीरं मन्दरशैलो मूलसरोजं कच्छपराजः ॥**
**पूर्णमनन्तं क्षीरसमुद्रः पृष्ठगवीणा वासुकिरज्जुः ॥१४॥**

प्राणीति— प्राणिशरीरं प्राणिनो जन्मिनः शरीरं मन्दरशैलः मन्दराचलः, मूलसरोजं मूलाधारकमलं कच्छपराजः कूर्मराट् येन मन्दरो धृतः, पूर्णम् अनन्तम् आकाशं दहराख्यं हृदयं क्षीरसमुद्रः दुग्धाब्धिः, पृष्ठगवीणा वीणास्थिदण्डः वासुकिरज्जुः ॥१४॥

**दक्षिणनाडी निर्जरसेना वामगनाडी दानवसेना ॥**
**शक्तिविलासो मन्थनकृत्यं शीर्षजधारा काऽपि सुधोक्ता ॥१५॥**

दक्षिणेति— दक्षिणनाडी सुषुम्नायाः मध्यगनाड्या अपसव्यगा पिङ्गलाख्या निर्जरसेना देवसेना भवति, वामगनाडी इलाख्या दानवसेना

असुरसेना भवति, शक्तिविलासः शक्तेर्विलासः क्रीडा मन्थनकृत्यं मथनकर्म भवति। शीर्षजधारा सहस्रारकमलान्निस्स्रुता काऽपि मोदधारा सुधा अमृतम् उक्ता ॥१५॥

**कण्ठनिरुद्धे भूरिविषाग्नौ तैजसलिङ्गावासिहरेण ॥**
**त्वद्बलजातं स्वाद्वमृतं को देवि निपीय प्रेत इह स्यात् ॥१६॥**

कण्ठेति– देवि ! भूरिविषाग्नौ अमृतमन्थनसमये प्रथमं विनिर्गते वासुकिमुखात् भूरिणि विषे एव अग्नौ तैजसलिङ्गावासिहरेण तेजोमयलिङ्ग-निवासिना रुद्रेण कण्ठनिरुद्धे कण्ठे निरुद्धे प्रतिरुद्धे सति, त्वद्बलजातं तव वीर्यात् उद्भूतं स्वादु मधुरम् अमृतं निपीय नितरां पीत्वा इह को वा प्रेतः स्यात् न कोऽपि शरीरपाते प्रेतलोकं गच्छतीत्यर्थः। अमृतमथने प्रथम-निर्गतं गरलं हरेण कण्ठे निरुद्धं, तथा विषप्रसारस्य प्रतिरोधे विहिते, त्वद्बलादमृतं जातं तत्पाता न प्रेतः स्यात् इति भावः। तैजसलिङ्गा-वासिहरेणेत्यत्रेदं वक्तव्यम्। षट्चक्रभेदमार्गानुष्ठायिनां समये मूलाधारा-दाज्ञाचक्रावधि अग्नि-सूर्य-सोमात्मकं खण्डत्रयं व्यवह्रियते तत्रादौ मूलाधार-स्वाधिष्ठाने अग्निमण्डलमाहुः। तदेव तैजसं मूलाधारे लिङ्गमिति भाष्यते। तत्रस्थो भगवान् हर एव विषप्रसारं कण्ठस्थल एव प्रतिरुद्ध-वानित्यर्थः। इह योगनिष्ठस्याचार्यस्य कवेः अरुणाचलक्षेत्रे निवसतः अयम् अनुभवोऽभूत्। अरुणाचललिङ्गं तैजसलिङ्गं पुराणप्रसिद्धं तत्रावासिना हरेण भगवता मम कण्ठ एव निरुद्धा विषमदधारा, अतस्त्वद्बलादमृतं जातम् अपि-बमिति भावः ॥१६॥

**येन विभुस्ते माद्यति शर्वो यत्र शिवे त्वं क्रीडसि हृष्टा ॥**
**सम्मदमूलं तं मदमाद्ये वर्धय पुत्रेऽनुग्रहपात्रे ॥१७॥**

येनेति– शिवे भगवति ! येन मदेन ते विभुः प्रभुः शर्वः शिवः माद्यति हृष्यति मोदलहरीमनुभवतीत्यर्थः, यत्र मदे त्वं हृष्टा सन्तुष्टा सती क्रीडसि विलससि, सम्मदमूलम् आनन्दमूलकारणं तं मदम् अनुग्रहपात्रे प्रसादास्पदे आद्ये पुत्रे ज्येष्ठे गणपतौ वर्धय वर्धमानं कुरु ॥१७॥

**यो मदमीदृङ्मार्गमुपेक्ष्य स्वर्विभुपूज्ये गर्वसमेतः ॥**
**आहरति श्रीबाह्यसमृद्ध्या ना सुरया वा सोऽसुर उक्तः ॥१८॥**

य इति– स्वर्विभुपूज्ये, स्वर्विभुणा स्वर्गराजेनेन्द्रेण पूज्ये आराध्ये अम्ब ! यो ना मनुजः गर्वसमेतः गर्वेण अहङ्कारेण समेतो युक्तः सन् 'गर्वोऽभिमानोऽहङ्कारः' इत्यमरः ईदृङ्मार्गम् ईदृक् एवंविधः पूर्वश्लोकोक्तः मार्गः सम्मदमूलमार्गः यस्य तं मदं हर्षम उपेक्ष्य तिरस्कृत्य श्रीबाह्यसमृद्ध्या श्रियः सम्पदः बाह्यया समृद्ध्या बृद्ध्या सुरया वा मदिरया वा मदं हर्षम् आहरति सम्पादयति, सः असुर उक्तः। अकृत्रिमानन्दमूलं मदमनपेक्ष्य बाह्यपूजासामग्र्या धनसाध्यया हालया वा यः पुमान् मदं लभते सोऽसुर एव, न दिव्यमार्गं भजते। स च दिव्योऽध्वा उत्तरत्र 'केऽपि यजन्ते' इत्यादि श्लोकेषु वक्ष्यते ॥१८॥

**ताम्यति तीव्राफेननिषेवी क्लाम्यति संवित्पत्रनिषेवी ॥**
**भ्राम्यति हालाभाण्डनिषेवी शाम्यति शीर्षद्रावनिषेवी ॥१९॥**

ताम्यतीति– तीव्रं नितान्तम् अफेनम् अहिफेनाख्यं मादकद्रव्यं निषेवत इति तीव्राफेननिषेवी ताम्यति खिद्यति। संवित्पत्रं मादकद्रव्यविशेषं भाषया 'गञ्जा' इति प्रख्यातं निषेवत इति संवित्पत्रनिषेवी क्लाम्यति ग्लायति क्षीण-हर्षो भवत्यन्ते इत्यर्थः। हालाभाण्डं सुरापूर्णं भाण्डं पानपात्रं निषेवत इति हालाभाण्डनिषेवी अमितसुरापायी इत्यर्थः, भ्राम्यति भ्रान्तो भावति। शीर्ष-द्रावनिषेवी सहस्राररससेवी तु शाम्यति शान्तिं गच्छति, एष विशेषः माद-कानाम् अहिफेनादीनां सहस्राररसमदस्य चेत्युक्तम् ॥१९॥

**अस्तु विरेके पथ्यमफेनं पत्रमजीर्णेष्वस्तु निषेव्यम् ॥**
**अस्तु हितं तद्यक्ष्मणि मद्यं संसृतिहारी देवि रसस्ते ॥२०॥**

अस्त्विति– अफेनम् अहिफेनं मादकद्रव्यं भेषजतया प्रयुक्तं सत् विरेके अजीर्त्यादिजन्ये विरेचने अतिसारादौ रोगे वा पथ्यं हितम् अस्तु भवतु। पत्रं संवित्पत्रम् अजीर्णेषु मन्दाग्निषु निषेव्यं जठराग्निदीपनाय सेव्यम् अस्तु। यक्ष्मणि क्षयरोगे मद्यं सुरा हितम् अनुकूलम् अस्तु। देवि, अम्ब ! ते तव

रसः सहस्रारसोमरसस्तु संसृतिहारी जनन-मरण-भ्रान्तिहृत् भवति। अहि-फेनादि भेषजे प्रयुक्तं गुणाय, अन्यथा तु दोषायेति कृत्वा महतां तत्सेवनेन अदोषेऽपि, अन्येषां दोषावहमित्याह ॥२०॥

**नैव महान्तस्सत्त्वसमृद्धाः सर्वमदेष्वप्यम्ब चलन्तु ॥**
**अल्पजनानां मादकवस्तु- प्राशनमीशे नाशनमुक्तम् ॥२१॥**

नैवेति— अम्ब, ईशे ईश्वरि ! सत्त्वसमृद्धाः सत्त्वेन समृद्धाः सारसम्पूर्णाः महासत्त्वाः महान्तः पुरुषाः सर्वमदेषु, सर्वेषु मदेषु अहिफेनादिषु नैव चलन्तु न किमपि मादकं वस्तु सेवन्ताम्। तेषामदोषेऽपि, तद्दर्शनेन अन्येऽप्यल्पाःताननुसृत्य पतिताः स्युरितीयं प्रार्थना। अल्पजनानां सामान्यानाम् अल्प-सत्त्वानां मादकवस्तुप्राशनं मदकरद्रव्यनिषेवणं नाशनं पातकम् उक्तं भवति ॥२१॥

**केऽपि यजन्ते यन्मधुमांसै- स्त्वां त्रिपुरारेर्जीवितनाथे ॥**
**अत्र न यागो दूषणभागी द्रव्यससङ्गो दुष्यति यष्टा ॥२२॥**

केऽपीति— त्रिपुरारेः रुद्रस्य जीवितनाथे प्राणेश्वरि, देवि ! केऽपि तान्त्रिकाः त्वां मधु-मांसैः मकारपञ्चकान्तर्गतैः मद्यैः मांसैश्च यजन्ते इति यत् अत्र विषये यागो यजनकर्म दूषणे दोषे भागोऽस्येति दूषणभागी न भवति एवं मधु-मांसैः त्वद्यजनकर्म न दोषाय भवति। किन्तु द्रव्यससङ्गः सङ्गेन वर्तते इति ससङ्गः द्रव्ये मधु-मासांत्मके ससङ्गः मधु-मांससक्तो यष्टा याजकः दुष्यति दोषी भवति। येन केनापि साधनेन यजनं गुणायैव। मधु-मांस-ससङ्गस्तु दोषकृदेवेत्यर्थः ॥२२॥

**दक्षिणमार्गे सिद्धयति भक्तः सव्यसरण्यां सिद्धयति वीरः ॥**
**नेश्वरि सव्ये नाप्यपसव्ये सिद्धयति दिव्ये त्वध्वनि मौनी ॥२३॥**

दक्षिणेति— ईश्वरि ! दक्षिणमार्गे समयाचारपथे भक्तः सिद्धयति सिद्धो भवति उपासको भक्तो भवतीत्यर्थः, भक्तिरेव प्रधानं, समयाचारेण देवी-मपासमानस्येति भावः। सव्यसरण्यां वाममार्गे वीरः सिद्धयति। वाममार्गः

कुलाचारपथः, तत्र मकारपञ्चकं प्रधानं तन्त्रोक्तम्। तेनोपासमानो वीरो भवति। एतन्मार्गावलम्बी कौलः वीरभावं भजते इत्यर्थः। मौनी सव्ये अध्वनि वामे मार्गे न सिद्ध्यति, अपसव्ये अपि अध्वनि दक्षिणेऽपि मार्गे मौनी न सिद्ध्यति, किन्तु दिव्ये अध्वनि मार्गे सिद्ध्यति सिद्धिमधिगच्छति इत्यर्थः। तान्त्रिकाः पशुभावो वीरभावो दिव्यभाव इति मार्गत्रयमाहुः। तत्र आद्यौ भावौ पूर्वार्धेनोक्त्वा तृतीयः उत्तरार्धेनोक्तः। तस्यैव स्वरूपं विवृणोति उत्तरश्लोकेन ॥२३॥

**नार्चनभारो नापि जपोऽस्यां दिव्यसरण्यां भव्यतमायाम् ॥**
**केवलमम्बापादसरोजं निश्चलमत्या मृग्यमजस्रम् ॥२४॥**

नार्चनेति— भव्यतमायाम् अत्यन्तशुभायाम् अस्यां सरणौ दिव्येऽध्वनीत्यर्थः, अर्चनभारो पूजनोपकरणसामग्रीसम्पादनभारो नास्ति, नापि जपः यथाविधि मन्त्रपुरश्चरणं वा नास्ति। केवलं निर्धारितम् अम्बापादसरोजं देवीपादारविन्दमेव निश्चलमत्या अचञ्चलधिया ऐकाग्र्येणेत्यर्थः, अजस्रं नित्यं मृग्यम् अन्वेष्यम्। नित्यं देवीपदान्वेषणमेव दिव्यो मार्गः, स च न बहिरङ्गपूजापद्धतिं जपादिं वाऽपेक्षते ॥२४॥

**काचिदमूल्या चम्पकमाला- वृत्तनिबद्धा मञ्जुलमाला ॥**
**अस्तु गणेशस्येश्वरकान्ता- कण्ठविलोला चम्पकमाला ॥२५॥**

काचिदिति— गणेशस्य गणपतेः कवेः काचित् चम्पकमालावृत्तनिबद्धा चम्पकमालाख्येन वृत्तेन निबद्धा रचिता अमूल्या अनर्घा मञ्जुलमाला मृदुमधुरपदार्थगुम्फितपद्यपङ्क्तिः, कोमलस्रक् च चम्पकमाला चम्पकपुष्पमाला भूत्वा ईश्वरकान्ताकण्ठविलोला ईश्वरकान्तायाः ईश्वर्याः कण्ठे गले विलोला तरला अस्तु। ईश्वर्याः कण्ठे ममेयं स्तुतिः चम्पकपुष्पमालायतामित्यर्थः। अमूल्यामञ्जुलमाले श्लिष्टे विशेषणे। कण्ठविलोलेत्यत्र कण्ठे नादे इति लक्षणया व्याख्याते भगवत्याः कण्ठध्वनौ मम कृतिः चलत्विति भावः, 'कण्ठो वाचकशब्दे स्यात्सन्निधाने गले ध्वनौ' इति नानार्थरत्नमाला। एकान्तभक्तेन

रसः सहस्रारसोमरसस्तु संसृतिहारी जनन-मरण-भ्रान्तिहृत् भवति। अहिफेनादि भेषजे प्रयुक्तं गुणाय, अन्यथा तु दोषायेति कृत्वा महतां तत्सेवनेन अदोषेऽपि, अन्येषां दोषावहमित्याह ॥२०॥

**नैव महान्तस्सत्त्वसमृद्धाः सर्वमदेष्वप्यम्ब चलन्तु ॥**
**अल्पजनानां मादकवस्तु- प्राशनमीशे नाशनमुक्तम् ॥२१॥**

नैवेति— अम्ब, ईशे ईश्वरि ! सत्त्वसमृद्धाः सत्त्वेन समृद्धाः सारसम्पूर्णाः महासत्त्वाः महान्तः पुरुषाः सर्वमदेषु, सर्वेषु मदेषु अहिफेनादिषु नैव चलन्तु न किमपि मादकं वस्तु सेवन्ताम्। तेषामदोषेऽपि, तद्दर्शनेन अन्येऽप्यल्पाःताननुसृत्य पतिताः स्युरितीयं प्रार्थना। अल्पजनानां सामान्यानाम् अल्पसत्त्वानां मादकवस्तुप्राशनं मदकरद्रव्यनिषेवणं नाशनं पातकम् उक्तं भवति ॥२१॥

**केऽपि यजन्ते यन्मधुमांसै- स्त्वां त्रिपुरारेर्जीवितनाथे ॥**
**अत्र न यागो दूषणभागी द्रव्यससङ्गो दुष्यति यष्टा ॥२२॥**

केऽपीति— त्रिपुरारेः रुद्रस्य जीवितनाथे प्राणेश्वरि, देवि ! केऽपि तान्त्रिकाः त्वां मधु-मांसैः मकारपञ्चकान्तर्गतैः मद्यैः मांसैश्च यजन्ते इति यत् अत्र विषये यागो यजनकर्म दूषणे दोषे भागोऽस्येति दूषणभागी न भवति एवं मधु-मांसैः त्वद्यजनकर्म न दोषाय भवति। किन्तु द्रव्यससङ्गः सङ्गेन वर्तते इति ससङ्गः द्रव्ये मधु-मासात्मके ससङ्गः मधु-मांससक्तो यष्टा याजकः दुष्यति दोषी भवति। येन केनापि साधनेन यजनं गुणायैव। मधु-मांसससङ्गस्तु दोषकृदेवेत्यर्थः ॥२२॥

**दक्षिणमार्गे सिद्ध्यति भक्तः सव्यसरण्यां सिद्ध्यति वीरः ॥**
**नेश्वरि सव्ये नाप्यपसव्ये सिद्ध्यति दिव्ये त्वध्वनि मौनी ॥२३॥**

दक्षिणेति— ईश्वरि ! दक्षिणमार्गे समयाचारपथे भक्तः सिद्ध्यति सिद्धो भवति उपासको भक्तो भवतीत्यर्थः, भक्तिरेव प्रधानं, समयाचारेण देवीमपासमानस्येति भावः। सव्यसरण्यां वाममार्गे वीरः सिद्ध्यति। वाममार्गः

कुलाचारपथः, तत्र मकारपञ्चकं प्रधानं तन्त्रोक्तम्। तेनोपासमानो वीरो भवति। एतन्मार्गावलम्बी कौलः वीरभावं भजते इत्यर्थः। मौनी सव्ये अध्वनि वामे मार्गे न सिद्ध्यति, अपसव्ये अपि अध्वनि दक्षिणेऽपि मार्गे मौनी न सिद्ध्यति, किन्तु दिव्ये अध्वनि मार्गे सिद्ध्यति सिद्धिमधिगच्छति इत्यर्थः। तान्त्रिकाः पशुभावो वीरभावो दिव्यभाव इति मार्गत्रयमाहुः। तत्र आद्यौ भावौ पूर्वार्धेनोक्त्वा तृतीयः उत्तरार्धेनोक्तः। तस्यैव स्वरूपं विवृणोति उत्तरश्लोकेन ॥२३॥

**नार्चनभारो नापि जपोऽस्यां दिव्यसरण्यां भव्यतमायाम् ॥**
**केवलमम्बापादसरोजं निश्चलमत्या मृग्यमजस्रम् ॥२४॥**

नार्चनेति— भव्यतमायाम् अत्यन्तशुभायाम् अस्यां सरणौ दिव्येऽध्वनीत्यर्थः, अर्चनभारो पूजनोपकरणसामग्रीसम्पादनभारो नास्ति, नापि जपः यथाविधि मन्त्रपुरश्चरणं वा नास्ति। केवलं निर्धारितम् अम्बापादसरोजं देवीपादारविन्दमेव निश्चलमत्या अचञ्चलधिया ऐकाग्र्येणेत्यर्थः, अजस्रं नित्यं मृग्यम् अन्वेष्यम्। नित्यं देवीपदान्वेषणमेव दिव्यो मार्गः, स च न बहिरङ्गपूजापद्धतिं जपादिं वाऽपेक्षते ॥२४॥

**काचिदमूल्या चम्पकमाला- वृत्तनिबद्धा मञ्जुलमाला ॥**
**अस्तु गणेशस्येश्वरकान्ता- कण्ठविलोला चम्पकमाला ॥२५॥**

काचिदिति— गणेशस्य गणपतेः कवेः काचित् चम्पकमालावृत्तनिबद्धा चम्पकमालाख्येन वृत्तेन निबद्धा रचिता अमूल्या अनर्घा मञ्जुलमाला मृदुमधुरपदार्थगुम्फितपद्यपङ्क्तिः, कोमलस्रक् च चम्पकमाला चम्पकपुष्पमाला भूत्वा ईश्वरकान्ताकण्ठविलोला ईश्वरकान्तायाः ईश्वर्याः कण्ठे गले विलोला तरला अस्तु। ईश्वर्याः कण्ठे ममेयं स्तुतिः चम्पकपुष्पमालायतामित्यर्थः। अमूल्यामञ्जुलमाले श्लिष्टे विशेषणे। कण्ठविलोलेत्यत्र कण्ठे नादे इति लक्षणया व्याख्याते भगवत्याः कण्ठध्वनौ मम कृतिः चलत्विति भावः, 'कण्ठो वाचकशब्दे स्यात्सन्निधाने गले ध्वनौ' इति नानार्थरत्नमाला।

# अष्टादशः स्तबकः

अथास्मिन्नष्टादशे स्तबके देवीरूपम् अभिवर्ण्य तस्य पिण्डाण्डे तत्त्वम् उद्घाटयति ॥

धुन्वन्त्यस्तिमिरततिं हरित्तटीनां
धिन्वन्त्यः पुरमथनस्य लोचनानि ॥
स्कन्दाम्बाहसितरुचो हरन्तु मोहं
सान्द्रं मे हृदयगतं प्रसह्य सद्यः ॥१॥

धुन्वन्त्य इति– हरित्तटीनां हरितां दिशां तटीनां प्रदेशानां तिमिरततिम् अन्धकारविस्तृतिं धुन्वन्त्यः अपहरन्त्यः, पुरमथनस्य पुरारेः रुद्रस्य नयनानि त्रीण्यपि धिन्वन्त्यः प्रीणयन्त्यः स्कन्दाम्बाहसितरुचः सुब्रह्मण्यमातृमन्दस्मितप्रभाः मे मम हृदयगतं हृदयं गतम् अन्तःस्थितं सान्द्रं घनं मोहम् अबोधं सद्यः सपदि प्रसह्य बलात्कृत्य हरन्तु। हृदयग मूलाज्ञानम् अपहरन्तु, ज्ञानदायिकारणगुरोः सुब्रह्मण्यस्य जनन्याः मन्दस्मितप्रभाः प्रार्थिताः। तस्मात हृदयग-तमोपहरणाय स्कन्दाम्बापदोपादानं रमणीयमौचित्यावहम् ॥१॥

तन्वाना विनतहितं विरोधिवर्गं
धुन्वाना बुधजनमोदमादधाना ॥
सम्राज्ञी त्रिदिवधरारसातलानां
रुद्राणी भणतु शिवानि मत्कुलस्य ॥२॥

तन्वानेति– विनतहितं विनतेभ्यः प्रणतेभ्यो हितं श्रेयः तन्वाना कुर्वाणा विरोधिवर्गं शत्रुगणं धुन्वाना कम्पयन्ती दूरीकुर्वाणेत्यर्थः, बुधजनमोदं सूरिजनानाम् आनन्दम् आदधाना जनयन्ती, त्रिदिव-धरा-रसातलानां त्रिदिवस्य स्वर्गस्य धरायाः भूमेः रसातलस्य पातालस्य च सम्राज्ञी चक्रवर्तिनी रुद्राणी मत्कुलस्य मम वंशस्य शुभानि भणतु मङ्गलं ब्रवीतु अनुगृह्णात्वित्यर्थः ॥२॥

**योऽम्ब त्वां हृदि विदधत्तटित्प्रकाशां**
**पीयूषद्युतिमदहृन्मुखारविन्दाम् ॥**
**अन्यत्तु स्मृतिपथतो धुनोति सर्वं**
**कामारेः सुदति न तस्य भुव्यसाध्यम् ॥३॥**

योऽम्बेति— अम्ब, कामारेः रुद्रस्य सुदति सुन्दरि ! तटित्प्रकाशां विद्युन्निभां पीयूषद्युतिमदहृन्मुखारविन्दां पीयूषद्युतेः अमृतांशोश्चन्द्रस्य मदं हरतीति मदहृत् मुखम् अरविन्दमिव यस्यास्तां त्वां हृदि हृदये विदधत् आकलयन् अन्यत्सर्वम् इतरत्सकलं तु स्मृतिपथतो स्मरणमार्गात् यः धुनोति दूरीकरोति, तस्य भुवि इहलोके असाध्यं न, सर्वं शक्यं भवतीत्यर्थः ॥३॥

**कालाभ्रद्युतिमसमानवीर्यसारां**
**शक्त्यूर्मिभ्रमकरशुक्लघोरदंष्ट्राम् ॥**
**यो धीरो मनसि दधाति भर्गपत्नि**
**त्वामस्य प्रभवति सङ्गरेषु शस्त्रम् ॥४॥**

कालाभ्रेति— भर्गपत्नि, रुद्रमहिषि ! कालाभ्रद्युतिं नीलमेघप्रभाम् असमानवीर्यसाराम् असमानः अद्वितीयः वीर्यसारः पराक्रमबलं यस्याः सा तां शक्त्यूर्मिभ्रमकरशुक्लघोरदंष्ट्रां शुक्लाः धवलाः घोराः भीषणाः च दंष्ट्राः करालदन्ताः शुक्लघोरदंष्ट्राः शक्तीनामूर्मयो वीचयः तासु भ्रमाः भ्रमयः भ्रमणानीति यावत् 'भ्रमो भ्रमौ' इत्यमरः, ते एव कराः अंशवः यासां ताः, यद्वा शक्त्यूर्मिभ्रमान् कुर्वन्तीति शक्त्यूर्मिभ्रमकर्यः समासे पुंवद्भावः दंष्ट्राः यस्याः तां, स्वीयधवलभीषणदंष्ट्राभिः शक्तितरङ्गेषु भ्रमिं कुर्वाणां, स्वीयधवलदंष्ट्रांशव एव शक्तितरङ्गभ्रमा इति वा भावः। अनेन वाराहीमूर्तिः काली ध्येयतयोक्ता। तां त्वा यो धीरः मनसि दधाति धारयते अस्य तस्य ध्यातुः सङ्गरेषु समरेषु शस्त्रम् आयुधं प्रभवति जयसमर्थं भवति ॥४॥

**यः प्राज्ञस्तरुणदिवाकरोज्ज्वलाङ्गीं**
**तन्वङ्गि त्रिपुरजितो विचिन्तयेत्त्वाम् ॥**

**तस्याज्ञां दधति शिरस्सु फुल्लजाजी-**
**मालां वा धरणिजुषो वशे भवन्तः ॥५॥**

य इति– त्रिपुरजितो रुद्रस्य तन्वङ्गि सुन्दरि, देवि ! यः प्राज्ञः विद्वान तरुणदिवाकरोज्ज्वलाङ्गीं तरुणो दिवाकर इव बालार्क इव उज्ज्वलं भ्राजमानम् अङ्गं शरीरं यस्यास्ता त्वां विचिन्तयेत् ध्यायेत्, धरणिजुषः भूजुषो मानवाः तस्य वशे भवन्तः तदधीनाः सन्तः आज्ञा तस्यादेशं फुल्लजाजी-मालां वा विकसितजाजीपुष्पमालाम् इव 'इव वद्वा यथा समौ' इत्यमरः, शिरस्सु दधति धरन्ति। सुप्रीताः तदधीनाः सन्तः तस्याज्ञाकराः भवन्ति मानवाः यस्त्वां बालसूर्याभाम् उपास्ते इति भावः ॥५॥

**यो राकाशशधरकान्तिसारशुभ्रां**
**बिभ्राणां करकमलेन पुस्तकं त्वाम् ॥**
**भूतेशं प्रभुमसकृत्प्रबोधयन्तीं**
**ध्यायेद्वाग्भवति वशेऽस्य नाकदूती ॥६॥**

य इति– यः राकाशशधरकान्तिसारशुभ्रां राकाशशधरस्य पूर्णिमाचन्द्रस्य कान्तेः रुचेः सारः अमृतं तद्वत् शुभ्रां प्रसन्नधवलां, पुस्तकं करकमलेन बिभ्राणां, पुस्तकहस्ताम् इत्यर्थः। प्रभु पतिं भूतेशं पशुपतिम् असकृत् बहुवारं प्रबोधयन्तीं, नित्यसमाधिनिष्ठस्य भगवतः परमेश्वरस्य जगद्विषयकबोधाय असकृत् तस्य प्रबोधं विदधानामित्यर्थः। ईदृशीं त्वां भगवती ध्यायेत् तस्य पुरुषस्य वशे वाक् सरस्वती नाकदूती स्वर्गदूती भवति भवेत्, वाक् तदधीना सती स्वर्गिणां हृदयं च प्रवेष्टुं प्रभवतीत्यर्थः। एवमुपासमानो-ऽसमानामोघवाग्वीर्यः स्ववाचं देवान् श्रावयितु प्रभुर्भवतीत्याशयः ॥६॥

**जानीमो भगवति भक्तचित्तवृत्ते-**
**स्तुल्यं त्वं सपदि दधासि रूपमग्र्यम् ॥**
**प्रश्नोऽयं भवति नगाधिनाथकन्ये**
**रूपं ते मदयति कीदृशं स्मरारिम् ॥७॥**

जानीम इति– भगवति ! भक्तचित्तवृत्तेः भक्तस्य चित्तवृत्तेः मनोवृत्तेः तुल्यं सदृशम् अग्र्यं प्रशस्तं रूपम् आकृतिमित्यर्थः सपदि सद्यो दधासि

धरसि, वयमिदं जानीमः विद्मः। नगाधिनाथकन्ये पर्वतराजपुत्रि! अयं प्रश्नः भवति। तमाह। ते तव कीदृशं, किमिव दृश्यते इति कीदृशं, कथंभूतं रूपं स्मरारि मदनशत्रु मदयति मोहयति। स्वेच्छया रूपाणि धर्तु प्रभ्वी त्वमिति विदितम्। तथाऽपि कामशत्रु वशयितुं किं रूपं धारयसे? ॥७॥

**चारु स्यादलमिति वक्तुमम्ब शक्यं**
**रूपं ते न वदति कोऽपि कीदृशं वा ॥**
**सम्मोहं परमुपयान्ति कान्तिभाण्डे**
**कामारेरपि नयनानि यत्र दृष्टे ॥८॥**

चार्विति– अम्ब! अलं पर्याप्तं चारु सुन्दरं स्यात् भवेदिति वक्तुं शक्यम्। मदनारि मदयितुं रूप यावत् चारु रूपम् अपेक्षितं तावच्चारु इति वचनं सुलभमेव। तथाऽपि कोऽपि नरः सुरो वा ते तव रूपं कीदृशम् इति न वदति। कान्तिभाण्डे कान्तीनां कमनीयरुचां भाण्डे आधारपात्रे तेजःपुञ्जनिधानभूते यत्र यस्मिन् तव रूपे दृष्टे सति कामारेरपि मन्मथशत्रोरपि नयनानि त्रीणि परम् अत्यधिकं सम्मोहम् उपयान्ति मोहवशङ्गतानि भवन्ति। तत्ते रूपं न कोऽपि वदतीति सम्बन्धः। उत्तरवाक्ये यत्रेति यच्छब्दोपादानात् तदिति पूर्वत्राध्याहार्यम् ॥८॥

**सङ्कल्पैः किमु तव भूषणान्यभूवं-**
**च्छिल्पीन्द्राः किमु विदधुर्यथाऽत्र लोके ॥**
**तत्स्वर्णं भगवति कीदृशं मणीनां**
**किं रूपं भवति च तत्र योजितानाम् ॥९॥**

सङ्कल्पैरिति– भगवति, तव सङ्कल्पैः भूषणानि अभूवम् किमु? केवलसङ्कल्पबलेनैव तवाभरणानि प्रादुर्भूतानि किमु? यथा अत्र लोके तथा शिल्पीन्द्राः कलाकुशलाः स्वर्णकाराः विदधुः, भूषणानि चक्रुः किमु? तत्स्वर्णं कीदृशं कथम्भूतं, येन भूषणानि विधीयन्ते? तत्र भूषणेषु योजितानां खचितानां मणीनां रत्नानां रूपं स्वरूपं किम्? ॥९॥

**यान्यङ्गान्यखिलमनोज्ञसारभूता-**
**न्येतेषामपि किमु भूषणैरुमे ते ॥**
**आहोस्विल्ललिततमानि भान्ति भूयो**
**भूषाभिर्विकृततमाभिरप्यमूनि ॥१०॥**

यानीति– उमे भगवति ! यानि ते तव अङ्गानि गात्राणि अखिलमनोज्ञसारभूतानि सकलरमणीयवस्तुसारभूतानि भवन्तीत्यध्याहार्यम्, तेषाम् एतेषामपि भूषणैः किमु ? भूषणैः प्रयोजनं नास्ति, सुन्दरतमानाम् अङ्गानाम् उत्कर्षाधानस्य कुतोऽवकाशः ? आहोस्वित् अथवा अमूनि निसर्गरमणीयानि अङ्गानि विकृततमाभिः अतिशयेन विकृताभिः कृतकत्वात् भूषाभिः ललिततमानि अत्यन्तकोमलानि भूयो विशेषतो भान्ति। अथवा तव अङ्गानां नैसर्गिकरामणीयकस्य अत्युत्कर्षः भूषाणां कृतकरामणीयकेन सुतरां स्पष्टो भवतीति भावः ॥१०॥

**मुक्ताभिर्भवति तवाम्ब किन्नु हारः**
**पीयूषद्युतिकरसारनिर्मलाभिः ॥**
**मुण्डैर्वा घलघलशब्दमादधद्भिः**
**सङ्घर्षात्त्रिभुवनसार्वभौमभामे ॥११॥**

मुक्ताभिरिति– अम्ब ! पीयूषद्युतिकरसारनिर्मलाभिः पीयूषद्युतेश्चन्द्रमसः कराणां किरणानां सारस्तुषार इव, चन्द्ररश्मेर्हिमगर्भत्वात्, निर्मलाभिः स्वच्छाभिः मुक्ताभिः मौक्तिकमणिभिः तव हारः किं नु भवति ? त्रिभुवनसार्वभौमभामे त्रिलोकचक्रवर्तिकुटुम्बिनि ! उत, सङ्घर्षात् अन्योन्यतीव्रघर्षणात् घलघलशब्दं घलघलायमानं ध्वनिम् आदधद्भिः वितन्वद्भिः मुण्डैः नरकलेबरैः भवति हारः ? दक्षिणकालीमूर्तेर्मुण्डमाला तन्त्रप्रसिद्धा। अतः पृच्छति सुन्दर्यास्तव किं मुक्ताहारः कण्ठे उत मुण्डमाला ? इति ॥११॥

**वस्त्रं स्याद्यदि तव सर्वशास्त्रगम्ये**
**कार्पासं दिवि च तदुद्भवोऽनुमेयः ॥**
**क्षौमं चेद्भगवति तस्य हेतुभूताः ।**
**कीटाः स्युर्गगनजगत्यपीति वाच्यम् ॥१२॥**

वस्त्रमिति– सर्वशास्त्रगम्ये सर्वैर्निगमागमादिशास्त्रैः गम्ये प्रतिपाद्ये अम्ब !

तव कार्पासं कार्पासीफलतन्तुनिर्मितं वस्त्रं वसनं यदि स्यात्, दिवि च द्यु-लोकेऽपि तदुद्भवः तस्य कार्पासस्य उद्भवः उत्पत्तिः अनुमेयः ऊह्यः। भगवति! क्षौमं चेत्, तव वस्त्रं कौशेयं चेत्, क्षौमं नेह वाल्कं भवति कीटा-प्रसक्तेः, गगनजगत्यपि अन्तरिक्षलोकेऽपि तस्य हेतुभूताः कीटाः क्रिमयः स्यु-रिति वाच्यं कौशेयस्य क्रिमिकोशोत्थत्वात् ॥१२॥

**रुद्रस्य प्रियदयितेऽथवा सुरद्रु-**
**र्भूषाणां मणिकनकप्रकल्पितानाम् ॥**
**वस्त्राणामपि मनसे परं हितानां**
**कामं ते भवति समर्पकः समर्थः ॥१३॥**

रुद्रस्येति— रुद्रस्य प्रियदयिते प्रेयसि रामे! अथवा पक्षान्तरे, सुरद्रुः देवतरुः कल्पतरुः कर्ता, मणिकनकप्रकल्पितानां मणिभिः रत्नैः कनकेन स्वर्णेन प्रकल्पितानां निर्मितानां भूषाणा परम् अत्यन्तं मनसे हितानां मनोहराणाम् इत्यर्थः, वस्त्राणामपि कामं नितान्तं समर्थः निपुणः समर्पको भवति। कल्प-तरुर्वा तव वस्त्रभूषणसमर्पणनिपुणो भवतीत्यर्थः॥१३॥

**सुस्कन्धो बहुविटपः प्रवालशोभी**
**सम्फुल्लप्रसवसुगन्धवासिताशः ॥**
**वृक्षः किं भगवति कल्पनामकोऽयं**
**सङ्कल्पः किमु तव कोऽपि देवि सत्यः ॥१४॥**

सुस्कन्ध इति— भगवति देवि! सुस्कन्धः शोभनः स्कन्धः प्रकाण्डो यस्य सः, बहुविटपो बहुर्बहुलो विटपो वृक्षविस्तारो यस्य सः, प्रवालैः किसलयैः शोभत इति प्रवालशोभी, सम्फुल्लप्रसवसुगन्धवासिताशः सम्फुल्लानां विकसि-तानां प्रसवानां कुसुमाना सुगन्धेन आमोदेन वासिता आशा दिशो यस्य सः, कल्पनामकः कल्पो नाम यस्य सः कल्पनामैव कल्पनामकः अयं वृक्षः किम्? उत सत्यस्तव कोऽपि सङ्कल्पः? ॥१४॥

अथ कामधेनु-कल्पवृक्षाणाम् अध्यात्मं तत्त्वमाह॥

**सङ्कल्पान्न भवति कल्पपादपोऽन्यः**
**स्वर्दोग्ध्री पुनरितरा न कुण्डलिन्याः ॥**
**यः कुर्याद् द्वयमिदमुद्गतात्मवीर्यं**
**कारुण्यात्तव भुवि चास्य नाकभाग्यम् ॥१५॥**

सङ्कल्पादिति– अम्ब ! सङ्कल्पात् कल्पपादपः सर्वदायी कल्पवृक्षः अन्यः न भवति। कुण्डलिन्याः शक्तेः स्वर्दोग्ध्री कामधेनुः न पुनरितरा भवति। यः इदं द्वयं सङ्कल्पः कुण्डलिनीति द्वयम् उद्गतं प्रबुद्धम् आत्मवीर्यं स्वबलं यस्य तत् कुर्यात् विदध्यात् अस्य तस्य तव कारुण्यात् भुवि भूलोक एव नाकभाग्यं स्वर्गलोकभाग्यं भवतीति शेषः ॥१५॥

**आपीनं भवति सहस्रपत्रकञ्जं**
**वत्सोऽस्याः पटुतरमूलकुण्डवह्निः ॥**
**दोग्धाऽऽत्मा दहरसरोरुहोपविष्टो**
**मौनं स्यात्सुरसुरभेस्तनूषु दोहः ॥१६॥**

आपीनमिति–सहस्रपत्रकञ्जं सहस्रारकमलम् आपीनम् ऊधो भवति 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। अस्या. सुरसुरभेः कामधेन्वाः, कुण्डलिनी कामधेनुरिति प्रागुक्तेः। वत्सः पटुतरमूलकुण्डवह्निः पटुतरः निपुणतरो मूले मूलाधारे एव कुण्डे कुलकुण्डे यः वह्निः अग्निः कुण्डलिनीप्रसूतो मूलाग्निरेव वत्स इत्यर्थः, दहरसरोरुहोपविष्टः हृदयाकाशसमासीन आत्मा दोग्धा भवति। मौनं शान्तिसमृद्धं निरस्तनिखिलविषयं तनुषु शरीरेषु दोहः दोहनक्रिया भवतीत्यर्थः ॥१६॥

**दोग्ध्र्यास्ते भगवति दोहनेन लब्धं**
**वत्साग्निप्रथमनिपानसद्रवायाः ॥**
**दुग्धं स्वाद्वमृतमयं पिबन्ममात्मा**
**सन्तृप्तो न भवति दुर्भरोऽस्य कुक्षिः ॥१७॥**

दोग्ध्र्या इति– वत्साग्निप्रथमनिपानसद्रवायाः वत्सोऽग्निः मूलकुण्डाग्निः तस्य प्रथमेन निपानेन नितरां पानेन द्रवेण सहितायाः सद्रवायाः पस्नुत-

दुग्धायाः दोग्ध्र्याः धेन्वाः तव कर्मणि षष्ठी दोहनेन लब्धं दुग्धं स्वादु मधुरम् अमृतमयम् अमृतं, स्वार्थे मयट् पिबन् मम आत्मा जीवः सन्तृप्तो न भवति, लब्धादधिकं पातुमिच्छति, तावता पीतेन अलमिति न तृप्तिं गच्छति। हेतुमाह, अस्य ममात्मनः कुक्षिः उदरं दुर्भरः दुःखेन भर्तुं पोषयितु शक्यः। बहुलभोजिनः अल्पमशनं नालम् ॥१७॥

**वत्सोऽग्निः पिबति दृढाङ्घ्रिरम्ब पश्चा-**
**दश्रान्तं पिबति दुहन् पुरोऽन्तरात्मा ॥**
**वृद्धिं च व्रजति पयः प्रतिप्रदोहं**
**दोग्ध्र्यास्ते द्रव इह कुण्डलिन्यपारः ॥१८॥**

वत्स इति— वत्सोऽग्निः दृढाङ्घ्रिः सन् इतस्ततोऽस्खलितपदक्षेपः सन् पिबति दुग्धम्। पुरः पुरोभागे अन्तरात्मा दुहन् दोहनं कुर्वन् अश्रान्तमविरतं पिबति। प्रकृष्टो दोहः प्रदोहः प्रदोहे प्रदोहे प्रतिप्रदोहं पयः दुग्धं वृद्धिं च व्रजति, वर्धमानमेव भवति। दुग्धमुपर्युपरि प्रस्नुतमेव भवति न तस्य ह्रासो भवति। भोः कुण्डलिनि देवि! दोग्ध्र्याः कामधेन्वास्तव द्रवो दुग्धरसः अपारः अमित इत्यर्थः ॥१८॥

**सोमस्य द्रवमिममाहुरम्ब केचिद्**
**दुग्धाब्धेरमृतरसं गदन्ति केऽपि ॥**
**बाष्पं केऽप्यभिदधते तु कौलकुण्डं**
**पीनोधस्स्रवमितरे भणन्ति धेनोः ॥१९॥**

सोमस्येति— अम्ब! इमं रसं केचित् सोमस्य द्रवं सोमलतारसं चन्द्रकिरणामृतं वा आहुः। केऽपि दुग्धाब्धेः क्षीरसागरस्य अमृतरसम् अमृतमेव रसं सारं गदन्ति भणन्ति। केऽपि अन्ये तु कुलकुण्डस्य मूलाग्निकुण्डस्य इदं कौलकुण्डं बाष्पम् ऊष्माम्बु अभिदधते वदन्ति। इतरे तु धेनोः कामधेनोः पीनोधस्स्रवं पीनस्य पीवरस्योधसः आपीनस्य स्रवं द्रवं भणन्ति वदन्ति। एवं बहुधोल्लेखादुल्लेखोऽलङ्कारः ॥१९॥

**मूले त्वं ज्वलदनलप्रकाशरूपा**
**वीणायां प्रबलमहामदोष्मरूपा ॥**
**शीर्षाब्जे सततगलद्रसस्वरूपा**
**भ्रूमध्ये भवसि लसत्तटित्स्वरूपा ॥२०॥**

मूले इति— त्वं मूले मूलाधारे ज्वलदनलप्रकाशरूपा ज्वलतो दीप्यतोऽनलस्य अग्नेः प्रकाशः रूपं यस्याः सा, वीणायां वीणास्थिदण्डे प्रबलमहामदोष्मरूपा प्रबलस्य महतो मदस्य सम्मदस्य ऊष्मा रूपं यस्याः सा, शीर्षाब्जे सहस्रारकमले सततगलद्रसस्वरूपा सततम् अजस्रं गलन् रसः सोमरसः स्वरूपं यस्याः सा, भ्रूमध्ये आज्ञाचक्रे लसत्तटित्स्वरूपा लसन्ती विलसन्ती तटित् विद्युत् स्वरूपं यस्याः सा भवसीति सर्वत्र अध्याहार्यम् ॥२०॥

**हार्दे चेदवतरसीह पुण्डरीके**
**छायावत्सकलमपि प्रपश्यसि त्वम् ॥**
**आरूढा दशशतपत्रमद्रिपुत्रि**
**स्याश्चेत्त्वं भणसि जगत्सुधासमुद्रम् ॥२१॥**

हार्दे इति— अद्रिपुत्रि पार्वति ! इह, हृद इदं हार्दं तस्मिन् हार्दे पुण्डरीके हृदयकमले अवतरसि चेत्, त्वं सकलमपि छायावत् प्रपश्यसि। हृदि स्थितस्य पुरुषस्य विश्वं छायामयम् अवास्तवं भातीत्यात्मविदनुभवसिद्धम्। दशशतपत्रं सहस्रारकमलम् आरूढा स्याश्चेत्, त्वं जगत् विश्वं सुधासमुद्रम् अमृतसागरं भणसि। हृदयस्थस्यात्मनोऽन्यत्सर्वं छायामयम्, आत्मन एव सर्वात्मिकत्वात्, सहस्रारगतस्य सर्वममृतमयं भवति। सर्वस्य जगतस्तदात्मकत्वेनानुभूतेः ॥२१॥

**नेत्राभ्यां सरसिरुहच्छदायताभ्यां**
**वक्त्रेण प्रविमलहासभासुरेण ॥**
**प्रत्यक्षा मम मनसः पुरः पुरन्ध्री**
**कामारेः परिणतमस्मदीयभाग्यम् ॥२२॥**

नेत्राभ्यामिति— कामारेः पुरन्ध्री शिवप्रेयसी देवी, सरसिरुहच्छदायताभ्यां पद्मदलदीर्घाभ्यां नेत्राभ्यां, प्रविमलहासभासुरेण प्रविमलेन प्रकृष्ट-

शुभ्रेण हासेन भासुरेण उज्ज्वलेन वक्त्रेण वदनेन मम मनसः पुरः अग्रे प्रत्यक्षा जाता प्रसन्ना देवी उपलब्धा। अस्मदीयभाग्यम् अस्मदीयं भागधेयं परिणतं फलितम्। प्रसन्नदेवीदर्शनादन्यत् किमस्ति महत्तरं फलं सुकृतस्य? ॥२२॥

**पुण्यानां परिणतिरेव भूतभर्तुः**
**सिद्धानां बलनिधिरेव कोऽपि गूढः ॥**
**भक्तानां दृढतरिरेव शोकसिन्धौ**
**मग्नानां मम जननी महीध्रपुत्री ॥२३॥**

पुण्यानामिति— मम जननी महीध्रपुत्री पर्वतपुत्री देवी भूतभर्तुः भूतेशस्य शिवस्य पुण्यानां सुकृतानां परिणतिः परिपाकः परमेश्वरस्य तपस्सम्पत्फलमेवेत्यर्थः। सिद्धानां देवयोनिविशेषाणाम् अणिमाद्यष्टैश्वर्यसिद्धिमतां वा कोऽपि गूढः गुप्तः बलनिधिः बलस्य निक्षेप एव भवति। शोकसिन्धौ दुःखजलधौ मग्नानां भक्तानां दृढतरिः दृढा अस्खलितगतिका तरिर्नौकैव भवति। बहुधोल्लेखादुल्लेखः। पुण्यपरिणतिरूपादीनां ताद्रूप्येण रूपणात् रूपकं चेति रूपकोत्थापितोल्लेखात् रूपकोल्लेखयोरङ्गाङ्गिभावेन सङ्करः ॥२३॥

**उद्धर्तुं विनतजनं विषादगर्तात्**
**संस्कर्तुं भुवनहिताय योगयुक्तम् ॥**
**संहर्तुं खलकुलमुद्धतं च दर्पाद्**
**भर्गस्य प्रियतरुणी सदा सदीक्षा ॥२४॥**

उद्धर्तुमिति— भर्गस्य रुद्रस्य प्रियतरुणी प्रेयसी देवी विनतजनं प्रणतं भक्तंजनं विषादगर्तात् विषादः शोकः एव गर्तो निम्नतलं तस्मादुद्धर्तुम् उदञ्चयितुं, योगयुक्तं योगनिष्ठास्थितं जनं भुवनहिताय लोकश्रेयसे संस्कत विशुद्धं कर्तुं, दर्पात् गर्वात् उद्धतं दृप्तं खलकुलं दुर्जनकुलं संहर्तुं ध्वंसयितुं च सदा अविरतं दीक्षया सह वर्तते इति सदीक्षा धृतव्रता भवतीति शेषः ॥२४॥

**मृद्वीकां मधुरतया सुधां महिम्ना**
**गाम्भीर्यात्सुरतटिनीं च निर्जयन्ती ॥**

**शर्वाणीचरितपरा प्रहर्षिणीनां**
**श्रेणीयं जयतु गणेश्वरेण बद्धा ॥२५॥**

मृद्वीकामिति— मधुरतया माधुर्येण मृद्वीका द्राक्षां, महिम्ना माहात्म्येन सुधाम् अमृतं, गाम्भीर्यात् गम्भीरतया सुरतटिनी देवनदीं गङ्गां च निर्जयन्ती शर्वाणीचरितपरा शर्वाण्याः दुर्गायाः चरितं कथा परं प्रधानं यस्याः सा गणेश्वरेण गणपतिना बद्धा निबद्धा इयं प्रहर्षिणीनां प्रहर्षिणीवृत्तानां श्रेणी माला जयतु उत्कर्षेण वर्तताम्। नेह प्रहर्षिणीश्रेण्याः बहुधोल्लेखनादुल्लेखो भवति। मृद्वीकादीर्माधुर्यादिभिर्जयन्तीति उपमासूचकजयन्तीपदप्रयोगात् एकस्या बहूपमानकथनादार्थी मालोपमाऽलङ्कारः ॥२५॥

अष्टादशः स्तबकः सव्याख्यः समाप्तः ॥

# एकोनविंशः स्तबकः

अथाङ्गशोभावैभववर्णनपरोऽयं स्तबकः। अत्र ध्येयं ललितारूपं प्रतिपाद्यते ॥

**प्रफुल्लकल्पपादप- प्रसूनसद्यशोहरम् ॥**
**महारुजं धुनोतु ते महेशसुन्दरीस्मितम् ॥१॥**

प्रफुल्लेति— प्रफुल्लकल्पपादपप्रसूनसद्यशोहरं प्रफुल्लस्य कल्पपादपस्य कल्पतरोः प्रसूनस्य पुष्पस्य सद्यशसः हरं हरतीति हरं तत् महेशसुन्दरीस्मितं परमेश्वरीचारुहसितं ते तव महारुजं महतीं रुजं रुजां रोगमित्यर्थः, धुनोतु अपहरतु। विकसितसुरलोककल्पकुसुमस्य, स्पृहणीयदर्शनस्य, सर्वाभीप्सितसिद्धिप्रदस्य, अमरलोकजन्यत्वात् सर्वरोगनिवारणस्य या ख्यातिः तामप्यतिशेते महेशीमन्दस्मितम्। सर्वेषु रोगेषु महान् भवरोगः तदपहरणफलामाशिषं प्रयुङ्क्ते ॥१॥

**मुनीन्द्रमूलवेदिभू- धनञ्जयप्रबोधनम् ॥**
**यतीन्द्रहार्दपेटिका- कवाटबन्धभेदनम् ॥२॥**

मुनीन्द्रेति— मुनीन्द्रमूलवेदिभूधनञ्जयप्रबोधनं मुनीन्द्राणा मूलं मूलाधार एव वेदिभूः परिष्कृता भूमिः तत्र यो धनञ्जयः अग्निः तस्य प्रबोधनं, योगिजनमूलाधाराग्निप्रबोधकृदित्यर्थः, यतीन्द्रहार्दपेटिकाकवाटबन्धभेदनं यतीन्द्राणां संयमिनां हृद इयं हार्दा पेटिका पेटी तस्याः कवाटस्य अररस्य भेदनम् उद्घाटनम्। 'कवाटमररं समे' इति अमरः। योगमार्गिणां मूलाग्निं ज्वलयत्, ज्ञानमार्गिणां हृदयमुन्मीलयत् इत्यर्थः, अम्बिकास्मितमित्युत्तरेणान्वयः ॥२॥

**यथाविधिक्रियापर- द्विजातिचित्तशोधनम् ॥**
**ममाम्बिकास्मितं भव- त्वघप्रतापरोधनम् ॥३॥**

यथाविधीति— यथाविधिक्रियापरद्विजातिचित्तशोधनं विधिमनतिक्रम्य यथाविधि क्रिया परं प्रधानं येषां ते यथाविधिक्रियापराः द्विजातयो द्विजाः तेषां

चित्तानां शोधनं शुद्धिकरम् अम्बिकास्मितं श्रीमातृमन्दहसितं मम अघप्रनापरोधनं पापपराक्रमप्रध्वंसनं भवतु। शास्त्रोक्तकर्मानुष्ठायिनां चित्तशोधकं देवीस्मितं मम पापापनोदनं भवतु इति भावः ॥३॥

**सुवर्णसालभञ्जिका चरेव शोभयाऽधिका ॥**
**अतीव मार्दवान्विता नवेव पुष्पिता लता ॥४॥**

सुवर्णेति– चरा चरतीति चरा जङ्गमा सुवर्णसालभञ्जिका कनकपाञ्चालिका इव शोभया कान्त्या अधिका, अमितप्रभेत्यर्थः। नवा अभिनवा पुष्पाण्यस्याः सञ्जातानीति पुष्पिता लता इव अतीव अत्यन्तं मार्दवान्विता मृदुलतायुक्ता, जङ्गमा स्वर्णपुत्रिकेव स्पृहणीयशोभा, प्रत्यग्रकुसुमितवल्लीव कोमला चेत्यर्थः ॥४॥

**सुपर्वमौलिरत्नभा- विराजिहेमपादुका ॥**
**मरालिकानिमन्त्रक- प्रशस्तरत्ननूपुरा ॥५॥**

सुपर्वेति– सुपर्वमौलिरत्नभाविराजिहेमपादुका सुपर्वणां देवाना मौलीना किरीटानां रत्नानां भाभिः कान्तिभिः विराजिन्यौ विभ्राजिन्यौ हेमपादुके स्वर्णोपानहौ यस्याः सा 'पादूरेव पादुका' 'अथ पादुका, पादूरुपानत् स्त्री' इत्यमरः। मरालिकानिमन्त्रकप्रशस्तरत्ननूपुरा निमन्त्रयत्याह्वयतीति निमन्त्रकः मरालिकानां हंसीनां निमन्त्रकः प्रशस्तः श्रेष्ठः रत्नखचितो नूपुरः पादकटकः रत्ननूपुरः यस्याः सा, हंसकाहूतहंसवधूः हंसगतिरित्यर्थः ॥५॥

**वलक्षदीधितिप्रभा- विशेषहृन्नखावली ॥**
**मुनीन्द्रशुद्धमानस- प्रमेयपादसौष्ठवा ॥६॥**

वलक्षेति–वलक्षदीधितिप्रभाविशेषहृन्नखावली वलक्षदीधितेः धवलांशोः चन्द्रस्य प्रभाविशेषान् कान्तिविशेषान् हरति इति प्रभाविशेषहृत् नखानाम् आवली राजिः यस्याः सा, चन्द्रप्रभातिशायी नखांशुरस्या इत्यर्थः। मुनीन्द्रशुद्धमानसप्रमेयपादसौष्ठवा मुनीन्द्राणां शुद्धेन मानसेन प्रमेयं प्रमातुं योग्यं

ज्ञेयं पादयोः सौष्ठवं प्रशंसनीयता यस्याः सा, सुष्ठुभावः सौष्ठवं, 'सुष्ठु प्रशंसने' इत्यमरः। निर्मलमुनिजनमानसावासित्वात् देवीपादयोः, मुनिमानस-प्रमेयं देवीचरणसौष्ठवमित्युक्तम् ॥६॥

**घनीभवत्तटित्प्रभा- प्रवाहकल्पजङ्घिका ॥**
**मतङ्गजेन्द्रनासिका- मनोज्ञसक्थिशोभिनी ॥७॥**

घनीभवदिति— घनीभवत्तटित्प्रभाप्रवाहकल्पजङ्घिका अघनो घनः सम्पद्य-मानो भवन् घनीभवन् पिण्डीभवन्नित्यर्थः, तटित्प्रभाप्रवाहः विद्युत्प्रभाप्रवाहः ईषदसमाप्तः सः जङ्घे एव जङ्घिके प्रसृते यस्याः सा, पिण्डीभूतविद्युत्प्रभाभे अस्याः जङ्घे इत्यर्थः। मतङ्गजेन्द्रस्य गजश्रेष्ठस्य नासिका शुण्डा इव मनोज्ञे चारुणी सक्थिनी ऊरू ताभ्यां शोभत इति मतङ्गजेन्द्रनासिकामनोज्ञसक्थि-शोभिनी करीन्द्रकराभे ऊरू अस्याः इत्यर्थः॥७॥

**प्रसूनसायकागम- प्रवादचुञ्चुकाञ्चिका ॥**
**विशालकेशचुम्बितो- ल्लसन्नितम्बमण्डला ॥८॥**

प्रसूनेति— प्रसूनसायकागमप्रवादचुञ्चुकाञ्चिका प्रसूनसायकस्य मन्मथस्य आगमस्य तन्त्रस्य प्रवादचुञ्चुः प्रवादेन वित्ता प्रतीता काञ्ची मेखला यस्याः सा, कामतन्त्रप्रवचननिपुणा मेखला अस्या इत्यर्थः। 'तेन वित्तश्चुञ्चुप्चणपौ' इति चुञ्चुप्। विशालकेशचुम्बितोल्लसन्नितम्बमण्डला विशालकेशैः विपुल-कचैः चुम्बितं स्पृष्टम् उल्लसत् नितम्बमण्डलं श्रोणिप्रदेशो यस्याः सा। असंयतः कचः आनितम्बं लम्बतेऽस्या इत्यर्थः॥८॥

**अजाण्डपिण्डसंहति- प्रपूर्णकुक्षिशालिनी ॥**
**अपारदिव्यकान्तिवा- र्निधाननाभिदीर्घिका ॥९॥**

अजाण्डेति— अजाण्डानां ब्रह्माण्डानां पिण्डानां पिण्डाण्डानां च संहत्या समूहेन प्रपूर्णः कुक्षिरुदरं तेन शालते इति अजाण्डपिण्डसंहतिप्रपूर्णकुक्षि-शालिनी दिव्याः कान्तयः वारीणीव दिव्यकान्तिवारीणि, तेषां निधानं

निधिः अपारं दिव्यकान्तिवार्निधानं यस्याः सा नाभिर्दीर्घिकेव वापीव नाभिदीर्घिका, अपारदिव्यकान्तिवार्निधाना नाभिदीर्घिका यस्याः सा अपारदिव्यकान्तिवार्निधाननाभिदीर्घिका ॥९॥

**बिसप्रसूनसायक- च्छुराभरोमराजिका ॥**
**जगत्त्रयीवसज्जनो- पजीव्यदुग्धभृत्कुचा ॥१०॥**

बिसेति— बिसप्रसूनसायकच्छुराभरोमराजिका बिसयुक्तं मृणालयुक्तं प्रसून पुष्पं सायको बाणो यस्य तस्य मन्मथस्य छुराभा छुरिकाभा रोमराजिः यस्याः सा। रोमराजिरस्याः कन्दर्पस्य निशिताग्रा शस्त्रीवेत्यर्थः, जगत्त्रय्यां त्रैलोक्यां वसद्भिः जनैः उपजीव्यं दुग्धं स्तन्यं बिभृत इति दुग्धभृतौ कुचौ यस्याः सा जगत्त्रयीवसज्जनोपजीव्यदुग्धभृत्कुचा ॥१०॥

**महेशकण्ठबन्धक- प्रशस्तबाहुवल्लरी ॥**
**समस्तविष्टपाभय- प्रदायिपाणिपङ्कजा ॥११॥**

महेशेति— महेशस्य कण्ठस्य बन्धकौ आलिङ्गकौ प्रशस्तौ बाहू वल्लर्यौ मञ्जर्यौ इव यस्याः सा महेशकण्ठबन्धकप्रशस्तबाहुवल्लरी। **समस्ताय** विष्टपाय जगते अभयं रक्षणं दातुं शीलमस्येति समस्तविष्टपाभयप्रदायि पाणिः पङ्कजमिव यस्याः सा समस्तविष्टपाभयप्रदायिपाणिपङ्कजा ॥११॥

**विलोलहारमौक्तिक- प्रतानसंवदत्स्मिता ॥**
**विशुद्धसुन्दरस्मित- प्रकाशभासिताम्बरा ॥१२॥**

विलोलेति— विलोलानां तरलानां हारमौक्तिकानां कण्ठमालामौक्तिकानां प्रतानेन विस्तरेण संवदत् संवादं कुर्वत् सामरस्यं भजत् स्मितं मन्दहसितं यस्याः सा विलोलहारमौक्तिकप्रतानसंवदत्स्मिता। विशुद्धस्य निर्मलस्य सुन्दरस्मितस्य रमणीयदरहसितस्य प्रकाशेन भासितं प्रकाशितम् अंबरम् आकाशं यस्याः सा विशुद्धसुन्दरस्मितप्रकाशभासिताम्बरा। महोज्ज्वलमस्याः स्मितं सर्वव्यापीत्यर्थः ॥१२॥

**सुकोमलोष्ठकम्पन- प्रभीतदुर्जयासुरा ।।**
**सुयुक्तकुन्दकुट्मल- प्रकाशदन्तपङ्क्तिका ।।१३।।**

सुकोमलेति– सुकोमलस्य सुतरां मृदुलस्य ओष्ठस्याधरस्य कम्पनात् स्पन्दनात् प्रभीताः, दुःखेन जेतुं शक्याः दुर्जयाः असुराः यस्याः सा सुकोमलोष्ठकम्पनप्रभीतदुर्जयासुरा, अस्याः रोषलाञ्छनाधरकम्पमात्रेणासुराणां नाशभीतिरित्यर्थः। सुयुक्ता दृढसन्दृब्धा कुन्दकुट्मलप्रकाशा माघीमुकुलाभा दन्तपङ्क्तिर्यस्याः सा, सुयुक्तकुन्दकुट्मलप्रकाशदन्तपङ्क्तिका ।।१३।।

**शरत्सुधांशुमण्डल- प्रभाविगर्हणानना ।।**
**सुधामरन्दवज्जपा- सुमोपमाधराधरा ।।१४।।**

शरदिति– शरदः ऋतोः सुधांशुमण्डलस्य चन्द्रमण्डलस्य प्रभाया विगर्हणं निन्दकम् आननं मुखं यस्याः सा शरत्सुधांशुमण्डलप्रभाविगर्हणानना। शरच्चन्द्रादतिरिच्यते मुखमस्याः शोभयेत्यर्थः। मरन्दो मकरन्दः अस्यास्तीति मरन्दवत् तेन जपासुमेन रक्तपुष्पेणोपमा सादृश्यं यस्य सः जपासुमोपमः, सुधापूर्णः जपासुमोपमः अधराधरः यस्याः सा। जपाकुसुमं रक्तं मरन्दवच्च, अधरश्च रक्तः अमृतवांश्च ।।१४।।

**तिलप्रसूनचारुता- ऽपहासिभासिनासिका ।।**
**नवीनभाभनासिका- विलम्बिदिव्यमौक्तिका ।।१५।।**

तिलेति– तिलप्रसूनचारुतापहासिभासिनासिका तिलप्रसूनस्य चारुतां मनोहरताम् अपहसितुं शीलमस्या इति तिलप्रसूनचारुतापहासिनी भासिनी नासिका यस्याः सा, नवीनं भं नक्षत्रं तस्य आभा इवाभा यस्य तत्, नासिकायां विलम्बि दिव्यं मौक्तिकं मुक्ताफलं यस्याः सा नवीनभाभनासिकाविलम्बिदिव्यमौक्तिका, नासिकायां नवोदितनक्षत्रम् इवोज्ज्वलं भूषणमौक्तिकमस्याः इत्यर्थः ।।१५।।

**विशुद्धगण्डबिम्बित- स्वरूपरत्नकुण्डला ।।**
**महामहस्तरङ्गित- प्रभावशालिलोचना ।।१६।।**

विशुद्धेति– विशुद्धयोः स्वच्छयोः गण्डयोः कपोलयोः बिम्बिते स्वरूपे ययोः ते विशुद्धगण्डबिम्बितस्वरूपे रत्नकुण्डले रत्नखचिते कुण्डले कर्णभूषणे यस्याः

सा विशुद्धगण्डबिम्बितस्वरूपरत्नकुण्डला। महता महसां तेजसां तरङ्गा अस्य सञ्जाता इति महामहस्तरङ्गितः प्रभावोऽनुभावः तेन शालेते इति महामहस्तरङ्गितप्रभावशालिनी ते लोचने यस्याः सा महामहस्तरङ्गितप्रभावशालिलोचना ॥१६॥

**दलान्तरस्थयामिनी- प्रभुप्रभालिकस्थली ॥**
**मयूरबर्हगर्हण- प्रकृष्टकेशभासिनी ॥१७॥**

दलेति— दलस्य सहस्रदलस्य सहस्रारस्येति यावत्, देवदत्तो दत्तः सत्यभामा भामेतिवत्, अन्तरे तिष्ठतीति दलान्तरस्थः यामिनीप्रभुः निशाकान्तः चन्द्रः तस्य प्रभेव प्रभा शोभा यस्याः सा अलिकस्थली ललाटस्थली यस्याः सा 'ललाटमलिकं गोधिः' इत्यमरः, दलान्तरस्थयामिनीप्रभुप्रभालिकस्थली। मयूरबर्हस्य शिखिपिञ्छस्य गर्हणः निन्दकः प्रकृष्टः केशः तेन भासत इति मयूरबर्हगर्हणप्रकृष्टकेशभासिनी ॥१७॥

**दिवाकरायुतोज्ज्वला हिमांशुलक्षशीतला ॥**
**तटित्सहस्रभासुरा निरङ्कचन्द्रशेखरा ॥१८॥**

दिवाकरेति— दिवाकराणां भास्कराणाम् अयुतम् इव दशसहस्राणि इव उज्ज्वला भास्वरा दिवाकरायुतोज्ज्वला, हिमांशुलक्षशीतला शतसहस्रचन्द्रा इव शीतला इत्यर्थः। तटित्सहस्रभासुरा तटितां विद्युतां सहस्रमिव भासुरा उज्ज्वला, निरङ्कचन्द्रशेखरा निरङ्कः निष्कलङ्कः चन्द्रः शेखरः आपीडः यस्याः सा 'शिखास्वापीडशेखरौ' इत्यमरः ॥१८॥

**नभोन्तरालचारिणी महाविचित्रकारिणी ॥**
**कुलाग्निकुण्डशायिनी जगत्कथाविधायिनी ॥१९॥**

नभ इति— नभोन्तराले आकाशाभ्यन्तरे चरितुं शीलमस्या इति नभोन्तरालचारिणी। महत् विचित्रम् अद्भुतं कर्तुं शीलमस्येति महाविचित्रकारिणी । कुलाग्निकुण्डशायिनी, कुः पृथिवीतत्त्वं अत्र लीयते इति कुलं

मूलाधारमाहुः तान्त्रिकाः। कुलाग्निकुण्डे मूलाधाराग्निकुण्डे शेते इति कुलाग्निकुण्डशायिनी। जगत्कथाविधायिनी जगतो विश्वस्य कथायाः चरित्रस्य विधायिनी विधात्री जगत्कार्यप्रचलनं जगत्कथा तां विधत्तेऽसाविति भावः ॥१९॥

**नभस्तले बलेश्वरी धरातले क्रियेश्वरी ॥**
**दिवाकरे विभेश्वरी सुधाकरे रसेश्वरी ॥२०॥**

नभस्तले इति– नभस्तले आकाशदेशे बलस्य सर्वस्यापि पराक्रमस्य ईश्वरी बलेश्वरी। धरातले भूतले क्रियेश्वरी सर्वस्या अपि क्रियायाः ईश्वरी, दिवाकरे सूर्ये विभेश्वरी विभानां त्विषाम् ईश्वरी, सुधाकरे चन्द्रमसि रसेश्वरी रसस्य ईश्वरी। अत्र बल-क्रिया-विभा-रसादिरूपेण तत्र तत्र भासमाना तन्मयी ईश्वरीति वा बोध्यम् ॥२०॥

**महेशवेश्मदीपिका जगत्त्रयप्रमापिका ॥**
**अशेषशीर्षशासिनी समस्तहृन्निवासिनी ॥२१॥**

महेशेति– महेशवेश्मदीपिका महेश्वरगृहस्य दीपिका, गृहिण्या विना गृहं शून्यम् अन्धकारमयं हि भवति। जगत्त्रयप्रमापिका जगत्त्रयस्य त्रैलोक्यस्य प्रमापिका प्रज्ञापिका प्रपूर्वकस्य माङ् मान इति धातोर्हेतुमण्यन्तात् ङीपि रूपम्। प्रोपसर्गस्य मातेः ज्ञानहेतुत्वात् त्रैलोक्यज्ञानप्रवर्तिकेत्यर्थः। मीञ् हिंसायामिति धातोर्निष्पत्तौ संहन्त्रीत्यर्थः। तच्च प्रकृते वैरस्यात नेष्टम्। अशेषशीर्षशासिनी सर्वेषां शिरस्सु सहस्रारेषु शास्तीत्यर्थः। समस्तहृन्निवासिनी सर्वेषां हृदयेषु निवसतीत्यर्थः ॥२१॥

**गुणस्तवे गुणस्तवे गुणप्रकर्षदायिनी ॥**
**विचिन्तने विचिन्तने विशिष्टशक्तिधायिनी ॥२२॥**

गुणेति– गुणस्तवे गुणस्तवे प्रतिगुणस्तवं गुणप्रकर्षदायिनी स्तोतृभ्यः गुणप्रकर्षं सद्गुणोत्कर्षं ददाति इत्यर्थः। विचिन्तने विचिन्तने ध्याने ध्याने प्रतिध्यानं विशिष्टशक्तिधायिनी अधिकां शक्तिं विधत्ते इत्यर्थः ॥२२॥

**भ्रमाकुलेन दुस्तरा भवालसेन दुर्गमा ।।**
**अमन्त्रकेण दुर्भरा जगत्त्रयेण दुर्जया ।।२३।।**

भ्रमेति– भ्रमाकुलेन भ्रमेण आकुलः विक्षिप्तचेताः जनस्तेन दुस्तरा दुःखेन तर्तुं शक्या, भ्रमशून्यस्यैव सुतरेत्यर्थः। भवालसेन भवेन जननेन अलसो मन्दः तेन जन्मनिमग्नतया संसारित्वादलसेन मन्देन जनेन दुर्गमा दुःखेन गन्तुं शक्या, अनलसस्यैव सुगमेत्यर्थः। अमन्त्रकेण न विद्यते मन्त्रो यस्य सोऽमन्त्रः स एवामन्त्रकस्तेन दुर्भरा दुःखेन भर्तुं शक्या। मन्त्रधरस्य सुभरेत्यर्थः। जगत्त्रयेण दुर्जया जेतुमशक्येति भावः ।।२३।।

**सुवर्णचेलधारिणी समस्तमोदकारिणी ।।**
**विलासिनी निरामया विचिन्त्यतां मनस्त्वया ।।२४।।**

सुवर्णेति– सुवर्णचेलधारिणी हेमवस्त्रधारिणी, समस्तमोदकारिणी सर्वेषा-मानन्दकृत्, निरामया नीरोगा अत एव न तदाश्रितानामनारोग्यं, विलासिनी विलासवती देवी, मनः रे मानस ! त्वया विचिन्त्यतां ध्यायताम् ।।२४।।

**पदाब्जवन्दिनः कवे- रियं प्रमाणिकावली ।।**
**महेशमानसेश्वरी- गृहे महाय कल्पताम् ।।२५।।**

पदाब्जेति– पदाब्जवन्दिनः पादारविन्दस्तुतिपाठकस्य कवेर्गणपतेर्मम इयं प्रमाणिकावली प्रमाणिकानाम् प्रमाणिकावृत्तनिबद्धानां कृतीनाम् आवली माला महेशमानसेश्वरीगृहे महेश्वरहृदयेश्वरीवासगृहे महाय उत्सवाय कल्पताम् प्रभवतु ।।२५।।

एकोनविंशः स्तबकः सव्याख्यः समाप्तः ।।

# विंशः स्तबकः

अथ विंशे स्तबके सर्वेश्वर्याः विश्वस्मिन् विभूतीः प्रतिपादयन् निगमागमसारभूतानि परतत्त्वसाक्षात्कारसाधनानि कवितारामणीयकविसारीणि योगनिष्ठेन कविसार्वभौमेन गीयन्ते। अतोऽत्र सर्वसारमयी देवी स्तूयते।

**प्रीतिविकासे स्वल्पतमो रोषविशेषे भूरितरः ॥**
**अद्भुतहासो विश्वसुवो रक्षतु साधुं हन्तु खलम् ॥१॥**

प्रीतीति– प्रीतिविकासे प्रीतेर्विकासे विकसिते आविष्कार इति यावत् स्वल्पतमः अतिलघुर्मन्द इत्यर्थः, रोषविशेषे रोषस्य क्रोधस्य विशेषे प्रकाशे व्यक्तौ इत्यर्थः 'विशेषोऽवयवे व्यक्तौ तिलकेत्यन्तभेदके' इति नानार्थरत्नमाला, भूरितरः भूयान् अट्टहास इति यावत्, विश्वसुवो विश्वं जगत् सूते इति विश्वसूः तस्याः अद्भुतहासः आश्चर्यकरो हासः साधुं सज्जनं रक्षतु खलं हन्तु, सज्जनरक्षां दुर्जननिग्रहं च करोत्विति भावः। हासेन मन्दतमेन प्रेमाभिव्यक्तिः अमन्देन तु रोषव्यक्तिरिति एकेनैव अल्पताऽनल्पताश्रयणेन विरुद्धम् आचर्यत इति अद्भुतो हासः। पूर्वः चारुतमो हासः साधुं रक्षतु, अपरः भूरितरः खलं हन्तु इति क्रमेणान्वयः अनेन यथासङ्ख्यमलङ्कारः ॥१॥

**सज्जनचित्तानन्दकरी संश्रितपापव्रातहरी ॥**
**लोकसवित्री नाकचरी स्तान्मम भूयो भद्रकरी ॥२॥**

सज्जनेति– सज्जनचित्तानन्दकरी सज्जनानामानन्दविधायिनी, संश्रितपापव्रातहरी आश्रितजनानां पापप्रणाशिनी, नाकचरी स्वर्लोकसञ्चारिणी लोकसवित्री जगज्जननी मम भूयः अधिकं भद्रकरी कल्याणकृत् स्तात् भवतु। स्यादिति पाठान्तरम् ॥२॥

**अर्चनकाले रूपगता संस्तुतिकाले शब्दगता ॥**
**चिन्तनकाले प्राणगता तत्त्वविचारे सर्वगता ॥३॥**

अर्चनेति– अर्चनकाले पूजनसमये रूपगता रूपं गता पूज्ये मूर्तिविशेषे प्रसन्ना भवति, संस्तुतिकाले स्तोत्रवेलायां शब्दगता शब्दं गता शब्दरूपिणी भवति, चिन्तनकाले आलोचने ध्याने क्रियमाणे सति प्राणगता प्राणस्था भवति, तत्त्वविचारे सर्वगता सर्वस्वरूपिणी भवति ॥

अर्चने देवीरूपे चक्षुषः प्रतिष्ठा, स्तोत्रकर्मणि वाचः शब्दे प्रतिष्ठा, चिन्तने मनसः प्राणे प्रतिष्ठा, तत्त्वविचारे तु प्रज्ञायाः सर्वत्र प्रतिष्ठा। एवम् अर्चन-स्तवन-ध्यान-तत्त्वविचारेषु तत्र तत्रोचितां प्रतिष्ठां गता भगवतीति तस्या ध्येयत्वे वैभवं कीर्तितम् ॥३॥

**उज्ज्वलरूपे नृत्यकरी निष्प्रभरूपे सुप्तिकरी ॥**
**गोपितरूपे सिद्धिकरी गोचररूपे बन्धकरी ॥४॥**

उज्ज्वलेति– उज्ज्वलरूपे उज्ज्वले शोभमाने रूपे आकृतिविशेषे नृत्यकरी लास्यकरी सर्वं लोके लावण्यं तस्याः उल्लसितं नृत्यं भवति। यदनुज्ज्वलं दृश्यते तत्र सा नास्ति इति न, निष्प्रभरूपे निष्प्रभे निश्शोभे रूपे सुप्तिं करोतीति सुप्तिकरी तत्र शोभा निद्रां दधातीति भावः। गोपितरूपे गोपिते गूढे रहस्ये अदृश्ये इति यावत्, रूपे सिद्धिकरी अंतर्हितरूपे दहर-सहस्रारादौ सिद्धिं दधाति। गोचररूपे गोचरे दृश्ये स्थूले रूपे बन्धकरी बन्धकृत्, बाह्ये विषये प्रज्ञायाः बन्धः स्पष्टः विषयः सर्वोऽपि ज्ञानस्यावरकः, अत एव ज्ञानबन्धको ज्ञेयः। तस्मात्तत्र बन्धविधात्री ॥४॥

**अम्बरदेशे शब्दवती पावकताते स्पर्शवती ॥**
**काञ्चनवीर्ये रूपवती सागरकाञ्च्यां गन्धवती ॥५॥**

अम्बरेति– अम्बरदेशे आकाशे शब्दवती शब्दोऽस्याः अस्तीति शब्दवती आकाशस्य शब्दो गुणः, गुणाभावे गुणिनो गुणित्वं निहन्येत, आकाशादिगत-शब्दगुणवत्त्वे देव्याः प्रतिपादिते आकाशादेः तादात्म्येन समवायेन वा येन केनापि सम्बन्धेन शब्दादिगुणाधायिनी भगवतीति विवक्षितम्। अथ च

शब्दवतीत्यादौ मतुपा शब्दादेः स्वाम्यं देव्याः उक्तम्। अनेन आकाशादिगुणिनां स्वरूपेण वर्तमाना देवीति च तस्याः सर्वस्वरूपत्वं च गम्यम्। एवमम्बरदेशे गुणवती यः शब्दो गुणः सोऽस्याः इति शब्दवती। पावकताते पावकस्य अग्नेः ताते जनके 'वायोरग्निः' इति श्रुतेः, वायौ गुणवति स्पर्शो गुणोऽस्याः इति स्पर्शवती। काञ्चनवीर्ये काञ्चनस्य सुवर्णस्य वीर्ये तेजसि, आकरजं विकृतिमत्तेजः सुवर्णं प्राहुः, रूपं तेजसो हि गुणः, तदस्याः इति रूपवती। सागरकाञ्च्यां पृथिव्यां गुणवत्यां गुणो गन्धोऽस्याः इति गन्धवती ॥५॥

**अप्स्वमलासु स्पष्टरसा चन्द्रविभायां गुप्तरसा ॥**
**संसृतिभोगे सर्वरसा पूर्णसमाधावेकरसा ॥६॥**

अप्स्वति– अमलासु शुद्धासु अप्सु स्पष्टो व्यक्तो रसः अब्गुणो यस्याः सा, चन्द्रविभायां चन्द्रकान्तौ गुप्तरसा गूढो रसो यस्याः सा, चन्द्ररश्मिषु रसः सूक्ष्मः न स्पष्टः। संसृतिभोगे संसृतेः भोगे लोकविषयानुभवे इत्यर्थः, सर्वरसा सर्वे रसाः श्रृङ्गारादयः अनुभवैकवेद्याः यस्याः सा, पूर्णसमाधौ सम्पूर्णनिस्तरङ्गमनस्समाधाने एकरसा एकोऽन्यो रसः आनन्दो यस्याः सा ॥६॥

**चक्षुषि दृष्टिश्शाततमा चेतसि दृष्टिश्चित्रतमा ॥**
**आत्मनि दृष्टिश्शुद्धतमा ब्रह्मणि दृष्टिः पूर्णतमा ॥७॥**

चक्षुषीति– चक्षुषि दर्शनेन्द्रिये शाततमा तीव्रतमा दृष्टिः सा दृग्वीर्यं भवति इत्यर्थः। चेतसि मनसि चित्रतमा दृष्टिः अत्यन्तमद्भुता सा, वैचित्री मानस्यां दृष्टौ वैचित्री भवति। आत्मनि शुद्धतमा दृष्टिः नैसर्गिकत्वात् सहजेति यावत्। ब्रह्मणि पूर्णतमा परिपूर्णा दृष्टिः तस्य सर्वद्रष्टृत्वात् ॥७॥

**शीर्षसरोजे सोमकला भालसरोजे शक्रकला ॥**
**हार्दसरोजे सूर्यकला मूलसरोजे वह्निकला ॥८॥**

शीर्षेति– शीर्षसरोजे सहस्रारकमले सोमकला चन्द्रकला चान्द्री शोभा तत्र चन्द्रमण्डलप्रसिद्धेः। भालसरोजे आज्ञाचक्रकमले भ्रूमध्ये शक्रकला इन्द्र-

प्रभा विद्युत् भ्रूमध्ये तटित्प्रभा देवीति तन्त्रविदो विदुः। हार्दसरोजे हृदयकमले सूर्यकला सूर्यप्रभा हृदयस्य सूर्यमण्डलात्मकत्वं मूलाधारस्य अग्निमण्डलात्मकत्वं च योगिषु प्रसिद्धम्। मूलसरोजे वह्निकला, मूलाधारकमले अग्निज्वाला ॥८॥

**स्थूलशरीरे कान्तिमती　प्राणशरीरे शक्तिमती ॥**
**स्वान्तशरीरे भोगवती　बुद्धिशरीरे योगवती ॥९॥**

स्थूलेति– स्थूलशरीरे पाञ्चभौतिके देहे कान्तिरस्या इति कान्तिमती, प्राणशरीरे भौतिकजीवनधारणे प्राणमये देहे शक्तिरस्या इति शक्तिमती, स्वान्तशरीरे मानसदेहे भोगोऽस्या इति भोगवती, मनसः सुखदुःखाद्युपलब्धिसाधनत्वात्। बुद्धिशरीरे मनसोऽपि सूक्ष्मे बौद्धे देहे योगः आत्मस्वरूपनिष्ठा अस्या इति योगवती ॥९॥

**सारसबन्धोरुज्ज्वलभा　कैरवबन्धोस्सुन्दरभा ॥**
**वैद्युतवह्नेरद्भुतभा　भौमकृशानोर्दीपकभा ॥१०॥**

सारसेति– सारसबन्धोः कमलसुहृदो भास्करस्य उज्ज्वलभा भ्राजमाना दीप्तिः, कैरवबन्धोः चन्द्रमसः सुन्दरभा रमणीयशोभा, वैद्युतवह्नेः विद्युतोऽयं वैद्युतो वह्निः तस्य वैद्युताग्नेः अद्भुतभा अद्भुता विचित्रा भा प्रभा, भौमकृशानोः भौमाग्नेः भौतिकाग्नेः दीपकभा ज्वलनदीप्तिः ॥१०॥

**योधवराणामायुधभा　योगिवराणामीक्षणभा ॥**
**भूमिपतीनामासनभा　प्रेमवतीनामाननभा ॥११॥**

योधेति– योधवराणां योद्धृश्रेष्ठानाम् आयुधभा आयुधस्य भा प्रभा, योगिवराणां योगीन्द्राणाम् ईक्षणभा दृष्टिप्रभा, भूमिपतीनां राज्ञाम् आसनभा सिंहासनप्रभा, प्रेमवतीनां स्त्रीणाम् आननभा मुखशोभा ॥११॥

**शस्त्रधराणां भीकरता शास्त्रधराणां बोधकता ॥**
**यन्त्रधराणां चालकता मन्त्रधराणां साधकता ॥१२॥**

शस्त्रेति– शस्त्रधराणां खड्गधराणां भीकरता घोरता, शास्त्रधराणां विदुषां बोधकता बोधजनकत्वम्, यन्त्रधराणां यन्त्रिणां चालकता चालननिपुणतेत्यर्थः, मन्त्रधराणां रहस्यालोचनभृतां साधकता सिद्धिनिष्पादकत्वम् ॥१२॥

**गानपटूनां रञ्जकता ध्यानपटूनां मापकता ॥**
**नीतिपटूनां भेदकता धूतिपटूनां क्षेपकता ॥१३॥**

गानेति– गानपटूनां गीतनिपुणानां रञ्जकता श्रोतृषु प्रीत्याधायकत्वम्, ध्यानपटूनां ध्याने चिन्तने समाहितेन मनसा आलोचने पटूनां मापकता मानकारकत्वं, ध्यानबलेन यं कमपि विषयम् अभिसन्धाय इयानयम् इति निर्णयज्ञानं मानं भवति, तत्कारकाः ध्यातारो मापकाः, तेषु तद्धर्मरूपेण वर्तते देवीत्यर्थः, नीतिपटूनां राज्यतन्त्रे लोके च सामाद्युपायो नीतिः तत्र कुशलाः भेदोत्पादने समर्थाः तद्भावः भेदकताधर्मेण तेष्ववस्थितेत्यर्थः, धूतिपटूनां धूतौ कम्पने अन्येषां चालने इत्यर्थः, तत्र पटूनां क्षेपकता क्षेपणसामर्थ्यरूपेण वर्तमानेत्यर्थः ॥१३॥

**दीधितिधारा लोकयतां जीवितधारा वर्तयताम् ॥**
**ज्ञापकधारा चिन्तयतां मादकधारा द्रावयताम् ॥१४॥**

दीधितीति– लोकयतां पश्यतां दीधितिधारा तेजोधारा चाक्षुषेण तेजसा हि पश्यन्ति। तत्र दृष्टौ यत्तेजस्तस्याविच्छिन्नसन्ततिरित्यर्थः, वर्तयतां "वृतु भाषायां दीप्तौ च इति णिज्विकरणस्थाद्धातोः शतरि षष्ठीबहुवचनं दीप्यतां ज्वलज्जीवनानां जीवितधारा भवति। चिन्तयतां ध्यायतां ज्ञापकधारा ज्ञप्तिधारा, द्रावयतां द्रवकारकाणां मादकता मदजनकसामर्थ्यम्, अन्तः सोमं सुन्वतां योगिनां बहिर्वा यजमानानां सोमपायिनां यो मदः हर्षः तस्य जनयित्री धारा देवीति भावः ॥१४॥

**मन्त्रपराणां वाक्यबलं योगपराणां प्राणबलम् ।**
**आत्मपराणां शान्तिबलं धर्मपराणां त्यागबलम् ॥१५॥**

मन्त्रपराणामिति— मन्त्रपराणां मन्त्रजपप्रधानानां वाक्यबलं वाग्रूपं वलं वाग्वीर्यं, योगपराणां योगनिष्ठानां प्राणबलं प्राणरूपं बलम् आत्मपराणां ज्ञाननिष्ठानां शान्तिबलम्, शान्तिरूपं बलं, धर्मपराणां धर्मप्रधानानां त्यागबलं दानहेतुभूतस्वीयत्वत्यजनसामर्थ्यमेव बलम् ॥१५॥

**सूरिवराणां वादबलं वीरवराणां बाहुबलम् ॥**
**मर्त्यपतीनां सैन्यबलं रागवतीनां हासबलम् ॥१६॥**

सूरिवराणामिति— सूरिवराणां बुधश्रेष्ठानां वादबलं प्रवचनसामर्थ्यम्, वीरवराणां बाहुबलं भुजपराक्रमः, मर्त्यपतीनां राज्ञां सैन्यबलं सेनैव बलं, रागवतीनाम् अनुरागिणीनां हसिते विक्रमः ॥१६॥

**वैदिकमन्त्रे भाववती तान्त्रिकमन्त्रे नादवती ॥**
**शाबरमन्त्रे कल्पवती सन्ततमन्त्रे सारवती ॥१७॥**

वैदिकेति— वैदिकमन्त्रे गायत्र्यादौ भाववती, वेदमन्त्रार्थप्रतिपाद्यत्वात्तस्याः स्वाध्यायस्य फलवत्त्वेऽपि अर्थावगतिः मुख्येत्यर्थः। तान्त्रिकमन्त्रे श्रीविद्यादौ नादवती, तत्र नादस्वरूपेणावस्थानात्तस्याः। मन्त्रजपपुरश्चर्यया तस्याः प्रसादो लभ्यते इति आगमिकः समयः। शाबरमन्त्रे प्राकृतानां भाषया व्यवहारसिद्धे मन्त्रे कल्पवती, तत्र कल्पः क्रियाकलापस्य द्रव्योपकरणादेः प्राधान्यात्। सन्ततमन्त्रे हंसमन्त्रे अजपाख्ये उच्छ्वसितनिश्वसितान्ववेक्षणरूपे सारवती सारः स्थिरांशः तद्वती स्थैर्यं स्वरूपम् अस्याः इत्यर्थः ॥१७॥

**ब्रह्ममुखाब्जे वाग्वनिता वक्षसि विष्णोः श्रीर्ललिता ॥**
**शम्भुशरीरे भागमिता विश्वशरीरे व्योम्नि तता ॥१८॥**

ब्रह्मेति— ब्रह्ममुखाब्जे ब्रह्मदेवस्य मुखारविन्दे वाग्वनिता सरस्वती । विष्णोः वक्षसि ललिता लावण्यमयी श्रीः लक्ष्मीः। शम्भु-

शरीरे शिवस्य देहे भागम् अर्धम् इता गता देहार्धं हरस्येयम् उमा। विश्वशरीरे विश्वं शरीरं यस्य तस्मिन् सर्वेश्वरे व्योम्नि आकाशे तता व्याप्ता ॥१८॥

**भूग्रहगोलैः कन्दुकिनी विष्टपधाने कौतुकिनी ॥**
**यावदनन्तं वैभविनी प्राणिषु भूयस्सम्भविनी ॥१९॥**

भूग्रहेति– भूः, ग्रहाः मङ्गलादयः, गोलाः खगोलाः ज्योतीषि च तैः भूग्रहगोलैः कन्दुकिनी भूरादयो ग्रहाः नक्षत्राणि क्रीडाकन्दुकानि भवन्त्यस्याः। विष्टपधाने लोकधारणे कौतुकिनी कुतूहलमस्याः। यावदनन्तम् आकाशं यावत् वैभविनी वैभवम् अस्याः। आकाशं यावत् अस्ति तावत् विभुत्वमस्याः, प्राभवं व्यापकत्वं च। प्राणिषु जन्मिषु भूयः पुनः सम्भविनी पुनर्जन्म अस्याः ॥१९॥

**कञ्जभवाण्डे मण्डलिनी प्राणिशरीरे कुण्डलिनी ॥**
**पामरभावे सल्ललना पण्डितभावे मोदघना ॥२०॥**

कञ्जेति– कञ्जभवाण्डे ब्रह्माण्डे मण्डलिनी सूर्यादिमण्डलरूपिणी मण्डलिनी, प्राणिशरीरे देहिनां देहे कुण्डलिनी आधारशक्तिः, पामरभावे अज्ञानिनोऽभिप्राये सल्ललना सती स्त्री। पण्डितभावे पण्डितानाम् अभिप्राये मोदघना आनन्दघना सान्द्रानन्दरूपिणी इत्यर्थः ॥२०॥

**नार्यपि पुंसा मूलवती तन्व्यपि शक्त्या व्याप्तिमती ॥**
**व्याप्तिमतीत्वे गुप्तिमती चित्रविचित्रा काऽपि सती ॥२१॥**

नारीति– नारी स्त्री अपि पुंसा पुरुषेण मूलवती पुरुषो मूलमस्याः इति भावः। पुरुषस्य शक्तस्य हि सा शक्तिः। तन्वी सुन्दरी, सूक्ष्मा अपि व्याप्तिमती विभ्वी। व्याप्तिमतीत्वे गुप्तिमती, सर्वत्र व्याप्ताऽपि गूढा। चित्रविचित्रा अद्भुतात्यद्भुता काऽपि सती देवी। सर्वत्र विरोधात् अद्भुतत्वम्। अपारवैभवस्वभावाद् विरोधाभासः ॥२१॥

**दीधितिरूपा चित्तमयी　　प्राणशरीराऽप्यद्वितयी ॥**
**ब्रह्मशरीरं ब्रह्मविभा　　ब्रह्मविभूतिर्ब्रह्म परम् ॥२२॥**

दीधितीति – दीधितिरूपा दीधितिः दीप्तिः रूपं यस्याः सा ज्योतिस्स्वरूपा चित्तमयी चित्तरूपिणीत्यर्थः, ज्ञानतेजसोरभेदात् ज्ञानस्यैव चित्तरूपेणावस्थानाच्च। प्राणशरीरा प्राणः शरीरं यस्याः सा प्राणदेहाऽपि द्वौ अवयवौ अस्याः इति द्वितयी न द्वितयी अद्वितयी न द्विप्रकारा इत्यर्थः। अस्याः प्राणशरीरे सत्यपि एकशरीरैवेति विवक्षितम्। ब्रह्मण. शरीरं देहः ब्रह्मशरीरं, ब्रह्मविभा ब्रह्मणः प्रभा, ब्रह्मविभूतिः ब्रह्मणो विभूतिरैश्वर्यम्। परं ब्रह्म च सा भवति ॥२२॥

**विष्टपमाता भूरिकृपा　　विष्टपराज्ञी भूरिबला ॥**
**विष्टपरूपा शिष्टनुता　　विष्टपपारे शिष्टमिता ॥२३॥**

विष्टपेति– विष्टपमाता लोकजननी सती भूरिकृपा बहुकारुण्या विष्टपराज्ञी लोकाधिराज्ञी सती भूरिबला बहुशक्तिका आधिराज्याय अपेक्षितं हि बहुलं बलम्। शिष्टनुता शिष्टजनैः नुता स्तुता विष्टपरूपा विष्टपं जगत् रूपं यस्याः सा, विष्टपपारे विष्टपानां लोकाना पारे शिष्टम् अवशेषम् इता गता लोकानतीत्य अवशिष्टा, कालत्रयेऽपि सत्याः लोकानामन्ते अवशिष्टिरुपपद्यते। शिष्टिमिता इति च पाठः ॥२३॥

**दुर्जनमूलोच्छेदकरी　　दीनजनार्तिध्वंसकरी ॥**
**धीबललक्ष्मीनाशकृशं　　पुण्यकुलं नः पातु शिवा ॥२४॥**

दुर्जनेति– दुर्जनाना मूलस्य उच्छेदं करोतीति दुर्जनमूलोच्छेदकरी, दीनजनानाम् आर्तेः ध्वंसं करोतीति दीनजनार्तिध्वंसकरी, शिवा मङ्गलरूपिणी, धीबललक्ष्मीनाशकृशं धीर्बुद्धिः बलं वीर्यं लक्ष्मीः सम्पत् च आसां नाशेन अपगमेन कृशम् अपुष्ट नः अस्माकं पुण्यकुलं पुण्यं पवित्रं कुलं मानवकुलं विशेषतः भारतीयकुलं वा पातु रक्षतु ॥२४॥

**चन्द्रकिरीटाम्भोजदृशः शान्तिसमृद्धं स्वान्तमिमे ।।**
**सम्मदयन्तु श्रोत्रसुखाः सन्मणिबन्धाः सूरिपतेः ।।२५।।**

चन्द्रेति– श्रोत्रसुखाः श्रवणसुभगाः सूरिपतेः पण्डितसार्वभौमस्य इमे सन्मणिबन्धाः सन्तः निर्दोषाः गुणवन्तश्च मणिबन्धवृत्तनिबद्धाः स्तवाः चन्द्रकिरीटाम्भोजदृशः चन्द्रमौलिसुन्दर्याः पार्वत्याः शान्तिसमृद्धं शान्त्या समृद्धं पूर्णं स्वान्तं मानसं सम्मदयन्तु आनन्दयन्तु ।।२५।।

इति श्रीमहर्षिरमणभगवत्पादान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपति-
मुनेः कृतावुमासहस्रे
विंशः स्तबकः समाप्तः ।
समाप्तं च पञ्चमं शतकम् ।
प्रभाख्या व्याख्या च समाप्ता ।।

# एकविंशः स्तबकः

परमेश्वरार्धाङ्गभूतायाः पार्वत्याः स्तवो भवत्येकविंशे स्तवके ॥

**इतः पीत्वा कुचं स्कन्दे प्रसारितकरे ततः ॥**
**जयति स्मितमुद्भूतं शिवयोरेकदेहयोः ॥१॥**

इत इति– स्कन्दे शिशौ सुब्रह्मण्ये इतः एकतः कुचं पीत्वा, ततः अन्यतः प्रसारितकरे प्रसारितौ करौ येन तस्मिन् सति, एकदेहयोः एको देहो ययोः तयोः शिवयोः शिवा पार्वती शिवः परमेश्वरश्च तयोः, पुमान् स्त्रियेत्येकशेषः। उद्भूतं जातं स्मितं मन्दहसितं जयति उत्कर्षेण वर्तते। स्तनन्धयः कुमारो वामभागे स्तन्यं पीत्वा मातुः दक्षिणकुचं स्तन्यपानाय ग्रहीतुं हस्तौ प्रसारयति। शिवः पिता हि मातुः दक्षिणो भागः। तत्र क्व कुचः? कथं तज्जानाति शिशुः? एकदेहौ पितराविति कथं वेद स्तनन्धयः? एकं कुचं पीत्वा अन्यस्मै कुचाय करप्रसारस्तु शिशूनां स्वभावतः प्रवर्तते। जातस्येदृशी दशां दृष्ट्वा जनकयोरतितरां पुत्रविषया रतिः स्मितेन प्रकाशा भवति। स्कन्दालम्बनस्तन्यपानोद्दीपनविभावायाः दक्षिणस्तनार्थकरप्रसारणानुभावायाः जनकोभयार्धाङ्गस्थितसञ्चारिभावायाः पुत्रविषयरतेरभिव्यक्तिः ॥

यद्यप्यत्र जनकयोः एकदेहत्वहेतुकस्य कुमारकरप्रसारणस्य वैफल्यात् हासः स्थायी भावो ध्वन्यते, तथाऽपि स व्यभिचारितां भजमानः पुत्रविषयरतिपरिपोषको भवति। 'रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः' इति स्थिते, शृङ्गारस्येव पुत्रविषयरतेरनुच्छिद्यमानत्वात् रतिरेव स्थायिशब्दवाच्या ॥

स च हासः पुनरुत्पद्यमानो व्यभिचार्येवेत्यालङ्कारिकः समयः। हासश्च उत्तमानामल्प एव भवति। तदुक्तं दर्पणकृता 'ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च । नीचानामपहसितम्' इति। अत्र जगत्पित्रोः शिवयोः उचितम् उत्तमं हसितं स्मितपदेनोक्तम् ॥

अत्र अपत्यफलिताभूतदाम्पत्यसम्पन्नपरदेवताविषयकः कविगतो रतिभावध्वनिश्च अयम्। तत्र एतत्प्रतिपाद्योऽर्थ आलम्बनम्। पद्यप्रयोगश्चानुभाव

इति बोध्यम्। जयत्यर्थेन नमस्कारस्याक्षेपः। स्वक्रियावर्णनात् स्वभावोक्तिः स्फुटोऽलङ्कारः। 'स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्' इति प्रकाशलक्षणात् ॥१॥

**एकतो मणिमञ्जीर- क्वाणाहूतसितच्छदम् ॥**
**अन्यतो नूपुराहीन्द्र- फूत्कारकृततद्भयम् ॥२॥**

एकत इति– एकतः वामार्धे मणिमञ्जीरक्वाणाहूतसितच्छदं मणिमञ्जीराणां रत्नखचितपादकटकानां क्वाणेन नादेन आहूताः आकृष्टाः सितच्छदाः हंसाः यस्य तत्। नूपुरध्वानमाकर्ण्य हंसाः अस्मज्जातीया हंसी काचनेहेति आगच्छन्तीत्यर्थः, हंसगतिकं वामार्धमिति यावत्। अन्यतः दक्षिणतः नूपुराहीन्द्रफूत्कारकृततद्भयं नूपुराहीन्द्रस्य भूषणसर्पराजस्य फूत्कारेण श्वसितध्वनिना कृतं जनितं तद्भयं सितच्छदभयं यस्य तत्। दक्षिणार्धरुद्रपादसर्पफूत्कारात् वामार्धदेवीपादाहूतहंसानां भीतिः जायते। अतिसौम्यदर्शनरौद्रदर्शनयोः वामवामेतरार्धयोः शिवयोः भङ्ग्यन्तराश्रयेण गम्यमानत्वात् पर्यायोक्तम् अलङ्कारः। अस्मिश्चालङ्कारे व्यङ्ग्यं वाच्यपरम्। तेन अयं वाच्यसिद्ध्यङ्गगुणीभूतव्यङ्ग्यभेद इति ध्वनिकारानुयायिनः। रसगङ्गाधरकृद्भिरुक्तं लक्षणं सूपपन्नम् 'विवक्षितार्थस्य भङ्ग्यन्तरेण प्रतिपादनं पर्यायोक्तम्' इति। इतः परं प्रायेणाषोडशपद्यमयमेवालङ्कारः। सप्तदशश्लोके 'वस्तु मे हृदि सन्निदधातु' इति वाक्यसमाप्तिः ॥२॥

**गीर्वाणपृतनापालं बालं लालयदेकतः ॥**
**उत्सङ्गे गणसम्राज- मर्भकं बिभ्रदन्यतः ॥३॥**

गीर्वाणेति– एकतः सव्यतः गीर्वाणपृतनापालं देवसेनापतिं बालं कुमारं स्कन्दं लालयत् क्रीडयत् स्थितमित्यर्थः। लालयत् लल विलास इति शब्विकरणधातोर्हेतुमण्णिचि शत्रन्तं नपुंसकप्रथमैकवचनान्तम्। अन्यतः अपसव्यतः गणसम्राजं गणपतिम् अर्भकं शिशुम् उत्सङ्गे अङ्के बिभ्रत् धरत्, वस्त्वित्युत्तरेणान्वयः। वामभागे स्कन्दो दक्षिणभागे गणपतिरित्युक्तेः, शक्त्या लालितः शक्तिधरः कुमारः, गणपतिर्ज्येष्ठः शिवाङ्कनिलयः

ओंकारवदनश्चेति शिवांशभूयस्त्वं ज्येष्ठस्य, कनीयसस्तु शक्त्यंशभूयस्त्वं चेति तत्त्वमवधेयम् ॥३॥

**विडम्बितब्रह्मचारि- कोकैकस्तनमेकतः ॥**
**कवाटार्धनिभं बिभ्र- द्वक्षः केवलमन्यतः ॥४॥**

विडम्बितेति— एकतः वामे भागे विडम्बितब्रह्मचारिकोकस्तनं ब्रह्मचारी अगृहस्थोऽभार्यः कोकश्चक्रवाकः ब्रह्मचारिकोकः विडम्बितोऽनुकृतो ब्रह्मचारिकोको येन सः विडम्बितब्रह्मचारिकोकः, स एकस्तनो यस्य तत्, चक्रवाकमिथुनस्य स्तनयुग्मोपमानता प्रसिद्धा, वामभाग एव कुचः कुचान्तरासत्त्वात् वियुक्तकोकोपमत्वं देवीभागस्थस्योक्तम्। अन्यतः दक्षिणार्धे कवाटार्धनिभं वैशाल्यादिद्योतनाय पुंवक्षसः कवाटेनौपम्यमाहुः, कवाटार्धसदृशं केवलं वक्षोजरहितं पुस्त्वलक्षणं वक्षः उरःस्थलं बिभ्रत् धारयमाणं वस्त्विति उत्तरेणान्वयः ॥४॥

**सेनान्याऽऽस्वादितस्तन्य- मनुफूत्कुर्वतैकतः ॥**
**फूत्कारमुखरं नाग- मुग्रं जाग्रतमन्यतः ॥५॥**

सेनान्येति— एकतः पार्वतीभागे अनुफूत्कुर्वता अनुसृत्य फूत्कारं कुर्वता उत्तरोत्तरस्तन्यास्वादनवेगोत्थमुखस्तन्यश्वाससंघर्षजं सीत्कारं कुर्वतेत्यर्थः। सेनान्या सेनां नयतीति सेनानीः स्कन्दस्तेन आस्वादितं स्तन्यं यस्य तत्, अन्यतः रुद्रभागे फूत्कारमुखरं फूत्कारेण श्वसितसीत्कारेण मुखरं शब्दायमानम् उग्रं क्रुद्धं जाग्रतम् अनिद्रितं नागं सर्पं बिभ्रत् इति उत्तरश्लोकेन अन्वयः ॥५॥

**एकतो दोर्लतां बिभ्रन्- मृणालश्रीविडम्बिनीम् ॥**
**शक्रशुण्डालशुण्डाभं चण्डं दोर्दण्डमन्यतः ॥६॥**

एकत इति— एकतः वामतः मृणालश्रीविडम्बिनीं मृणालस्य पद्मनालस्य श्रियं शोभां विडम्बयति अपहसतीति मृणालश्रीविडम्बिनी तां, दोर्लतेव तां दोर्लतां भुजलतां सौकुमार्यसम्पन्नां बिभ्रत्, अन्यतः दक्षिणतः शक्रशुण्डालशुण्डाभं शक्रस्येन्द्रस्य शुण्डालः गजः ऐरावतः तस्य शुण्डायाः करस्याभेवाभा

यस्य तत् ऐरावतहस्तोपममित्यर्थः, चण्डम् उग्रं विक्रान्तम् इत्यर्थः, दोर्दण्डं दोर्बाहुर्दण्ड इव तं बिभ्रत् ॥६॥

**कुत्राप्यविद्यमानेऽपि वन्दनीये तदा तदा ॥**
**परस्परकरस्पर्श- लोभतो विहिताञ्जलि ॥७॥**

कुत्रेति– वन्दनीये वन्दितुम् अभिवादयितुं योग्ये शिवाभ्यां पूजनीये इत्यर्थः कुत्रापि अविद्यमाने असत्यपि, तदा तदा काले काले परस्परकरस्पर्शलोभतः परस्परस्य करस्य स्पर्शे लोभात्, विहिताञ्जलि विहितः बद्धः अञ्जलिः हस्तद्वयसंयोगरूपः नमस्कारसङ्क्षेपः येन तत् परशब्दस्य क्रियाविनिमयविवक्षायां द्विर्भावः, असमासवद्भावात् सुर्वक्तव्य इति परस्परशब्दव्युत्पत्तिरवधेया। वामवामेतरौ करौ अन्योन्यस्पर्शसुखगृध्यया मिलतः। तथा संयोगः अञ्जलिबन्धो भवति। सर्वलोकवन्दनीयस्य प्रकृतस्यार्धद्वयस्य अञ्जलिविधिः समर्थनसापेक्षः दुष्करविषयत्वात्तस्य। स च परस्परकरस्पर्शलोभेन पदार्थगतहेतुना समर्थित इति काव्यलिङ्गमलङ्कारः 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' ॥७॥

**शक्रनीलसवर्णत्वाद् भागयोरुभयोरपि ॥**
**ऊर्ध्वाधराङ्गसापेक्ष- सन्धिज्ञानगलस्थलम् ॥८॥**

शक्रेति– उभयोरपि वामदक्षिणयोर्भागयोः इन्द्रनीलसवर्णत्वात्, समानो वर्णः ययोस्तौ सवर्णौ इन्द्रनीलेन सवर्णौ इन्द्रनीलसवर्णौ तयोर्भावः तस्मात् हेतोः। कण्ठप्रदेशे वामभागः देव्याः कालीत्वात् नीलः, दक्षिणभागेऽपि नीलः शिवस्य शुभ्राङ्गस्य कण्ठे नीलत्वात्। एवं कण्ठे सर्वे अपि नीले, कथं ज्ञायेते पार्वत्याः कण्ठार्धं शिवस्य कण्ठार्धं चेति चेत्, उच्यते उभयोः कण्ठार्धयोः यत्र समागमः तस्य ज्ञानं कण्ठादुपरि दक्षिणार्धे यत्र शिवाङ्गश्वेतिमा निवर्तते, नीलिमा च प्रवर्तते एवं कण्ठस्याधोभागे च यत्र नीलिमा निवर्तते, श्वेतिमा च प्रवर्तते, तत्सन्ध्यवलोकनेन कण्ठस्थलस्य अर्धद्वयं स्त्रीपुंसीयं वामदक्षिणगम् ऊह्यम्। तदाहैकपदेनोत्तरार्धेन। ऊर्ध्वं च अधरं च ऊर्ध्वाधरे ते अङ्गे तयोः सापेक्षं ऊर्ध्वाधराङ्गसापेक्षं सन्ध्योर्ज्ञानं सन्धिज्ञानं यस्य तत् ऊर्ध्वाधराङ्गसापेक्षसन्धिज्ञानं तत् गलस्थलं कण्ठस्थलं यस्य तत् वस्त्वित्युत्तरेणान्वयः ॥८॥

**एकतः कैरवश्रेणी-　　निद्रामोचनलोचनम् ॥**
**अन्यतः कमलावास-　　क्षणाधायकवीक्षणम् ॥९॥**

एकत इति— एकतः वामतः कैरवश्रेणीनिद्रामोचनलोचनं कैरवश्रेण्याः कुमुदपङ्क्तेः निद्रामोचनं विकसने चन्द्रात्मकं लोचनं यस्य तत्, चन्द्रसूर्ययो-र्वामवामेतरनेत्रत्वं प्रसिद्धम्। अन्यतः दक्षिणतः कमलावासक्षणाधायकवीक्षणं कमलावासः लक्ष्मीनिलयः कमलं तस्य क्षणस्योत्सवस्य आधायकम् उत्पादकं कमलविकासनं सूर्यात्मकं लोचनं यस्य तत् ॥९॥

**एकतश्चक्षुषा चारु-　　तारेणाधीतविभ्रमम् ॥**
**अन्यतः पाणिपाथोजे　　खेलतो मृगबालतः ॥१०॥**

एकत इति— एकतः वामे चारुतारेण चारुः कमनीया तारा कनीनिका यस्य तेन चक्षुषा नयनेन, अन्यतः दक्षिणे पाणिपाथोजे करकमले खेलतः क्रीडतः मृगबालतः हरिणशिशोः अधीतविभ्रमम् अधीतः शिक्षितः विभ्रमो विला-सो यस्य तत्। दक्षिणतः शिवहस्ते क्रीडतो बालहरिणात् वामार्धभूताया देव्याश्चक्षुर्विलासं शिक्षमाणं रमणीयम् इत्यर्थः ॥१०॥

**एकतो भालफलके　　काश्मीरेण विशेषितम् ॥**
**अन्यतोऽर्धेक्षणेनैव　　रतिभ्रूविभ्रमद्रुहा ॥११॥**

एकत इति— एकतः वामपार्श्वे भालफलके भालं फलकमिव तस्मिन् ललाटफलके काश्मीरेण केसरेण काश्मीरदेशोद्भवसुगन्धद्रव्येण विशेषितम् अल-ङ्कृतम्। अन्यतः रतिभ्रूविभ्रमद्रुहा रतेः मन्मथकान्तायाः भ्रुवो विभ्रमं विलासं द्रुह्यतीति रतिभ्रूविभ्रमध्रुक् तेन मन्मथदाहित्वाद्रतिविलासापहेन अर्धेक्षणेनैव तृतीयस्य अग्निनेत्रस्य अर्धमेव दक्षिणे शिवभागे अवशिष्टं, तेन अर्धदृष्ट्ये-त्यर्थः, विशेषितमिति पूर्वेणान्वयः। एवकारेण पूर्णेक्षणं नावश्यमभूत् रति-कान्तदहने इति भावः ॥

**एकतः शीतलालोकं　　साधुलोकशिवङ्करम् ॥**
**अन्यतः प्रज्वलत्प्रेक्षं　　दुष्टगोष्ठीभयङ्करम् ॥१२॥**

एकत इति— एकतः वामार्धे, शीतलालोकं शीतल आलोक आलोकनं यस्य तत्, साधुलोकशिवङ्करं सज्जनसङ्घक्षेमावहं शिष्टानुग्रहकारकमित्यर्थः।

अन्यतः दक्षिणार्धे दुष्टगोष्ठीभयङ्करं दुर्जनसङ्घभीतिकृत् दुष्टनिग्रहकारकमित्यर्थः। प्रज्वलत्प्रेक्षं प्रज्वलन्ती प्रेक्षा दृष्टिः यस्य तत् ॥१२॥

**एकतो मणिताटङ्क- प्रभाधौतकपोलकम् ॥**
**अन्यतः कुण्डलीभूत- कुण्डलीभूतकुण्डलि ॥१३॥**

एकत इति– मणिताटङ्कप्रभाधौतकपोलकं मणिखचितः ताटङ्कः कर्णभूषा, मणिताटङ्कस्तस्य प्रभया शोभया धौतः शुद्धः कपोलः यस्य तत्, ताटङ्करत्नप्रभापरिष्कृतं गण्डस्थलं वाममित्यर्थः। अन्यतः शिवार्धे, कुण्डलीभूतकुण्डलीभूतकुण्डलि अकुण्डलं कुण्डलं मण्डलाकारं सम्पद्यमानो भूतः कुण्डलीभूतः मण्डलाकारीभूतः सः कुण्डलीभूतः कर्णवेष्टनीभूतः कुण्डली सर्पः यस्य तत्, वर्तुलाकारेण कर्णभूषणतया सर्पः अस्मिन् स्थितः इत्यर्थः ॥१३॥

**एकतः कुन्तलान्बिभ्र- दिन्द्रनीलोपमद्युतीन् ॥**
**अन्यतः पावकज्वाला- पाटलांशुच्छटा जटाः ॥१४॥**

एकत इति– एकतः वामे इन्द्रनीलोपमद्युतीन् इन्द्रनीलेनोपमा यासां ताः, इन्द्रनीलोपमाः ताः द्युतयः कान्तयः येषां तान् कुन्तलान् कचान् बिभ्रत्। अन्यतः दक्षिणे पावकज्वालापाटलांशुच्छटाः पावकज्वालानाम् अग्निज्वालानां पाटलांशूनां श्वेतरक्तभासां छटाः रेखा इव रेखा यासां ताः जटाः बिभ्रत् ॥१४॥

**एकतः केशपाशेन कीर्णेनोरसि भासुरम् ॥**
**अन्यतो लम्बमानस्य भोगिनो हरता श्रियम् ॥१५॥**

एकत इति– अन्यतः दक्षिणार्धे लम्बमानस्य भोगिनः हारभूतस्य सर्पस्य श्रियं शोभां हरता अपहरता, एकतः वामार्धे उरसि वक्षसि कीर्णेन विक्षिप्तेन केशपाशेन भासुरम् उज्ज्वलम्। शिवहारभूषाभुजङ्गशोभातिशायी वामवक्षसि कीर्णो देवीकालकेशपाशः इत्यर्थः ॥१५॥

**अवतंसितमम्लान- पारिजातस्रजैकतः ॥**
**विमलोल्लोलमालिन्या विबुधापगयाऽन्यतः ॥१६॥**

अवतंसितेति– एकतः स्त्रीभागे अम्लानपारिजातस्रजा प्रत्यग्रपारिजात-पुष्पमालया अवतंसितमलङ्कृतम्। अन्यतः पुरुषभागे विमलोल्लोलमालिन्या विमलानां प्रसन्नानाम् उल्लोलानां कल्लोलानां महातरङ्गाणामित्यर्थः, 'महत्सूल्लोलकल्लोलौ' इत्यमरः, माला अस्या इति विमलोल्लोलमालिनी तया विबुधापगया देवनद्या गङ्गया अवतंसितमिति पूर्वेणान्वयः ॥१६॥

**रौप्याचलकृतावासं प्राप्यं युक्तेन चेतसा ॥**
**वस्तु रामापुमाकारं हृदि सन्निदधातु मे ॥१७॥**

रौप्येति– रौप्याचलकृतावासं रौप्याचले रजताद्रौ कैलासे कृतः आवासः येन तत् रामापुमाकारं रामा स्त्री पुमान् पुरुषश्च रामा-पुमांसौ तयोराकाराविवाकारौ यस्य तत् स्त्री-पुरुषाकारं वस्तु मे मम हृदि हृदये सन्निदधातु सान्निध्यं करोतु ॥१७॥

**कान्तार्धविग्रहे मात- र्जटार्धाश्चिकुरास्तव ॥**
**दधत्यदभ्रसन्ध्याभ्र- युक्तकालाभ्रविभ्रमम् ॥१८॥**

कान्तेति– कान्तस्य पत्युरर्धं समो भागः कान्तार्धं विग्रहः शरीरं यस्याः तस्याः सम्बुद्धिः कान्तार्धविग्रहे मातः, जटार्धाः जटायाः हरजटायाः अर्धं समांशः येषां ते व्यधिकरणबहुव्रीहिः, 'पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः, तव चिकुराः कचाः अदभ्रसन्ध्याभ्रयुक्तकालाभ्रविभ्रमम् अदभ्राणामनल्पानां सन्ध्याभ्रेण सन्ध्याकालनभसा युक्तानां कालाभ्राणां श्यामलमेघानां विभ्रमं विलासं दधति बिभ्रति। अत्र चिकुरेषु कालाभ्रत्वारोपान्निदर्शनाऽलङ्कारः। चन्द्रालोके 'वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना' इत्युक्त्वा 'पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम्। त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः॥' इति तल्लक्षणात् ॥१८॥

**दम्पत्योर्युवयोरेष लोपो यन्नास्ति शैलजे ॥**
**वामं पार्श्वं विभोः शेतुं दातुं ते दक्षिणः करः ॥१९॥**

दम्पत्योरिति – शेतुं शयनाय विभोः शिवस्य तव दक्षिणार्धस्य वामं पार्श्वं नास्ति तस्य त्वयाऽपहृतत्वात्। दातुं दानाय ते तव दक्षिणः करः

नास्ति तस्य शिवार्धगतत्वात्। एवम् उभयं नास्तीति यत् एष दम्पत्योः जाया च पतिश्च दम्पती तयोः युवयोः लोपः भवति। अत एव देव्याः वामो हस्तो दानाय प्रसिद्धः इति गम्या हेतूत्प्रेक्षा। शिवस्यापि स्वाश्रयत्वात् शयनं पार्श्वनिरपेक्षम्। अशयानः शयानो वा स एवाश्रयो भवति हि जगज्जन्मादेः शक्तेः ॥१९॥

**लोके स्त्री स्तनयुग्मेन पुष्णात्येकं सुतं न वा ॥**
**स्तनेनैकेन शर्वाणि पुष्णासि त्वं जगत्त्रयम् ॥२०॥**

लोक इति– लोके स्त्री जातावेकवचनं, स्तनयुग्मेन एकं सुतं पुष्णाति न वा। स्तनयुगस्तन्यदानेन पुत्रमेकम् अपि भर्तुं समर्था वा न वेति संशयग्रस्तः विषयः। शर्वाणि, देवि! त्वं तु एकेन स्तनेन जगत्त्रयं पुष्णासि पोषयसि अत्र न संशयः। अद्भुतस्ते महिमा ॥२०॥

**खिद्यन्ति योषितः कुक्षौ वहन्त्योऽर्भकमेककम् ॥**
**अर्धकुक्षौ दधासि त्वं त्रिलोकीमम्ब लीलया ॥२१॥**

खिद्यन्ति इति– अम्ब! योषितः स्त्रियः कुक्षौ उदरे एककम् एकमेव अर्भकं शिशुं वहन्त्यः बिभ्रत्यः खिद्यन्ति श्रान्ता भवन्ति। त्वं तु अर्धकुक्षौ अन्यार्धस्य हरभागत्वात् उदरार्धे त्रिलोकीं त्रयाणां लोकानां समाहारः जगत्त्रयं लीलया अनायासेन दधासि धारयसे ॥२१॥

**अनुरूपा शिवस्य त्व- मनुरूपः शिवस्तव ॥**
**अलङ्कारोऽनुरूपो वा- मकलङ्कोऽर्भकः शशी ॥२२॥**

अनुरूपेति– शिवस्य त्वम् अनुरूपा सदृशी, तव शिवोऽनुरूपः सदृशः, वां युवयोरनुरूपः सदृशः अलङ्कारः अकलङ्कः अङ्करहितः अर्भकः शिशुः शशी चन्द्रः प्रसिद्धचन्द्रादतिरिक्तो बालचन्द्रः युवयोः सदृशोऽलङ्कारः॥ पूर्वार्धे अन्योन्यालङ्कारः, उत्तरार्धे समोऽलङ्कारः ॥२२॥

**तवैव तव देहांशो हरस्यैव हरस्य यः ॥**
**प्राणास्तु जगतां धात्रि हरस्य त्वं हरस्तव ॥२३॥**

तवेति— तव देहांशः तवैव, वामभागस्त्वदीय एव न तत्र हरस्य स्वाम्यं वर्तते। यः हरस्य देहांशः सः हरस्यैव, न तत्र तव स्वाम्यमस्ति। यद्यप्येवम् उभयोर्देहभागौ संविभक्तौ, तथाऽपि, भोः जगतां धात्रि लोकभर्त्रि! हरस्य त्वं प्राणाः असि, तव हरः प्राणा भवति। एवं युवयोः युवाम् अन्योन्यप्राणतां भजमानौ भवथः। अन्योन्यालङ्कारः ॥२३॥

**अविभक्तं भवानि स्वं भवस्य तव चोभयोः ॥**
**सकृत्सकरुणं चेतः सङ्कल्पयतु नश्शिवम् ॥२४॥**

अविभक्तमिति— भवानि, देवि! भवस्य शिवस्य तव च उभयोः अविभक्तं विभागेन विना एकतया स्थितं स्वं स्वीयं सकरुणं सदयं चेतः मानसं नः अस्माकं शिवं कल्याणं सकृत् एकवारं सङ्कल्पयतु युवयोः शरीरमेव विभक्तं, प्राणाश्च तस्य त्वं, तव च सः, मनस्त्वेकमेव। अमोघसद्यःफलत्वात् सङ्कल्पस्य सकृदिति उक्तम् ॥२४॥

**भवस्य भागमुत्सृज्य भवानी भागमात्मनः ॥**
**भजत्वनुष्टुभामासां सृष्टानां नारसिंहिना ॥२५॥**

भवस्येति— भवानी देवी नारसिंहिना नरसिंहसूनुना कविना गणपतिना सृष्टानां निर्मितानामासाम् अर्पितानाम् अनुष्टुभाम् अनुष्टुब्निबद्धानां कृतीनां मध्ये भवस्य शिवस्य भागम् उत्सृज्य शिववर्णनपरं पद्यभागं तस्मै विसृज्य आत्मनो भागं स्वोचितं पद्यभागं भजतु स्वीकरोतु ॥२५॥

एकविंशः स्तबकः सव्याख्यः समाप्तः ॥

# द्वाविंशः स्तबकः

अथ द्वाविंशे स्तबके कैलासनाथप्रभाववर्णनोपन्यासेन कैलासपतिकान्तासौभाग्यानुवर्णनं भवति। तथा हरकुटुम्बकं कीर्त्यते। स्तबकादौ यथापूर्वं हसितस्तुतिः॥

**अखिलस्य विकासकारणं व्यसनि ज्ञानिजनावनेषु नः॥**
**वितनोतु विशेषतः शिवं शिवराजीवदृशो दरस्मितम्॥१॥**

अखिलेति– अखिलस्य सर्वस्य विकासकारणम् उन्मीलनहेतुभूतं, ज्ञानिजनावनेषु ज्ञानिजनानां पालनेषु व्यसनि व्यसनम् अस्येति व्यसनि ससङ्गमित्यर्थः। यद्यपि व्यसनपदं कामजे दोषे वर्तते, तथाऽपि ज्ञानिषु वात्सल्यातिशयद्योतनाय प्रयुक्तम्। शिवराजीवदृशः शिवसुन्दर्याः दरस्मितं मन्दस्मितं नः अस्माकं शिवं मङ्गलं विशेषतः सुतरां वितनोतु विदधातु। मुखस्य विकसितं मन्दस्मितम्, अनेन विश्वम् उन्निद्रं जायते। उज्ज्वलत्वादस्य स्वाभाविकं प्रकाशपालनम्। अत एव अबोधस्य सर्वस्य बोधाधायकं, बुद्धस्य सर्वस्य बोधरक्षकम् इति सर्वस्यापि अप्राप्तलाभं प्राप्तरक्षणं च विदधदिदं स्मितम् अस्मद्योगक्षेमात्मकं कल्याणं करोत्विति प्रार्थना॥१॥

**विकले सकले सुरव्रजे व्रजति श्यामलिमानमच्युते॥**
**जगतस्सदयो हलाहलं चुलुकीकृत्य भयं नुनोद यः॥२॥**

विकले इति– सकले समस्ते सुरव्रजे देववृन्दे विकले निष्प्रभे विषण्णे जाते इति यावत्, अच्युते हरौ श्यामलिमानं श्यामलस्य भावः तं श्यामलिमानं कार्ष्ण्यं व्रजति गच्छति सति अमृतमथनसमये प्रथमनिर्गतवासुकिशिरोगरलप्रतापात् हरौ च निष्प्रभे जाते, सदयः परमकारुणिकः यो भगवान् हलाहलं महाविषं चुलुकीकृत्य अचुलुकं चुलुकं सम्पद्यमानं कृत्वा प्रसृतिं कृत्वेत्यर्थः, 'चुलुकः प्रसृतौ भाण्डे' इति नानार्थरत्नमाला। जगतो भयं नुनोद अपानयत्। तेनेति उत्तरेण दशमश्लोकस्थेनान्वयः॥२॥

**निगमैस्तुरगी भुवा रथी विधिना सारथिमान् बिभेद यः ॥**
**कनकाद्रिवरेण कार्मुकी कमलाक्षेण शरी पुरत्रयम् ॥३॥**

निगमैरिति– निगमैः वेदैः तुरगी अश्ववान् त्रिपुरयुद्धे शिवस्य वेदा एव वाहा अभवन्। भुवा भूम्या रथी रथवान्, विधिना सारथिमान् ब्रह्मैव सारथिरभूत्। कनकाद्रिवरेण मेरुपर्वतेन कार्मुकी धनुष्मान्, कमलाक्षेण विष्णुना शरी बाणवान्, भूत्वा यः त्रिपुरं बिभेद भञ्जयामास। तेनेत्युत्तरेणान्वयः। रूपकम् ॥३॥

**अजितस्य च गाढमत्सरैः कमलाकान्तपुरस्सरैस्सुरैः ॥**
**पदजायुधधारया रयाद् वधमाधत्त जलन्धरस्य यः ॥४॥**

अजितस्येति– गाढमत्सरैः गाढो दृढो मत्सरः द्वेषः असुरशुभे इति शेषः, येषां तैः, यद्वा 'मत्सरौ मक्षिकक्रोधौ' इति त्रिकाण्डशेषः, अत्यन्तक्रुद्धैरित्यर्थः, कमलाकान्तपुरस्सरैः विष्णुप्रमुखैः सुरैः देवैः अजितस्य जलन्धरस्य एतन्नाम्नोऽसुरस्य वधं, यः भगवान् पदजायुधधारया पदजं नखमेवायुधं तस्य धारया निशिताग्रेण रयात् सत्वरम् आधत्त चकारेत्यर्थः। जलन्धरासुरवधो लिङ्गपुराणे (९७ अ.) कीर्त्यते–'जलन्धर इति ख्यातो जलमण्डलसम्भवः। आसीदन्तकसङ्काशस्तपसा लब्धविक्रमः॥ ......... निशम्यास्य वचः शूली पादाङ्गुष्ठेन लीलया। महाम्भसि चकाराशु रथाङ्गं रौद्रमावहन्॥..... कृत्वार्णवाम्भसि सितं भगवान् रथाङ्गम्' इत्यनन्तरश्लोके अन्ते च 'कुलिशेन यथा छिन्नो द्विधा गिरिवरो द्विजाः। पपात दैत्यो बलवान् अञ्जनाद्रिरिवापरः॥' इति ॥४॥

**कमलासनकञ्जलोचनौ छललिङ्गस्य शिरोऽङ्घ्रि वीक्षितुम् ॥**
**बत हंसवराहभूमिकौ यतमानावपि यस्य न प्रभू ॥५॥**

कमलेति– कमलासनकञ्जलोचनौ पद्मयोनि-पुण्डरीकाक्षौ ब्रह्मा विष्णुश्चेत्यर्थः, कर्तारौ, यस्य छललिङ्गस्य लिङ्गवेषस्य भगवतः शिरोऽङ्घ्रि शिरसः अङ्घ्रेश्च समाहारः शिरोऽङ्घ्रि तत् मस्तकं पादौ च वीक्षितुं द्रष्टुं हंसवराहभूमिकौ हंसो वराहश्च तयोः भूमिके वेषौ ययोः तौ सन्तौ यतमानावपि

परिश्रमं कुर्वाणावपि, बत खेदे हा कष्टं! न प्रभू न समर्थाविभूतामिति अध्याहार्यम्। ब्रह्मा शिवस्य शिरो द्रष्टुं हंसवेषो भूत्वा नभस्तल उत्पपात, विष्णुः पादौ द्रष्टुं वराहो भूत्वा भुवमुच्चखान, तथाऽपि तौ नाशकतामित्यर्थः। आद्यन्तवर्जितं भगवतः आदिम् अन्तं च को वा पश्यतीति गम्यम्। यतमानौ च न यस्य शक्नुतः इति च पाठः ॥५॥

**नयनं निटलान्तरस्थितं विघटय्येषदिवान्वितो रुषा ॥**
**भुवनत्रयनिर्जयोन्नतं मदनं गाढमदं ददाह यः ॥६॥**

नयनमिति— यो भगवान् निटलान्तरस्थितं ललाटमध्यस्थितं नयनम् अग्निनेत्रं रुषा क्रोधेन अन्वितः ईषदिव किञ्चित् विघटय्य उद्घाट्य उन्मीलितं कृत्वा भुवनत्रयनिर्जयोन्नतं त्रैलोक्यस्य जयेन उन्नतम् अत एव गाढमदं नितान्तदर्पं मदनं मन्मथं ददाह दग्धवान् ॥६॥

**सकले धवलः कलेबरे हरिनीलोपलमञ्जुलः क्वचित् ॥**
**अमृतांशुरिवादधाति यः परमामक्षिमुदं प्रपश्यताम् ॥७॥**

सकले इति— यः सकले कलेबरे देहे धवलः सर्वाङ्गशुभ्रः इत्यर्थः, क्वचित् कुत्रापि हरिनीलोपलमञ्जुलः हरिनीलोपल इव इन्द्रनीलमणिरिव मञ्जुलः रमणीयः, अर्थात् कण्ठे नीलः, सर्वत्र शुभ्राङ्गः ईषत् एकत्र इन्द्रनीलसवर्णः श्यामलः अत एव अमृतांशुरिव मृगाङ्कः सितांशुः चन्द्र इव प्रपश्यतां जनानां परमाम् उत्कृष्टाम् अक्षिमुदं नयनप्रीतिम् आदधाति बिभर्ति। शिवचन्द्रगत-क्वाचित्कनीलिम-सर्वाङ्गशुभ्रत्व-नेत्रानन्दकरत्व-साधर्म्यात् उपमालङ्कारः स्फुटः ॥७॥

**अवतंसतुषारदीधिति- द्युतिभिर्यस्य यशोभरैरपि ॥**
**सममच्छतरीकृतो दिशा- मवकाशस्सुतरां प्रकाशते ॥८॥**

अवतंसेति— यस्य भगवतः अवतंसतुषारदीधितिद्युतिभिः अवतंसः भूषणतुषारदीधितिर्हिमांशुः चन्द्रः तस्य द्युतिभिः कान्तिभिः यशोभरैरपि यश-

सामतिशयैश्च 'अथातिशयो भरः' इत्यमरः। समं सह दिशामवकाशः सर्वासु दिक्षु अभित आकाश इत्यर्थः अच्छतरीकृतः निर्मलीकृतः सन् सुतरां प्रकाशते। शिवशिरश्चन्द्रद्युतय इव शिवयशोतिशयाश्च दिशः सर्वाः पूरयन्तीति भावः। अत्र हरशिरश्चन्द्रद्युतीनां यशोभरसाहित्यस्य चमत्कृतिजनकत्वात् सहोक्तिरलङ्कारः ॥८॥

**गगनानलजीवनानिल- क्षितिसोमारुणसोमयाजिभिः ॥**
**महतो बत यस्य मूर्तिभि- र्भुवनं क्रान्तमिदं समन्ततः ॥९॥**

गगनेति– गगनानलजीवनानिलक्षितिसोमारुणसोमयाजिभिः गगनम् आकाशः, अनलोऽग्निः, जीवनं जलं, अनिलो वायुः, क्षितिः पृथ्वी, सोमश्चन्द्रमाः, अरुणः सूर्यः, सोमयाजी यजमानश्च तैः पञ्चभूतानि सूर्याचन्द्रमसौ यजमान आत्मा चेत्येवं यस्य महतः भगवतो मूर्तिभिरष्टाभिः इदं भुवनं जगत् समन्ततः सर्वतः क्रान्तं व्याप्तं, बत आश्चर्यम् ॥९॥

**सह तेन धवेन राजते वसुधाधारिणि काऽपि राजते ॥**
**वनिता भवतापनाशिनी चरणप्रेष्यनिवेदिताशिनी ॥१०॥**

सहेति– तेन तथाविधेन धवेन पत्या सह राजते रजतस्यायं राजतः तस्मिन् वसुधाधारिणि भूधरे रौप्याद्रौ कैलासे इति यावत्, भवतापनाशिनी जन्मदुःखध्वंसिनी चरणयोः प्रेष्येण पादकिङ्करेण निवेदितं स्वीकरणायार्पितं अश्नाति भुङ्क्ते इति चरणप्रेष्यनिवेदिताशिनी काऽपि वनिता स्त्री राजते विजयते। सर्वेश्वरसनाथा कैलासे कृतवासा जेजीयते इति भावः ॥१०॥

**वनितापुरुषौ पुरातनौ विमले व्योमनि देवदम्पती ॥**
**भुवनत्रितयस्य तौ विभू रजताद्राविह सिद्धदम्पती ॥११॥**

वनितेति– पुरातनौ पुराणौ वनितापुरुषौ स्त्री पुरुषश्च विमले शुभ्रे चिन्मये निर्लेपे इति यावत्, व्योमनि आकाशे देवौ च तौ दम्पती च देवदम्पती भवतः इति शेषः, भुवनत्रितयस्य विभू ईश्वरौ तौ इह भुवि रजता-

द्वौ कैलासे सिद्धदम्पती सिद्धौ सिद्धपुरुषौ दम्पती भवतः, पुराणपुरुषौ पुराणौ यौ ईश्वरौ दिवि द्युलोके देवदम्पती तावेव इह पार्वती-शिवौ कैलासवासिनौ सिद्धपुरुषौ स्तः ॥११॥

**गजचर्मधरः कपालभृद् गृहनाथो गृहिणी तु कालिका ॥**
**रुधिराविलमुण्डमालिनी कथितौ तौ बत पण्डितैः शिवौ ॥१२॥**

गजेति– गजचर्मधरः शिवः गजस्य त्वचं परिधत्ते, कपालभृत् कपालं बिभर्ति। एवंभूतो गृहनाथो गृहपतिः ईश्वरः, गृहिणी ईश्वरी तु कालिका कालवर्णा सर्वं कालयति अन्तयतीति वा कालिका, रुधिराविलमुण्डमालिनी रुधिरेण शोणितेन आविला कलुषा मुण्डानां मूर्ध्ना माला राजिरस्या अस्तीति रुधिराविलमुण्डमालिनी 'मुण्डो दैत्यान्तरे राहौ मूर्ध्नि' इति नानार्थरत्नमाला। एवम् उभौ घोरदर्शनौ अशिवरूपौ अपि पण्डितैः विज्ञैः शिवौ कथितौ। अयं विरोधः, वेषेण अशिवावपि स्वरूपेण नित्यमङ्गलौ पण्डितविदिताविति विरोधाभासोऽलङ्कारः ॥१२॥

**स किमिन्दुकलाशिरोमणिः किमुताश्लीलकपालभूषणः ॥**
**किमुमे भवती कपालिनी किमु विभ्राजितरत्नमालिनी ॥१३॥**

स इति– सः शिवः इन्दुकलाशिरोमणिः चन्द्रकलाचूडः किम्? उत अश्लीलकपालभूषणः अश्लीलं जुगुप्सावहं कपालानां भूषणं यस्य सः? उमे देवि! भवती कपालिनी कपालिनः पत्नी कपालमालाधरा किमु? विभ्राजितानां भास्वराणां रत्नानां मणीना माला हारः अस्या अस्तीति विभ्राजितरत्नमालिनी किमु? किमुभावपि अन्योन्यानुरूपस्पृहणीयवेषौ, उत अनुरूपघोरवेषौ? ॥१३॥

**रमसेऽम्ब कपालमालिनी क्वचिदीशेन कपालमालिना ॥**
**अतुलप्रभनिष्कमालिना क्वचिदत्युत्तमरत्नमालिनी ॥१४॥**

रमसे इति– अम्ब! क्वचित्, काले देशे वा कपालमालिनी सती कपालमालिना कपालिना ईशेन पत्या रमसे, क्वचित् कस्मिंश्चित्समये देशे वा

अत्युत्तमरत्नमालिनी घोरं वेषम् उज्झित्वा स्पृहणीयदर्शना मणिहारालङ्कृताङ्गी सती, अतुला अनुपमा प्रभा शोभा येषाम् तेषाम् अतुलप्रभाणां निष्काणां सुवर्णानां माला हारोऽस्येति अतुलप्रभनिष्कमाली तेन शिवेन सुन्दरेण रमसे रतिं कुरुषे ॥१४॥

**युवयोर्मरुतस्तनूभुवो　बलवन्तो भुवनप्रकम्पनाः ॥**
**शशिदीधितिहारि यद्यशो　निगमे पावनमम्ब गीयते ॥१५॥**

युवयोरिति— युवयोः शिवयोः तनूभुवः आत्मजाताः मरुतः वायवः मरुन्नामकाः देवाः बलवन्तः बलिनः भुवनप्रकम्पनाः भुवनानां लोकानां प्रकम्पनाः चालकाः भवन्तीत्यध्याहार्यम्। शशिदीधितिहारि चन्द्रकान्तिरमणीयं चन्द्रकान्त्यतिशायि वा पावनं विमलं यद्यशः येषां मरुता यशः कीर्तिः निगमे वेदे गीयते मन्त्रद्रष्टृभिः। शिवयोर्मरुत्पितृत्वकथनात् *पारमैश्वर्यार्थिकम् इन्द्रत्वं तयोरुक्तं भवति। तत्पुत्रयोः गणेशकुमारयोर्मरुत्त्वं च। तत् पुरस्ताद्वक्ष्यते ॥१५॥

**गुरुमुत्तममभ्रचारिणा-　मसमब्रह्मनिधाननायकम् ॥**
**तव देवि शिवे तनूभुवां　मरुतामन्यतमं प्रचक्षते ॥१६॥**

गुरुमिति— देवि, शिवे ! अभ्रचारिणां द्युलोकचारिणां 'द्योदिवौ द्वे स्त्रियाम् अभ्रम्' इत्यमरः, दिविषदाम् उत्तमं श्रेष्ठं गुरुं बृहस्पतिम् असमब्रह्मनिधाननायकम् असमः अद्वितीयः ब्रह्मणां वेदमन्त्राणा निधानस्य निधेः नायकः तम् अधिष्ठातृदेवं, ब्रह्मणस्पतिमिति यावत्, बृहस्पति-ब्रह्मणस्पत्योरव्यतिरेकमामनन्ति वेदे। तव तनूभुवाम् आत्मजातानां मरुताम् अन्यतमम् एकं प्रचक्षते आहुः विप्रा इति शेषः। पुराणेषु तस्य ब्रह्मणस्पतेः नामभेदो रूपविशेषश्च भवत इत्याह ॥१६॥

**द्विरदं वदने महामदं　सितदन्तच्छविधौतदिक्तटम् ॥**
**इतरत्र मुखान्नराकृतिं　विदुरस्यैव विवर्तमद्भुतम् ॥१७॥**

द्विरदमिति— महामदं महान् गुरुः मदः दानजलमित्यर्थः, यस्य तं सितदन्तच्छविधौतदिक्तटं सितस्य धवलस्य दन्तस्य छविभिः कान्तिभिः धौतं

शोधितं दिशां तटं यस्य तं, वदने मुखे द्विरदं गजं, मुखात् वदनादितरत्र अन्यत्राङ्गे नराकृति नररूपं गजमुखं विघ्नेश्वरम् इत्यर्थः, अस्यैव पूर्वोक्तस्य ब्रह्मणस्पतेः मरुताम् अन्यतमस्यैव अद्भुतं गजमुखात् अर्धनराकृतेश्च विचित्रं विवर्तं रूपभेदमापन्नं विदुः विज्ञा इति शेषः। ब्रह्मणस्पतिगणपत्योरव्यतिरेकं प्रतिपादयन् मन्त्रवर्णोऽत्र भवति—'गणानां त्वा गणपतिं हवामहे कविं कवीना-मुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम्॥' इति। ज्येष्ठमभिवर्ण्य कनिष्ठं कुमारं प्रस्तौति ॥१७॥

**अखिलामरनिर्जयोन्नतः प्रथने तारकदानवो बली ॥**
**हृतवीर्यमदो बभूव यद्- घनशक्त्यायुधतेजसाऽञ्जसा ॥१८॥**

अखिलेति— प्रथने प्रख्याने यशसि अखिलामरनिर्जयोन्नतः सकलसुराणां निर्जयेन उन्नतः सर्वदेवजयेनोन्नतयशा इत्यर्थः बली बलवान् तारक इति दानवः तारकासुरः, यद्घनशक्त्यायुधतेजसा यस्य देवस्य घना सत्त्वभरिता शक्तिरेव आयुधं तस्य तेजसा प्रतापेन अञ्जसा झटिति हृतवीर्यमदो हृतः अपहृतः वीर्यात् मदः दर्पः यस्य स बभूव। अत्र यच्छब्दस्य स इति उत्तरेण सम्बन्धः, 'स्राग्झटित्यञ्जसाऽह्नाय द्राङ् मङ्क्षु सपदि द्रुते' इत्यमरः, यः तारकासुरं शक्त्यायुधेन जितवान् इत्यर्थः ॥१८॥

**अमले हृदि निर्मलाशना- च्छिथिले ग्रन्थिचये नराय यः ॥**
**परिपक्वधिये प्रदर्शयेत् तमसः पारमपारवैभवः ॥१९॥**

अमले इति— अमले शुद्धे हृदि हृदये निर्मलाशनात् शुद्धाहारात् ग्रन्थीनाम् अविद्याग्रन्थीनां चये समूहे शिथिले वियुक्ते सति, परिपक्वधिये परिणतबुद्धये नराय मानवाय अपारवैभवः अपारम् अनवधिकम् वैभवम् ऐश्वर्य यस्य सः, यो गुहः तमसः पारं दर्शयेत् स इत्युत्तरेणान्वयः। नरस्य शुद्धाहारात् अविद्या-ग्रन्थीनां विस्रंसने, हृदये च निर्मले सति, तस्मै पुण्यपुरुषाय तमसः पारं दर्शयति स्कन्दो भगवानिति छान्दोग्यश्रुत्याधारेयमुक्तिः। तथा च श्रुतिः— 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्र-

मोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारस्तं स्कन्द इत्याचक्षते तं स्कन्द इत्याचक्षते' इति ॥१९॥

**द्रविडेषु शिशुत्वमेत्य यो गिरिशश्लोकविशेषगायिनीम् ॥**
**अमृतद्रवसारहारिणीं निगमाभां निबबन्ध संस्तुतिम् ॥२०॥**

द्रविडेष्विति– यः द्रविडेषु द्रविडे देशे शिशुत्वम् एत्य जातः शैशवं प्राप्य शैशवदशायामेवेति भावः, गिरिशश्लोकविशेषगायिनी गिरिशस्य शिवस्य श्लोकस्य यशसः विशेषं बाहुल्यं गायतीति गिरिशश्लोकविशेषगायिनीम्, अमृतद्रवसारहारिणीम् अमृतरससारांशमपि अपहरन्तीम् अमृतरसातिशायिनीम् इत्यर्थः, निगमाभां वेदोपमां संस्तुतिं निबबन्ध विरचयामास। द्रविडशिशुः श्रीज्ञानसम्बन्धमूर्तिः अस्य स्कन्दावतारत्वम् आहुः। सौन्दर्यलहर्यां 'तव स्तन्यं मन्ये' इति श्लोके उल्लिखितः द्रविडशिशुः सम्बन्धमूर्तिरिति प्रतीयते। अयं देवाराख्यं द्रविडवेदप्रबन्धं निबद्धवान् ॥२०॥

**भुवि भट्टकुमारिलाख्यया भवमेत्याध्वररक्षणाय यः ॥**
**वरजैमिनिभाषिताशयं बहुलाभिः खलु युक्तिभिर्दधौ ॥२१॥**

भुवीति– यः भट्टकुमारिलाख्यया कुमारिलभट्टनाम्नेत्यर्थः भुवि भूतले भवं जन्म एत्य लब्ध्वा अध्वररक्षणाय वैदिकधर्मस्य अध्वरस्य क्रतोः रक्षणाय वरजैमिनिभाषिताशयं वरस्य मुनिश्रेष्ठस्य जैमिनेर्भाषितस्य वचनस्य आशयमभिप्रायं बहुलाभिर्युक्तिभिः तार्किकोपपत्तिभिः दधौ खलु पोषयामासैव। कुमारिलभट्टः जैमिनिप्रणीतधर्ममीमांसाप्रोद्बलकान् तन्त्रवार्तिकश्लोकवार्तिकटुप्टीकाख्यान् ग्रन्थान् व्यरचयत् स स्कन्दांशजात इत्यैतिह्यम् ॥२१॥

**अधुना विधुनोति यस्तमो विबुधप्रेक्षितमार्गरोधकम् ॥**
**रमणाख्यमहर्षिवेषभृ- च्छ्रितशोणाचलचारुकन्दरः ॥२२॥**

अधुनेति– यः देवः अधुनाऽपि न केवलं पूर्वमेव सम्बन्धकुमारिलवेषाभ्याम् अवतीर्य कार्यभारमुवाह इदानीमपि श्रितशोणाचलचारुकन्दरः श्रितं

शोधितं दिशां तटं यस्य तं, वदने मुखे द्विरदं गजं, मुखात् वदनादितरत्र अन्यत्राङ्गं नराकृति नररूपं गजमुखं विघ्नेश्वरम् इत्यर्थः, अस्यैव पूर्वोक्तस्य ब्रह्मणस्पतेः मरुताम् अन्यतमस्यैव अद्भुतं गजमुखात् अर्धनराकृतेश्च विचित्रं विवर्तं रूपभेदमापन्नं विदुः विज्ञा इति शेषः। ब्रह्मणस्पतिगणपत्योरव्यतिरेकं प्रतिपादयन् मन्त्रवर्णोऽत्र भवति–'गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥' इति। ज्येष्ठमभिवर्ण्य कनिष्ठं कुमारं प्रस्तौति ॥१७॥

**अखिलामरनिर्जयोन्नतः प्रथने तारकदानवो बली ॥**
**हृतवीर्यमदो बभूव यद्- घनशक्त्यायुधतेजसाऽञ्जसा ॥१८॥**

अखिलेति– प्रथने प्रख्याबे यशसि अखिलामरनिर्जयोन्नतः सकलसुराणां निर्जयेन उन्नतः सर्वदेवजयेनोन्नतयशा इत्यर्थः बली बलवान् तारक इति दानवः तारकासुरः, यद्घनशक्त्यायुधतेजसा यस्य देवस्य घना सत्त्वभरिता शक्तिरेव आयुधं तस्य तेजसा प्रतापेन अञ्जसा झटिति हृतवीर्यमदो हृतः अपहृतः वीर्यात् मदः दर्पः यस्य स बभूव। अत्र यच्छब्दस्य स इति उत्तरेण सम्बन्धः, 'स्राग्झटित्यञ्जसाऽह्नाय द्राङ मङ्क्षु सपदि द्रुते' इत्यमरः, यः तारकासुरं शक्त्यायुधेन जितवान् इत्यर्थः ॥१८॥

**अमले हृदि निर्मलाशना- च्छिथिले ग्रन्थिचये नराय यः ॥**
**परिपक्वधिये प्रदर्शयेत् तमसः पारमपारवैभवः ॥१९॥**

अमले इति– अमले शुद्धे हृदि हृदये निर्मलाशनात् शुद्धाहारात् ग्रन्थीनाम् अविद्याग्रन्थीनां चये समूहे शिथिले वियुक्ते सति, परिपक्वधिये परिणतबुद्धये नराय मानवाय अपारवैभवः अपारम् अनवधिकम् वैभवम् ऐश्वर्यं यस्य सः, यो गुहः तमसः पारं दर्शयेत् स इत्युत्तरेणान्वयः। नरस्य शुद्धाहारात् अविद्याग्रन्थीनां विस्रंसने, हृदये च निर्मले सति, तस्मै पुण्यपुरुषाय तमसः पारं दर्शयति स्कन्दो भगवानिति छान्दोग्यश्रुत्याधारेयमुक्तिः। तथा च श्रुतिः– 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्र-

मोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारस्तं स्कन्द इत्याचक्षते　तं स्कन्द इत्याचक्षते' इति ॥१९॥

**द्रविडेषु शिशुत्वमेत्य यो　गिरिशश्लोकविशेषगायिनीम् ॥**
**अमृतद्रवसारहारिणीं　निगमाभां निबबन्ध संस्तुतिम् ॥२०॥**

द्रविडेष्विति— यः द्रविडेषु द्रविडे देशे शिशुत्वम् एत्य जातः शैशवं प्राप्य शैशवदशायामेवेति भावः, गिरिशश्लोकविशेषगायिनीं गिरिशस्य शिवस्य श्लोकस्य यशसः विशेषं बाहुल्यं गायतीति गिरिशश्लोकविशेषगायिनीम्, अमृतद्रवसारहारिणीम् अमृतरससारांशमपि अपहरन्तीम् अमृतरसातिशायिनीम् इत्यर्थः, निगमाभां वेदोपमां संस्तुतिं निबबन्ध विरचयामास। द्रविडशिशुः श्रीज्ञानसम्बन्धमूर्तिः अस्य स्कन्दावतारत्वम् आहुः। सौन्दर्यलहर्या 'तव स्तन्यं मन्ये' इति श्लोके उल्लिखितः द्रविडशिशुः सम्बन्धमूर्तिरिति प्रतीयते। अयं देवाराख्यं द्रविडवेदप्रबन्धं निबद्धवान् ॥२०॥

**भुवि भट्टकुमारिलाख्यया　भवमेत्याध्वररक्षणाय यः ॥**
**वरजैमिनिभाषिताशयं　बहुलाभिः खलु युक्तिभिर्दधौ ॥२१॥**

भुवीति— यः भट्टकुमारिलाख्यया कुमारिलभट्टनाम्नेत्यर्थः भुवि भूतले भवं जन्म एत्य लब्ध्वा अध्वररक्षणाय वैदिकधर्मस्य अध्वरस्य क्रतोः रक्षणाय वरजैमिनिभाषिताशयं वरस्य मुनिश्रेष्ठस्य जैमिनेर्भाषितस्य वचनस्य आशयमभिप्रायं बहुलाभिर्युक्तिभिः तार्किकोपपत्तिभिः दधौ खलु पोषयामासैव। कुमारिलभट्टः जैमिनिप्रणीतधर्ममीमांसाप्रोद्बलकान् तन्त्रवार्तिकश्लोकवार्तिकटुप्टीकाख्यान् ग्रन्थान् व्यरचयत् स स्कन्दांशजात इत्यैतिह्यम् ॥२१॥

**अधुना विधुनोति यस्तमो　विबुधप्रेक्षितमार्गरोधकम् ॥**
**रमणाख्यमहर्षिवेषभृ-　च्छ्रितशोणाचलचारुकन्दरः ॥२२॥**

अधुनेति— यः देवः अधुनाऽपि न केवलं पूर्वमेव सम्बन्धकुमारिलवेषाभ्याम् अवतीर्य कार्यभारमुवाह इदानीमपि श्रितशोणाचलचारुकन्दरः श्रितं

शोणाचलस्य अरुणाचलस्य चारु मनोहरं कन्दरं गुहा येन सः अरुणगिरिगुहावासी रमणाख्यमहर्षिः रमण इति आख्या नाम यस्य स महर्षिः तस्य वेषं बाह्यं रूपं बिभर्तीति रमणाख्यमहर्षिवेषभृत् विबुधप्रेक्षितमार्गरोधकं विबुधैः विज्ञैः प्रेक्षितस्य दृष्टस्य मार्गस्य ज्योतिरुज्ज्वलमार्गस्य रोधकं प्रतिबन्धकं तमः अन्धकारम् अविद्यामिति यावत् विधुनोति अपसारयति। अनेन कविः स्वीयमाचार्यं महर्षिं स्कन्दादनतिरेकं पश्यतीति बोध्यम् ॥२२॥

**स गुहोऽतिमहो महामहा- स्त्रिदशानां प्रथितश्चमूपतिः ॥**
**जगतामधिराज्ञि कोऽपि ते सुतरां प्रीतिपदं कुमारकः ॥२३॥**

स इति– जगतां लोकानाम् अधिराज्ञि चक्रवर्तिनि! स गुहः य एवम्भूतः स स्कन्दः अतिमहः अतीव महः उत्सवो यस्य सः अमितोत्सवः, महामहाः महत् बृहत् महः तेजः यस्य सः बृहत्तेजाः, प्रथितः प्रख्यातः त्रिदशानां देवानां चमूपतिः सेनापतिः देवसेनापतिः, कोऽपि निर्वक्तुमशक्यः ते तव सुतरां नितान्तं प्रीतिपदं प्रेमास्पदं कुमारकः अल्पार्थे कन्प्रत्ययः बालः इति यावत्। गणपतिश्च शिवाङ्कस्थः इति कथनावसरे शक्तिप्रियः स्कन्दः शक्तिधर इति प्रागुक्तम् ॥२३॥

**जयति त्रिपुरारिभामिनी गणपत्यादिमरुत्प्रसूरुमा ॥**
**तमसूत सुरारिधूतये त्रिदशानामपि या चमूपतिम् ॥२४॥**

जयतीति– त्रिपुरारिभामिनी त्रिपुरारेर्हरस्य भामिनी जाया, गणपत्यादिमरुत्प्रसूः गणपतिरेव आदिः प्रथमः मरुत् तस्य प्रसूः जननी। 'गुरुमुत्तमम्' इति श्लोके ब्रह्मणस्पतेर्मरुत्त्वं, तस्य गणपतित्वं ज्येष्ठत्वं च अनन्तरश्लोके गीतम्। उमा जयति प्रकर्षेण वर्तते। या सुरारिधूतये असुरध्वंसनाय त्रिदशानां देवानामपि चमूपतिं सेनानीम् असूत जनयामास ॥२४॥

**स्वकुटुम्बकथाभिधायिनी- र्गणनाथस्य वियोगिनीरिमाः ॥**
**अवधारयतु प्रसन्नया नगनाथप्रियनन्दिनी धिया ॥२५॥**

स्वेति– नगनाथप्रियनन्दिनी पर्वतराजप्रियपुत्री स्वकुटुम्बकथाभिधायिनीः स्वस्य कुटुम्बस्य कुलस्य कथाम् अभिदधत इति स्वकुटुम्बकथाभिधायिन्यः ताः, अत्र देव्याः पति-पुत्राणां कथाप्रस्तावनात्। गणनाथस्य गणपतेः कवेः इमाः वियोगिनीः एतन्नामकवृत्तनिबद्धाः स्तुतीः प्रसन्नया प्रीतया सन्तुष्टया धिया अवधारयतु निश्चिनोतु। स्वकुटुम्बकथा मयोल्लिखिता समीचीना न वेति तद्विज्ञा सैव पर्यालोचयतु ॥२५॥

द्वाविंशः स्तबकः सव्याख्यः समाप्तः ॥

# त्रयोविंशः स्तबकः

त्रयोविंशश्चतुर्विंशश्च प्रकीर्णकस्तबकौ। तत्रायं गायत्रीगर्भितः। 'तत्-' इत्यादि'यात्'अन्ताः चतुर्विंशतिवर्णाः क्रमशः पद्यानां तृतीयपादेषु चतुर्थवर्णाः सन्दृश्यन्ते ॥

**किरदिवामृतं किरणमालया ॥**
**जयति तत्सितं शिववधूस्मितम् ॥१॥**

किरदिति– किरणमालया अंशसमूहेन अमृतं किरदिव वर्षदिव स्थितं सितं शुभ्रं तत् प्रसिद्धम् अस्माभिः स्तबकानामादौ स्तूयमानं शिववधूस्मितम् उमादेव्याः मन्दहसितं जयति। सितस्मितप्रसारस्य अमृतवर्षणसम्भावनाया उत्प्रेक्षा स्फुटोऽलङ्कारः। तेन शिववधूमुखस्य चन्द्रेणोपमा गम्यते। ॥१॥

**तव पदं परे मम गुहान्तरे ॥**
**स्फुरतु सर्वदा विकसितं मुदा ॥२॥**

तवेति– परे उत्तमे! तव पदं चरणं मम गुहान्तरे गुहायाः अन्तरे हृदयास्यान्तः इत्यर्थः हृदयस्य गुहात्वेन श्रूयमाणत्वात् 'निहितं गुहायाम्' इत्यादि वचनं श्रुतिप्रसिद्धम्, मुदा प्रीत्या विकसितम् उन्मीलितं सत् सर्वदा अविरतं स्फुरतु ज्वलतु ॥२॥

**पदमधोऽम्बुजा- न्न किल भिद्यते ॥**
**मदनविद्विषः सदनराज्ञि ते ॥३॥**

पदमिति– मदनविद्विषः कामारेः शिवस्य सदनराज्ञि गृहेश्वरि, अम्ब! ते तव पदं चरणम् अधोऽम्बुजात् ऊर्ध्वाम्बुजं सहस्रारं तदपेक्षया अधोऽम्बुजं हृदयं तस्मान्न किल भिद्यते नैवान्यद्भवति। तव पदमेव कमलं भवति,

अत एव तत्सर्वदा ममान्तरे विकसितं स्फुरत्विति मया प्रार्थितम्। 'पदमदोऽम्बुजात्' इति पाठे, अदः ते पदम् अम्बुजात् सहस्रारात् न भिद्यते ॥३॥

**विभुतयोररी-　कृतबहूद्भवौ ॥**
**विदधतुर्जग-　त्त्रयमिदं शिवौ ॥४॥**

विभुतयेति— विभुतया व्यापितया सर्वव्यापकभावाद्धेतोः उररीकृतबहूद्भवौ उररीकृतः अङ्गीकृतः बहूनाम् उद्भवः सम्भवः याभ्यां तौ शिवौ पार्वतीपरमेश्वरौ इदं जगत्त्रयं भूर्भुवःस्वराख्यं त्रिभुवनं विदधतुः निर्ममाते। सर्वव्यापकत्वात् नानात्वाङ्गीकारेण त्रैलोक्यविधातारावभूतामित्यर्थः ॥४॥

**तव तु खेलने नलिनजाण्डकम् ॥**
**गिरिशवल्लभे　भवति कन्दुकम् ॥५॥**

तवेति— गिरिशवल्लभे शिवप्रेयसि ! यद्यपि युवाभ्यां विभुभ्यां विहितं जगत्त्रयं, तु तथाऽपि तव खेलने क्रीडने नलिनजाण्डकं ब्रह्माण्डमिदं कन्दुकं क्रीडावस्तु भवति ॥५॥

**सकलमस्त्युमे　सदभयङ्करे ॥**
**तव करे परे　किमपि नो नरे ॥६॥**

सकलमिति— उमे भगवति सदभयङ्करे ! सतां सज्जनानाम् अभयङ्करे रक्षाप्रदे परे उत्तमे तव करे हस्ते सकलमस्ति, नरे मनुजे किमपि नो नास्ति, सर्वं त्वदायत्तम्। यत्किमपि मनुजायत्तं दृश्यमानमपि मानुषमात्रस्य वशे नास्ति किमपीत्यर्थः ॥६॥

**किमिव वर्ण्यतां　कशशिकुण्डला ॥**
**उडुमणिस्रजा-　प्रविलसद्गला ॥७॥**

किमिवेति— कशशिकुण्डला कः सूर्यः शशी चन्द्रश्च कुण्डलौ कर्णालङ्कारौ यस्याः सा 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' इत्यमरः।

उडुमणिस्रजाप्रविलसद्गला उडून्येव नक्षत्राण्येव मणयः रत्नानि तेषां स्रजया मालया प्रविलसन् उज्ज्वलन् गलः कण्ठो यस्याः सा, किमिव वर्ण्यताम् ? वर्णयितुं कथं शक्यते सा देवी यस्याः अत्युज्ज्वलात्यन्तदूरस्थानि सूर्य-चन्द्र-नक्षत्राणि कर्णभूषण-कण्ठमालापदानि भजन्ते ? अमेया बृहती अत्युज्ज्वला देवीति भावः ॥७॥

**भण निरन्तरं बहुगुणामुमाम् ॥**
**गतभयं विधे- ह्यमलवाणि माम् ॥८॥**

भणेति– अमलवाणि ! अमले शुद्धे वाणि वाक् भोः सम्बुद्धिः, बहु-गुणाम् अगण्यगुणगणाम् उमाम् उमेति नाम निरन्तरं सदा भण उच्चारय। एवम् उमानामभणितेन माम् इमं गतभयं गतं भयं यस्मात् तं भयवर्जितं विधेहि। सर्वदोमानामकीर्तनेन भीतिः सर्वा पलायते इति भावः ॥८॥

**अव जहीहि वा ननु भजाम्यहम् ॥**
**भुवनभर्त्रि ते चरणमन्वहम् ॥९॥**

अवेति– अव रक्ष जहीहि वा त्यज वा, भोः भुवनभर्त्रि जगद्धात्रि अम्ब ! अहम् अन्वहम् अहन्यहनि प्रतिदिनं ते तव चरणं पादं भजामि ननु सेवे एव। मम त्वत्पादभजनं नित्यं स्यात्। रक्षणमरक्षणं वा त्वदिच्छा-धीनम्। रक्षणफलनिरपेक्षभजनं मम स्वाभाविकमभूत्। तदपि तत्प्रसाद एवेति बोध्यम् ॥९॥

**गणपतेः शिरः- कमलचुम्बिनी ॥**
**भवतु गोपति- ध्वजकुटुम्बिनी ॥१०॥**

गणपतेरिति– गोपतिध्वजकुटुम्बिनी गोपतिध्वजस्य वृषभध्वजस्य कुटु-म्बिनी गृहिणी देवी गणपतेः मम शिरःकमलं सहस्रारकमलं चुम्बतीति शिरः-कमलचुम्बिनी भवतु। योगविभवाद्विकसितं गणपतिशिरःकमलं मकरन्दभरित-मिति गम्यते। तदादानक्षमः देवीवक्त्रसंयोगः। ततः सा मधुकरायतामिति

चुम्बनार्थसामर्थ्यात् आक्षिप्यते। देव्याः सर्वभोक्तृत्वं भक्तस्य योगिनः भोग्यत्वं चोक्ते भवतः ॥१०॥

**दहरमज्जनं विदधतं जनम् ॥**
**परमदेवते नयसि धाम ते ॥११॥**

दहरेति– परमदेवते परमे देवि ! दहरमज्जनं दहराख्ये हृदये मज्जनम् अवगाहनं विदधतं कुर्वाणं जनं हृदयस्थवस्तुलाभाय कूपे मज्जन्तं जनमिवेत्यर्थः, ते तव धाम स्थानं नयसि प्रापयसि। त्वमेव हृदयगं परं वस्त्विति भावः ॥११॥

**जननि विज्ञता भवतु धीमताम् ॥**
**अनुभवस्तु ते करुणया सताम् ॥१२॥**

जननीति– जननि मातः ! धीमतां बुद्धिमतां जनानां विज्ञता पाण्डित्यं भवतु अस्तु, तु किंतु सतां सज्जनानाम् अनुभवः तत्त्वोपलब्धिः ते तव करुणया कृपया भवति इत्यध्याहार्यम्। पण्डितानां शास्त्रीयं ज्ञानमेव स्यात्, तत्त्वसाक्षात्कारस्तु भगवतीप्रसादलभ्यः। पण्डितोऽपण्डितो वा सज्जन एव तस्य प्रसादस्य पात्रं भवति। यद्वा, धीमतां विज्ञता भवतु, ते अनुभवस्तु सतां करुणया भवति, सत्पुरुषद्वारा भगवत्यनुग्रहलाभप्रसिद्धेः ॥१२॥

**अचलया धिया हृदि गवेषणम् ॥**
**वृषहयप्रिया- नगरशोधनम् ॥१३॥**

अचलयेति– अचलया निश्चलया एकाग्रयेत्यर्थः, धिया बुद्ध्या हृदि हृदये गवेषणम् अन्वेषणम् उद्देश्यं वृषहयप्रियानगरशोधनं विधेयं वृषहयस्य वृषभवाहनस्य प्रियायाः पार्वत्याः नगरस्य पुरस्य आवासस्थलस्य संवित्स्थानस्येति यावत्, शोधनं परीक्षणं गवेषणकर्मैव हृदयशोधनं भवतीत्यर्थः। हृदये शुद्धे तत्र सिद्धा भगवती साक्षात्कृता स्यात् ॥१३॥

**न विजहामि ते चरणनीरजम् ॥**
**अवनि धीमता- मव न वा निजम् ॥१४॥**

नेति– धीमताम् अवनि बुद्धिमज्जनरक्षिणि, देवि ! ते तव निजं स्वं चरणनीरजं पादपङ्कजं न विजहामि न त्यजामि, अव पाहि वा न वा ॥१४॥

**पदमुमेऽम्ब ते हृदि विचिन्वते ॥**
**पलितमस्तकाः परमदेवते ॥१५॥**

पदमिति– परमदेवते उमे अम्ब ! पलितमस्तकाः पलितं मस्तकं येषां ते, पलितं जरसा जातं केशशौक्ल्यं, पलितकेशमस्तकाः वृद्धाः ते तव पदं हृदि हृदये विचिन्वते मार्गयन्ते। वर्षपूगध्यानरतानां वयोवृद्धया मस्तकानि पलितकेशानि जायन्ते। त्वं सर्वेषां न सुलभा। ध्यायंध्यायं देहो वयसा जीर्यति ॥१५॥

**स्वयमनामये सकलधात्र्यसि ॥**
**निजमहिम्नि सा त्वमयि तिष्ठसि ॥१६॥**

स्वयमिति– ध्यातॄणाम् एवं कालवशात् जरा आपतति त्वदलाभात्, त्वं तु स्वयम् अनामये अरोगे नित्यकुशले सकलधात्री असि सर्वपोषिणी भवसि। सा तथाविधा त्वं निजमहिम्नि स्वे महिम्नि महत्त्वे अस्पृष्टामये तिष्ठसि। तस्मात्तव न काऽपि क्षतिः, यावन्न तव महामहिम्नि स्थितिं लभते, तावद्रोगादि जराहेतुं भजमान एव भवति देहो जनस्येति भावः ॥१६॥

**स्थितिमसाधयं- स्तव पदाम्बुजे ॥**
**विधिमधिक्षिप- त्यलसधीरजे ॥१७॥**

स्थितिमिति– अजे तव पदाम्बुजे स्थितिं स्थिरां निष्ठाम् असाधयन् असम्पादयन् अलसधीः अलसा मन्दा धीः मतिः यस्य सः जडमतिः जनः विधिं

दैवम् अधिक्षिपति प्रतिक्षिपति उपालभत इति यावत्। त्वच्चरणस्थिति-लब्धये पुरुषकारोऽवश्यः, तत् अजानन् मन्दः दैवं तत्र हेतुरिति गर्हते ॥१७॥

**स्यतु मदापदं शिववधूपदम् ॥**
**यदृषयो विदु- स्त्रिभुवनास्पदम् ॥१८॥**

स्यत्विति– शिववधूपदं पार्वतीचरणं मदापदं मम विपदं स्यतु अन्तयतु। षो अन्तकर्मणीति धातोर्लोटि रूपम्। यत् शिववधूपदं कर्म, ऋषयः मुनयः त्रिभुवनास्पदं त्रैलोक्याश्रयस्थानं विदुः जानन्ति ॥१८॥

**गुणगणं गृणँ- स्तव शिवे शिवम् ॥**
**गतभयोऽभवं मदमितो नवम् ॥१९॥**

गुणगणमिति– शिवे, अम्ब ! तव गुणगणं शिवं कल्याणं गुणगणं गुणानां गणं समूहं गृणन् स्तुवन्, नवं नूतनं मदं हर्षं 'हर्षेऽप्यामोदवन्मदः' इत्यमरः, इतः गतोऽहं गतभयः भयवर्जितः अभवम्। स ते कल्याणगुणगणस्तवमहिमा येनाभिनवहर्षलाभो भयप्रणाशश्च भवतः ॥१९॥

**तव कृपावशात् तदिदमव्यये ॥**
**जननि नः प्लुति- स्तव यदङ्घ्रये ॥२०॥**

तवेति– अव्यये अक्षये जननि मातः! तव अङ्घ्रये चरणाय नः अस्माकं प्लुतिः प्लवनम् उत्पतनं भवतीति यत् तदिदं तव कृपावशात् भवतीति शेषः। अस्माकं त्वच्चरणोन्मुखगमनं त्वत्करुणाविलासादेव सम्भवति, नेहास्माकं पौरुषं हेतुरिति भावः ॥२०॥

**नयनदृश्ययो- रयि यदन्तरम् ॥**
**तदमरस्तुते तव वपुः परम् ॥२१॥**

नयनेति– अयि अमरस्तुते देवविनुते! नयनदृश्ययोः, नयनस्य दर्शनं

कुर्वतो नेत्रस्य दृश्यस्य दर्शनविषयस्य च यदन्तरं यन्मध्यं योऽवकाश इत्यर्थः, तत्तव परं वपुः उत्तमं शरीरं भवति। दृग्-दृश्ययोरन्तरं आकाशमेव भवति, वस्तुतः दृग्-दृश्यान्तरं चिन्मयमाकाशं विदुः। दृग्-दृश्ययोरन्तरस्य दर्शन-क्रियाव्याप्यत्वात् दर्शनस्य ज्ञानरूपत्वाच्च। तस्मात् चिदाकाशो वपुः परं परस्या देव्या इति बोध्यम् ॥२१॥

**अहमिति स्मृतिः क्व नु विभासते ॥**
**इति विचोदयन् महति लीयते ॥२२॥**
**अमृतसञ्ज्ञके सुखचिदात्मके ॥**
**मतिमदर्थिते जननि धाम्नि ते ॥२३॥**

(युग्मम्) अहमिति– अहम् इति स्मृतिः स्मरणं क्व नु कुत्र विभासते इति विचोदयन् वृत्तिं प्रेरयन् विचारयन्नित्यर्थः, पुमान् महति बृहति, अमृत-सञ्ज्ञके अमृतं सञ्ज्ञा नाम यस्य तस्मिन् सुखचिदात्मके सुखं चित् च आत्मा स्वरूपं यस्य तस्मिन् मतिमदर्थिते बुद्धिमद्भिः प्रार्थिते ते तव धाम्नि स्थाने लीयते लीनो भवति। अहमिति धियो भानं क्व, क्वेदमहम्प्रत्ययास्पदमिति सूक्ष्मया बुद्ध्या विचारयन् पुरुषः अमृताभिधाने चिदानन्दस्वरूपे तव स्थाने लयं प्राप्नोतीति भावः ॥२२–२३॥

**अयि मुदास्पदं स्पृशति ते पदम् ॥**
**श्वसितयात्रया सततदृष्टया ॥२४॥**

अयीति– सततदृष्टया सततं सदा दृष्टया वीक्षितया श्वसितयात्रया श्वसितस्य प्राणवायोः यात्रया गत्यागतिरूपयेत्यर्थः, साधनेन मुदास्पदं मुदः प्रीतेः आस्पदं स्थानं ते तव पदं चरणं स्पृशति, साधक इति शेषः। श्वासस्य यातायातविहारान्ववेक्षणेन साधनेन आनन्दनिलयं तव पदम् अश्नुते कृतीति भावः ॥२४॥

**दधतु सत्कवे- र्गणपतेरिमाः ॥**
**नगभुवो मुदं नरमनोरमाः ॥२५॥**

दधत्विति– सत्कवेः, अदुष्टस्य शब्दार्थमाधुर्यादिगुणवतः काव्यस्य रचयितुः गणपतेर्मम इमाः नरमनोरमाः एतद्वृत्तकलिताः स्तुतयः नगभुवः पार्वत्याः मुदं प्रीतिं दधतु बिभ्रतु ॥२५॥

त्रयोविंशः स्तबकः सव्याख्यः समाप्तः ॥

# चतुर्विंशः स्तबकः

अयं च प्रकीर्णकः स्तबकः ॥

**चन्द्रिकासितं चण्डिकास्मितम् ॥**
**भूतले सतां भातु भूतये ॥१॥**

चन्द्रिकेति– चन्द्रिकासितं ज्योत्स्नेव शुभ्रं चण्डिकास्मितं चण्डिकायाः स्मितं मन्दहसितं भूतले इह जगति सतां शिष्टानां भूतये ऐश्वर्याय भातु राजताम् ॥१॥

**भालचक्षुष- श्चक्षुषां धनम् ॥**
**किञ्चिदस्तु मे शस्तवर्धनम् ॥२॥**

भालेति– भालचक्षुषः भाले ललाटे चक्षुः नेत्रं यस्य तस्य हरस्य चक्षुषां त्रयाणां नेत्राणां धनं सम्पद्भूतं भोग्यं किञ्चिद्वस्तु उमाख्यमित्यर्थः, मे मम शस्तवर्धनं क्षेमवर्धनम् अस्तु भवतु। 'भावुकं भवुकं भव्यं कुशलं क्षेममस्त्रियाम्। शस्तं च' इत्यमरः। हरत्रिणेत्रतर्पणम् उमाख्यं धनं मम क्षेमकृदस्तु ॥२॥

**साधुसन्तति- क्षेमकारिणी ॥**
**घोरदानवा- नीकदारिणी ॥३॥**

साध्विति– साधुसन्ततिक्षेमकारिणी साधुजनसन्ततेः कल्याणाधायिनी, घोरदानवानीकदारिणी घोराणां भयङ्कराणां दानवानाम् असुराणाम् अनीकं सैन्यं दारयति भञ्जयतीति घोरदानवानीकदारिणी ॥३॥

**योगयुक्तस-　　च्चित्तचारिणी ।।**
**पादसेवक-　　प्राज्ञतारिणी ।।४।।**

योगेति– योगेन साधनेन युक्तानां सम्पन्नानां सतां पुरुषाणां चित्तेषु चरतीति योगयुक्तसच्चित्तचारिणी, पादयोः सेवकान् भजकान् प्राज्ञान् विदुषः तारयतीति पादसेवकप्राज्ञतारिणी, तान् भवाम्बुधिं तारयतीत्यर्थः ।।४।।

**पुष्पबाणजि-　　न्नेत्रहारिणी ।।**
**पातु मां जग-　　च्चक्रधारिणी ।।५।।**

पुष्पेति— पुष्पबाणजिन्नेत्रहारिणी पुष्पबाणं मन्मथं जयतीति पुष्पबाणजित् हरः तस्य नयनानि हरतीति पुष्पबाणजिन्नेत्रहारिणी कामारिनेत्रमादकमस्याः रूपमित्यर्थः, एवम्भूता जगच्चक्रधारिणी भुवनसाम्राज्यभर्त्री मां पातु रक्षतु ।।५।।

**द्वादशान्तभू-　　जातशारिका ।।**
**सर्ववाङ्मय-　　स्यैककारिका ।।६।।**

द्वादशान्तेति– द्वादशान्तभूजातशारिका द्वादशान्तं सहस्रारादप्यूर्ध्वम् आहुः तन्त्राणि, स एव भूजातो वृक्षः तत्र स्थिता शारिका पक्षिविशेषः। द्वादशान्ताख्ये वृक्षे पक्षी भूत्वा स्थिता। सर्ववाङ्मयस्य सर्वस्य शब्दप्रपञ्चस्य एककारिका एका सूत्रप्रायपद्यरूपा भवति। अल्पाक्षरत्वे सति बह्वर्थज्ञापकं श्लोकं कारिकामाहुः। समस्तशब्दब्रह्मसारांशोऽसावित्यर्थः ।।६।।

**पुण्यकर्मसु　　स्वच्छमस्तका ।।**
**योगशालिषु　　च्छिन्नमस्तका ।।७।।**

पुण्येति– पुण्यकर्मसु पुण्यानि कर्माणि येषां तेषु स्वच्छमस्तका स्वच्छं निर्मलं मस्तकं शिरो यस्याः सा, पावनकर्मकृतां शिरः शुद्धम् अस्याः स्वाम्यं भवति, तत्र कृतावासत्वादस्याः। योगशालिषु योगेन योगनिष्ठया शालन्ते

इति योगशालिनः तेषु छिन्नमस्तका छिन्नं मस्तकं शिरो यस्याः सा। योगनिष्ठेषु शिरोग्रन्थिविशेषाणां भेदनेन अस्याः निरर्गलप्रसादधारा प्रवर्तते, तस्मात् छिन्नमस्तका। प्रचण्डचण्डीप्रस्तावे छिन्नमस्तातत्त्वावसरे पुरस्तादिदं प्रपञ्चयिष्यते ॥७॥

**आत्मनि स्थितेः सम्प्रदायिका ॥**
**सर्वजन्मिनां सम्प्रवर्तिका ॥८॥**

आत्मनीति — आत्मनि आत्मस्वरूपे स्थितेर्निष्ठायाः सम्प्रदायिका। सर्वजन्मिनां सर्वेषां देहिनां सम्प्रवर्तिका। सर्वेषामपि देहिनां प्रवर्तयित्री जन्मतो निवर्तयित्री, अत एव आत्मनिष्ठायाः निवृत्तिलभ्यायाः दात्रीत्युक्ता। निवर्तिका प्रवर्तिका उभे च सेति भावः ॥८॥

**मां पुनातु सत्- पूज्यपादुका ॥**
**भाललोचन- प्राणनायिका ॥९॥**

मामिति— सत्पूज्यपादुका सद्भिः पूज्ये आराध्ये पादुके उपानहौ यस्याः सा, भाललोचनप्राणनायिका भाललोचनस्य ललाटनेत्रस्य रुद्रस्य प्राणनायिका हृदयेश्वरी मां पुनातु शुद्धं करोत्वित्यर्थः ॥९॥

**दानतो यशः पौरुषाद्रमा ॥**
**सम्पदो मदः शीलतः क्षमा ॥१०॥**

दानत इति— दानतः दानात् अन्येभ्यः द्रव्यत्यागात् यशः कीर्तिः भवति इति अध्याहार्यम्। पौरुषात् पुरुषकारात् रमा लक्ष्मीः सम्पद्भवतीत्यर्थः। सम्पदः श्रियः मदो हर्षः भवति। शीलतः सद्वृत्तात्, 'शीलं स्वभावे सद्वृत्ते' इत्यमरः, क्षमा क्षान्तिः सहनशक्तिः भवति ॥१०॥

**सत्यतो जग- त्यत्र गौरवम् ॥**
**यज्ञतो दिवि स्थानमुज्ज्वलम् ॥११॥**

सत्यत इति— सत्यतः सत्यवादादित्यर्थः, अत्र जगति गौरवं गुरुत्वं पूज्यत्वं भवति। यज्ञतो यागात् दिवि स्वर्गे उज्ज्वल भ्राजमानं स्थान भवति॥११॥

**संयमादघ- व्रातवीतता॥**
**योगतो महा- सिद्धिशालिता॥१२॥**

संयमादिति— संयमात् सम्यग्यमनं संयमः तस्मात् इन्द्रियनिग्रहात्, अष्टाङ्गयोगे उत्तराङ्गत्रयं धारणाध्यानसमाध्याख्यं संयम उच्यते, तस्मात्संयमादिति वा। अघव्रातवीतता अघव्रातात् पापजालाद् वीतता विगतत्वं विमुक्तत्व भवतीति यावत्। योगतो अध्यात्मयोगनिष्ठातः महासिद्धिशालिता महतीभिः सिद्धिभिः सम्पन्नता भवति॥१२॥

**शर्वनारि ते पादसेवया॥**
**सर्वसत्फला- वाप्तिरग्रचया॥१३॥**

शर्वेति— शर्वनारि, रुद्रपत्नि अम्ब! अग्रचया श्रेष्ठया ते तव पादसेवया सर्वसत्फलावाप्तिः सर्वेषां सत्फलानाम् अवाप्तिः लब्धिर्भवति। यशोरमामदादीनाम् उक्तानां लाभः दान-पौरुष-सम्पदादिभ्यो भवतीति सत्यमेतत्। त्वत्पादसेवया तु सर्वाण्येतानि उपगतानि भवन्ति। सर्वेषां पुण्यकर्मणा गतिस्त्वत्पादसेवेति बोध्यम्॥१३॥

**नोद्यमेन या सिद्धिरुत्तमा॥**
**विश्वनायिका- वीक्षितेन सा॥१४॥**

नेति— या उत्तमा सिद्धिः उद्यमेन प्रयत्नेन न भवतीति शेषः, सा सिद्धिः विश्वनायिकावीक्षितेन भवति। पुरुषकारस्य असाध्या सिद्धिः विश्वेश्वरीवीक्षितस्य साध्येत्यर्थः॥१४॥

**सम्पदां रमा भारती गिराम्॥**
**त्वं शिवे प्रभुः प्राणसंविदाम्॥१५॥**

सम्पदामिति— सम्पदां श्रिया रमा प्रभुः ईश्वरी भवति, गिरां वाचां भारती सरस्वती प्रभुः नायिका भवति, शिवे त्वं, प्राणसंविदां प्रभुः जीवन-धारण-क्रियाकरणादिहेतुभूतानां प्राणानां बाह्यज्ञानेन्द्रियमनोबुद्ध्याद्याधारभूतानां चितां संविदां च प्रभुः अधीश्वरी क्रिया-ज्ञानशक्तीनामीश्वरीत्यर्थः ॥१५॥

**चक्षुषा नभो- लक्ष्यधारिणा ॥**
**सिद्ध्यतीव ते देवि धारणा ॥१६॥**

चक्षुषेति— देवि ! नभोलक्ष्यधारिणा नभ आकाशमेव लक्ष्यं दृष्टिगम्यं तद्धर्तुं शीलमस्येति नभोलक्ष्यधारि तेन चक्षुषा ते तव धारणा त्वत्स्वरूपग्रहण-धारणमित्यर्थः, सिद्ध्यतीव सिद्धा भवतीत्यर्थः। इव वाक्यालङ्कारे। आकाश-मेव लक्ष्यत्वेन चक्षुषि धृतं चेत् दृश्यान्तराभावात् शून्यतयाऽऽभासमानस्य वस्तुतो विभुतयाऽवस्थितस्य देवीस्वरूपस्य ग्रहणे धृतिस्सिद्ध्यतीति भावः ॥
औपनिषदं समयमवलम्ब्येयम् अक्षिपुरुषविद्या भवति ॥१६॥

**आशिरो दध- न्नाभितोऽनिलम् ॥**
**देवि विन्दति त्वन्मुनिर्बलम् ॥१७॥**

आशिर इति— देवि ! नाभितः नाभिदेशादारभ्य आशिरः शिरोदेश-पर्यन्तं, आङ अभिविध्यर्थकः। अनिलं प्राणवायुं दधत् धारयमाणो मुनिः त्वत् त्वत्तः बलं विन्दति प्राप्नोति। नाभिस्थलात् मस्तकपर्यन्तं प्राणधार-णेन शक्तिमान् भवतीत्यर्थः। नेह प्राणायामेन श्वासस्तम्भः उपदिष्टः। ध्यानबलेनैषा स्थितिर्भवतीति गमयितुं मुनिपदमुपात्तम् । इयमेवौपनिषदी संवर्गविद्या भवति ॥१७॥

**हृद्गुहान्तरे यद्विशोधनम् ॥**
**तत्सवित्रि ते स्यादुपासनम् ॥१८॥**

हृदिति— सवित्रि मातः ! हृद्गुहान्तरे हृदयगुहायाम् अन्तः यत् विशो-धनं परीक्षणं भवति, तत् ते तव उपासनं स्यात् भवेत्। इयं दहरविद्या

भवति, एवम् अक्षिपुरुषविद्या संवर्गविद्या दहरविद्या च उपनिषदुपदिष्टाः भाषान्तरेण सुगमाः प्रतिपादिताः ॥१८॥

**काऽप्यहम्मति- गोचरं विना ॥**
**लोकधात्रि ते रूपभावना ॥१९॥**

काऽपीति— लोकधात्रि, जगद्धात्रि ! गोचरं विना विषयेन विना काऽपि अहम्मतिः अहमिति मतिः बुद्धिः। इदम्भाव एव गोचरः। इदम्प्रत्ययनिरपेक्षं अहम्प्रत्ययार्थबोधो न जायते लोके। तदिह काऽपीत्युक्तम्। इदम्भावविरहमस्मीति सत्तामात्रबोध इत्यर्थः। सा शुद्धा अस्मिताबुद्धिः ते तव रूपभावना तव स्वरूपनिष्ठा भवतीत्यर्थः। इयमपि छन्दोगैराम्नाता वैश्वानरविद्या भवति ॥१९॥

**अस्यमण्डनं कोऽपि विद्यया ॥**
**खण्डनं परः प्राह ना यया ॥२०॥**

असीति— कोऽपि विद्वान् विद्यया चिता अमण्डनम् अविभाजनम् असि इति प्राह। बडि विभाजने मडि च, मण्डते इति अनुदात्तेत्को धातुः, तस्माद् भावे ल्युट् अमण्डनम् अविभागम् अविभाज्यचित्का त्वमिति यावत्। परः ना अन्यो मनुजः यया विद्यया त्वं खण्डनं विभाज्यचित्केति प्राह। उभौ पक्षौ भवतः। तत्र एकः तव चितेः भेदो नास्तीति, अस्तीत्यन्यः इति तात्पर्यम् ॥२०॥

**मातरेतया जीयते त्वया ॥**
**एकया तनू- भिन्नया धिया ॥२१॥**

मातरिति— एकया एतया त्वया तनूभिन्नया तनूषु भिन्नया धिया जीयते भावे प्रयोगः। मातः ! एकैव एषा त्वं शरीरेषु पृथक् पृथक् विद्यमानेन ज्ञानेन जयसि इति भावः। शरीरदृष्टया भिन्नाऽसि, अन्यथा स्वयमखण्डाऽसीति तात्पर्यम् ॥२१॥

**बाह्यदर्शने विश्वपङ्किला ॥**
**अन्यथा भव- स्यम्ब केवला ॥२२॥**

बाह्येति— अम्ब ! बाह्यदर्शने स्थूलायां बहिर्दृष्टौ विश्वपङ्किला विश्वेन दृश्येन जडेन सर्वेण पङ्किला कर्दमवती। विश्वस्य दृश्यत्वेन जडत्वात् भेद-बाहुल्यात् च अनैर्मल्यं द्योतयितुं विश्वस्मिन् विश्वाकारेण भासमानाया देव्याः पङ्किलत्वं लक्षणयोक्तम्। अस्वच्छेत्यर्थः। केवला एका सती अन्यथा भवसि सूक्ष्मायां दृष्टौ स्वयं स्वच्छेत्यर्थः ॥२२॥

**खण्डवन्नृणां भासि भोगिनाम् ॥**
**अस्यभिन्नचित् काऽपि योगिनाम् ॥२३॥**

खण्डवदिति— भोगिनां विषयभोगवतां नृणां मनुजानां खण्डवत्, स्वयम् अखण्डाऽपि खण्डवद्भासि। योगिनां युक्तचेतसां ज्ञानिनां काऽपि अनिर्वाच्या अभिन्नचित् अखण्डा चितिरसि ॥२३॥

**बन्ध एष यद्- भासि खण्डिता ॥**
**मोक्ष एष यद्- भास्यखण्डिता ॥२४॥**

बन्ध इति— खण्डिता भिन्ना भेदवती भासि इति यत्, एष बन्धो भवति। भेददर्शनं बन्धः। अखण्डिता अभिन्ना अभेदस्वरूपा भासीति यत्, एष मोक्षो भवति। अभेददृष्टिरेव बन्धान्मुक्तिः ॥२४॥

**एतदीशितुः पत्नि हृन्मुदे ॥**
**सौप्रतिष्ठसद्- गीतमस्तु ते ॥२५॥**

एतदिति— ईशितुः पत्नि ! ईश्वरभार्ये, एतत् मयोक्तमिदं सौप्रतिष्ठ-सद्गीतं सुप्रतिष्ठाया एतन्नामकवृत्तस्य इदं सौप्रतिष्ठं तच्च तत् सद्गीतं च सौप्रतिष्ठसद्गीतं, एतत् गीतजालं ते तव हृन्मुदे हृदो हृदयस्य मुदे प्रीतये अस्तु ॥२५॥

इति श्रीमहर्षिरमणभगवत्पादान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतिमुनेः कृतावुमासहस्रे चतुर्विंशः स्तबकः समाप्तः।

समाप्तं च षष्ठं शतकम् ।
प्रभाख्या व्याख्या च समाप्ता ॥

# पञ्चविंशः स्तबकः

अथ भरतखण्डस्य आसेतुहिमाचलपुण्यक्षेत्राणि अधिष्ठाय विश्रुतानां देवीमूर्तीनां स्तवोऽस्मिन् पञ्चविंशे स्तबके भवति। आदौ दक्षिणदेशस्थलानि प्रस्तूयन्ते। तत्र अर्वाचीनतमं कन्याकुमारीति प्रथितं क्षेत्रमारभ्य तदधिष्ठात्रीं कन्याकुमारी स्तौति ॥

**कन्याकुमारी सुतरां वदान्या मान्या समस्तैः प्रकृतेरनन्या ॥**
**आक्षेपकं सागरबुद्बुदानां हासं विधत्तां जगतः सुखाय ॥१॥**

कन्येति— सुतरां नितान्तं वदान्या दानकुशला समस्तैः नरैः सुरैर्वा मान्या पूज्या, प्रकृतेरनन्या प्रकृतेरविशेषा प्रकृतिरेवेत्यर्थः, 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतेः ईशस्य मायाशक्तिरेव प्रकृतिर्बोध्या। कन्याकुमारी एतन्नाम्ना प्रसिद्धा बाला देवी सागरबुद्बुदानां समुद्रफेनोद्गमबुद्बुदाकाराणाम् आक्षेपकं प्रतिषेधकं हासं जगतः लोकस्य सुखाय विधत्ताम् विदधातु। अनवरतोत्तरङ्गतरङ्गधवलफेनबुद्बुदाक्षेपको हास इत्युक्तेः अभिनवनित्योदयशुभ्रशोभातिशायी कुमारीहासः जगन्माङ्गलिकः स्तूयते ॥१॥

सेतुबन्धप्रसिद्धं रामेश्वरक्षेत्रं तत्र प्रसन्नायाः पर्वतवर्धनीदेव्याः स्तवेन प्रस्तौति ।

**रक्ष स्वचेतो मदमत्सरादे- र्भिक्षस्व काले तनुरक्षणाय ॥**
**वीक्षस्व रामेशवधूपदाब्जं मोक्षस्वलाभे यदि तेऽभिलाषः ॥२॥**

रक्षेति— भोः! ते तव मोक्षस्वलाभे मोक्ष एव स्वं धनं तस्य लाभे अभिलाषो भवति यदि, मदमत्सरादेः मदो दर्पः मत्सरोऽन्यशुभद्वेषश्च आदी यस्य तस्मात् दोषात् इत्यर्थः, तद्गुणसंविज्ञानो बहुव्रीहिः, स्वचेतः स्वं चेतः

मनः कर्म रक्ष त्रायस्व। तनुरक्षणाय शरीररक्षार्थं काले क्षुन्निवृत्तये भिक्षस्व भोजनं याचस्व। रामेशवधूपदाब्जं रामेशस्य वध्वाः पर्वतवर्धनीदेव्याः पदाब्जं चरणारविन्दं वीक्षस्व पश्य। मुमुक्षु प्रति सम्बोधनम्। तव आत्मप्रेप्सायाम् इमानि मुख्यानि कर्तव्यानि, मदमात्सर्यादिर्मनसो गोपनं, शरीरधारणाय भिक्षा, पर्वतवर्धनीपाददर्शनं च ॥२॥

मधुराक्षेत्राधिदेवतां सुन्दरेश्वरसनाथां मीनाक्षीं देवीं स्तौति ॥

**लोकस्व दूरीकृतभक्तशोकं हालास्यनाथेक्षणपुण्यपाकम् ॥**
**भीतिः सखे चेद्भवतः पवित्रं ज्योतिर्विशेषं जलचारिनेत्रम् ॥३॥**

लोकस्वेति— सखे! भवतः जन्मपर्यायात् भवशब्दात्तसिल्, जन्मनः भीतिः भवति चेत् दूरीकृतभक्तशोकं दूरीकृतः भक्तानां शोकः येन तत् भक्तलोकदुःखघ्नमित्यर्थः। हालास्यनाथेक्षणपुण्यपाकं हालास्यस्य मधुरापरनामधेयस्य क्षेत्रस्य नाथस्य सुन्देरेश्वरस्य ईक्षणस्य दृष्टेः पुण्यस्य पाकं परिपाकं फलभूतमिति यावत्, जलचारिनेत्रं जलचारिणौ मीनौ इव नेत्रे यस्य तत् मीनाकारचारुनेत्रमित्यर्थ.। यद्वा जलचारिणः मीनस्य नेत्रं वीक्षितमिव नेत्रं यस्य तत्। मीनवत् वीक्षितेनैव पोषयति निजान् जातानित्यर्थः। तत् ज्योतिर्विशेषं किञ्चन ज्योतिः लोकस्व पश्य ॥३॥

जम्बुकेश्वरक्षेत्रमूर्तिम् अखिलाण्डनायिकां वन्दते ॥

**यो लोकते तामखिलाण्डराज्ञी- मज्ञानविध्वंसविधानविज्ञाम् ॥**
**अम्बां परां जीवनलिङ्गशक्तिं भूयः स कायं न भवे लभेत ॥४॥**

य इति— यः अखिलाण्डराज्ञीम् अखिलानामण्डानां ब्रह्माण्डानां राज्ञीमीश्वरी, अज्ञानविध्वंसविधानविज्ञाम् अज्ञानस्य सर्वानर्थहेतोः विध्वंसस्य विनाशस्य विधानस्य विज्ञां वेत्त्रीं, जीवनलिङ्गशक्तिं जीवनलिङ्गस्य जीवने जले स्थितं लिङ्गं जम्बुकेश्वराख्यं शिवलिङ्गं तस्य शक्तिं परामम्बां लोकते पश्यति, सः भूयः पुनः भवे जन्मनि कायं देहं न लभेत न प्राप्नोति। तस्य नास्ति

पुनर्जन्मेति भावः। दक्षिणदेशे प्रसिद्धेषु पञ्चभूतक्षेत्रेषु जम्बुकेश्वरक्षेत्रम् आप्यं प्राहुः ॥४॥

**बिभ्रत्सहस्रं च मुखानि शक्तो वक्तुं गुणान् कः कमलालयस्य ॥**
**जन्मापि यत्र प्रभवेज्जनानां मुक्त्यै मुनीनामपि दुर्लभायै ॥५॥**

बिभ्रदिति— कमलालयस्य कमलालयक्षेत्रस्य द्रविडभाषया 'तिरुवारूर्' इति विश्रुतस्य चोलमण्डलस्थस्य, त्यागराजसनाथया त्रिपुरसुन्दर्या अधिष्ठित-स्य गुणान् धर्मादिपुरुषार्थसिद्धिदान् गुणान् वक्तुं वर्णयितुं कः सहस्रं मुखानि बिभ्रत् च सहस्रमुखः अपि को वा शक्तः ? आदिशेष इव सहस्रमुखोऽपि पुरुषो न प्रभुरित्यर्थः। यत्र क्षेत्रे जन्म जननमपि मुनीनां ध्याननिष्ठानाम् अपि दुर्लभायै मुक्त्यै प्रभवेत्। एतत्क्षेत्रे जननमपि मोक्षप्रदम् ॥५॥

**व्याघ्राङ्घ्रिवाताशनपूजितस्य नाट्यस्थलीनायिकया शिवस्य ॥**
**नेत्राध्वभाजा शिवकामया वो मित्राणि कामाः फलिनो भवन्तु ॥६॥**

व्याघ्रेति— मित्राणि, भोः सखायः ! व्याघ्राङ्घ्रिवाताशनपूजितस्य व्याघ्राङ्घ्रिणा व्याघ्रपादेन मुनिना वाताशनेन शेषेण च, पतञ्जलेः शेषावतारः प्रसिद्धः। पतञ्जलिव्याघ्रपादाभ्यां पूजितस्य शिवस्य चिदम्बरनटराजप्रभोः नाट्यस्थलीनायिकया रङ्गस्थलाध्यक्षया नेत्राध्वभाजा दृष्टिपथं गतया शिव-कामया शिवकामेश्वर्या वः कामाः मनोरथाः फलिनः भवन्तु सिद्ध्यन्त्विति भावः। चिदम्बरक्षेत्राध्यक्षनटेश्वरप्रियायाः शिवकामेश्वर्याः दर्शनेनाभीष्टार्थ-सिद्धिरस्त्वित्यर्थः। पञ्चभूतक्षेत्रेषु चिदम्बरम् आकाशक्षेत्रं प्रसिद्धम् ॥६॥

**आलोकतेऽपीतकुचामयि त्वा- मालोलचित्तामरुणाचले यः ॥**
**निर्वेदवान् पर्वसुधांशुवक्त्रे सर्वे वशे तस्य भवन्ति कामाः ॥७॥**

आलोकते इति— अयि पर्वसुधांशुवक्त्रे पूर्णचन्द्रवदने अम्ब ! निर्वेदवान् विषयविद्वेषजन्या चित्तवृत्तिर्निर्वेदः तद्वान्, यः पुमान् अरुणाचले तैजसलिङ्गे अरुणाचलेश्वरे आलोलचित्ताम् अनुरागवशात् तत्र आलोलं विलसच्चित्तं यस्याः

ताम् अपीतकुचाम् एतदाख्यया ख्यातां त्वाम् आलोकते पश्यति, तस्य वशे सर्वे कामाः भवन्ति। अरुणाचलसनाथाया अपीतकुचाम्बिकायाः दर्शनात् सर्वे कामाः स्वाधीना भवन्तीत्यर्थः। कवेः स्वगुरुलाभोऽत्र क्षेत्रे, चिरकालवासश्च ॥७॥

**यः कुण्डलीपट्टणराजधानी-　मालोकते कामपि कृत्तमस्ताम् ॥**
**निस्सारमानन्दकथाविहीनं　संसारमेतं स जहाति बुद्ध्या ॥८॥**

य इति— यः कुण्डलीपट्टणराजधानीं कुण्डलीपट्टणं कुण्डलीपुरं राजधानी मुख्यनगरी यस्याः तां कामपि कृत्तमस्तां छिन्नमस्तां देवीं रेणुकाख्याम् आलोकते वीक्षते, स निस्सारं सारहीनं नीरसमिति यावत्, आनन्दकथाविहीनम् आनन्दकथया आनन्दवचसाऽपि हीनं वर्जितम् एतं संसारं जननमरणाख्यं बुद्ध्या जहाति त्यजति विरक्तो भवतीत्यर्थः। द्रविडभाषया 'पडैवीडु' इति प्रसिद्धं रेणुकाक्षेत्रं कुण्डलीपट्टणमुक्तम्। कवेः तपःस्थलेषु मुख्यमेकमिदं क्षेत्रं बोध्यम् ॥८॥

**दृष्ट्वा वधूमादिपुरीश्वरस्य　यो लोचनारोचकमाधुनोति ॥**
**तस्यान्तरङ्गं धुतसर्वसङ्गं　भूयोभवारोचकमावृणोति ॥९॥**

दृष्ट्वेति— आदिपुरीश्वरस्य आदिपुरी 'तिरुवोत्तियूर' इति पावनं क्षेत्रं तदीश्वरस्य वधूं देवीं त्रिपुरसुन्दरीं दृष्ट्वा वीक्ष्य यो जनः लोचनारोचकं लोचनयोः अक्ष्णोः अरोचकं दृश्यविषयद्वेषं जुगुप्साम् इति यावत्, आधुनोति निवारयति, दर्शं दर्शं पुनर्दर्शनीयमिदं पश्येयमिति यः सफलनेत्रो भवति, तस्य अन्तरङ्गम् अन्तःकरणं धुतसर्वसङ्गं धुतः नष्टः सर्वेषु सङ्गो यस्य तत् सङ्गरहितं सत् भूयोभवारोचकं भूयोभवे पुनर्जन्मनि अरोचकं जुगुप्सामावृणोति आच्छादयति। त्रिपुरसुन्दरीं दृष्टवतोऽन्तरङ्गं निस्सङ्गं भूत्वा, पुनर्जन्मनि तस्याः दर्शनं लभ्यते इति हेतोः तत्र जुगुप्सा न जायते इति तात्पर्यम् ॥९॥

**काञ्ची रमण्याः कुरुतां गृहस्थे　क्वाणैर्मुदं कामपि किङ्किणीनाम् ॥**
**काञ्ची भुवः पुण्यपुरी यतीन्द्र　त्वामम्बिकानामरवैर्धिनोतु ॥१०॥**

काञ्चीति— गृहस्थे जने रमण्याः स्वप्रेयस्याः काञ्ची मेखला 'स्त्रीकटयां मेखला काञ्ची सप्तकी रशना तथा। क्लीबे सारसनं च' इत्यमरः। किङ्किणीनां क्षुद्रघण्टिकानां क्वाणैः नादैः कामपि मुदं प्रीतिं कुरुताम्। भोः यतीन्द्र, भुवः भूलोकस्य काञ्ची एतदाख्या मेखलास्थानीया वा पुण्यपुरी अम्बिकानामरवैः कामाक्षीति ख्याता क्षेत्राधिराज्ञी तस्याः अम्बिकायाः नामरवैः कामाक्षीनामध्वनिभिः त्वां धिनोतु प्रीणयतु। काञ्चीक्षेत्रं दक्षिणे, तदध्यक्षा कामाक्षी। पञ्चभूतक्षेत्रेषु पृथिवीक्षेत्रमिदं प्राहुः ॥१०॥

एवं दक्षिणदेशस्थलानि अभिष्टुत्य आन्ध्रदेशस्थलं कालहस्तिक्षेत्रं गायति ॥

**श्रीकालहस्तिस्थलदर्शनस्य कैलासवीक्षां पुनरुक्तिमाहुः ॥**
**ज्ञानं प्रदातुं चरणाश्रितेभ्यो ज्ञानाम्बिका यत्र निबद्धवीक्षा ॥११॥**

श्रीति— श्रीकालहस्तिस्थलदर्शनेन कैलासवीक्षां कैलासदर्शनं पुनरुक्तिमाहुः। क्षेत्रमाहात्म्यविद इत्यर्थः। कैलासनिर्विशेषं कालहस्तिक्षेत्रमिति यावत्। यत्र चरणाश्रितेभ्यः निजं चरणं शरणं गतेभ्यः पुण्यपुरुषेभ्यः ज्ञानं प्रदातुं ज्ञानाम्बिका एतन्नाम्ना विश्रुता क्षेत्रमूर्तिरम्बिका निबद्धदीक्षा धृतव्रता विजयते इति शेषः। इदं च वायुक्षेत्रं विश्रुतम् ॥११॥

**श्रीशैलशृङ्गस्य विलोकनेन सङ्गेन हीनो भविता मनुष्यः ॥**
**धामास्ति यत्र भ्रमरालकायाः शान्तभ्रमं तद् भ्रमराम्बिकायाः ॥१२॥**

श्रीशैलेति— श्रीशैलशृङ्गस्य 'दत्तमण्डला'ख्ये आन्ध्रदेशभागहरे श्रीशैलक्षेत्रं सुप्रसिद्धम्। तस्य शिखरस्य विलोकनेन दर्शनेन मनुष्यः सङ्गेन हीनो निस्सङ्गो भविता भवेदित्यर्थः, यत्र क्षेत्रे शान्तभ्रमं शान्तो विरतो भ्रमः यस्मिन् तत् भ्रान्तिविवर्जितम् इत्यर्थः, भ्रमरालकायाः भ्रमरा इव अलका यस्यास्तस्याः भ्रमराम्बिकायाः तत् प्रसिद्धम् धाम स्थानम् अस्ति। श्रीशैलेशकान्ता देवी भ्रमराम्बिका क्षेत्रदेवता ॥१२॥

पश्चिमाब्धितीरे उत्तरकेरलभागस्थे गोकर्णक्षेत्रे विराजमानाया भद्रकर्णीति विख्यातायाः देव्याः महिमानमाह ॥

**तीरे विपश्चिद्वर पश्चिमाब्धे- र्गोकर्णगां लोकय भद्रकर्णीम् ॥**
**बुद्धिं शिवां सर्वमनोरथानां सिद्धिं च यद्यस्ति मनोऽधिगन्तुम् ॥१३॥**

तीर इति— विपश्चिद्वर पण्डितश्रेष्ठ, शिवां कल्याणीं बुद्धिं सर्वमनोरथानां सर्वेषां मनोरथानां कामानां सिद्धिं च अधिगन्तुं प्राप्तु ते तव मनो मानसम् अस्ति यदि, पश्चिमाब्धेः पश्चिमसमुद्रस्य तीरे वेलायां गोकर्णगां गोकर्णक्षेत्रे कृताधिष्ठानामित्यर्थः, भद्रकर्णीम् एतदाख्यया प्रथितां कालीं लोकय पश्य ॥१३॥

अथ महाराष्ट्रदेशगं करवीरक्षेत्रं प्रशंसति ॥

**धाम्नि प्रसिद्धे करवीरनाम्नि पुण्याभिधानां कृतसन्निधानाम् ॥**
**देवीं परां पश्यति यो विरक्तो मुक्तेः स पाणिग्रहणाय शक्तः ॥१४॥**

धाम्नीति— करवीरनाम्नि करवीरः नाम यस्य तस्मिन् प्रसिद्धे धाम्नि स्थाने क्षेत्रे इति यावत्, कृतसन्निधानां सान्निध्यं कृतवतीं प्रसन्नामिति यावत्, पुण्याभिधानां पुण्यं पावनम् अभिधानं नाम यस्यास्तां, यद्वा पुण्या इति अभिधानं यस्यास्तां परां देवीं यो विरक्तो वैराग्यवान् जनः पश्यति, स मुक्तेः स्त्रीलिङ्गस्वारस्यात् मुक्तिनाम्न्याः स्त्रियाः पाणिग्रहणाय परिणयाय शक्तः क्षमः मुक्तिकान्तारतये प्रभुरिति भावः ॥१४॥

**ज्ञाने दृढा ते यदि काऽपि काङ्क्षा नानेहसं मित्र मुधा क्षिपेमम् ॥**
**सेवस्व देवीं तुलजापुरस्थां नैव स्वरूपादितरा किलेयम् ॥१५॥**

ज्ञान इति— मित्र सखे ! ते तव ज्ञाने दृढा काङ्क्षा वाञ्छा भवति यदि, इमं गच्छन्तम् अनेहसं कालं मुधा वृथा न क्षिप, कालं व्यर्थं मा कृथाः। तुलजापुरस्थां देवीं सेवस्व। इयं स्वरूपात् आत्मस्वरूपात् इतरा न, किल ऐतिह्ये। सर्वस्याप्यात्मनः अनन्यभावेन राजमानां तुलजापुरस्थां देवीं भजेत्यर्थः ॥१५॥

अथ द्वे उत्कलदेशस्थले स्तूयेते ॥

**गोपालिनीवेषभृतं भजस्व लीलासखीं तां भुवनेश्वरस्य ॥**
**इष्टं हृदिस्थं तव हस्तगं स्यात् कष्टं च संसारभवं न भूयः ॥१६॥**

गोपालिनीति— गोपालिनीवेषभृतं गाः पालयतीति गोपालिनी तस्याः वेषं बाह्यरूपं बिभर्तीति गोपालिनीवेषभृत् तां वल्लवीवेषामित्यर्थः, भुवनेश्वरस्य उत्कलेषु प्रसिद्धस्य स्वनामक्षेत्रेश्वरस्य लीलासखीं विलासिनीं देवीं भजस्व सेवस्व। भजसि चेत्, हृदिस्थं हृद्गतम् इष्टं तवाभीष्टं हस्तगं फलितम् स्यात् भवेत्; संसारभवं संसारात् जन्म-मृतिरूपात् भ्रमात् भवः उद्भवो यस्य तत् कष्टं दुःखं च भूयः पुनः न भवेदिति शेषः ॥१६॥

**आराध्यते वैतरणीतटस्था येनेयमम्बा विरजोऽभिधाना ॥**
**आराधितं तेन समस्तमन्यत् सारो धरायामयमार्यगीतः ॥१७॥**

आराध्यते इति— वैतरणीतटस्था वैतरणीनदीतीरकृतावासा विरजाः अभिधानं नाम यस्याः सा इयं विरजोदेवी येन आराध्यते तेन अन्यत् समस्तम् आराधितं भवेदिति शेषः। तस्याः सर्वात्मकत्वात्, सर्वस्मिन् तस्यां निहिते तस्याम् आराधितायां सर्वम् आराधितं भवति। अयम् आर्यगीतः पूज्यैः विद्भिः गीतः धरायां भुवि सारः। अन्यत् सर्वं निस्सारं, विरजोदेवीभजनमेव भुवि सर्वसारं गायन्ति विज्ञा इति भावः ॥१७॥

अथ वङ्गदेशस्थलमाह ॥

**सङ्गीयमानं स्थलमार्यबृन्दै- र्बृन्दारकाणां सरितस्तटेऽस्ति ॥**
**यः कालिकां पश्यति कालकेशीं तत्रास्य कालादपि नैव भीतिः ॥१८॥**

सङ्गीयमानमिति— आर्यबृन्दैः अभियुक्तसङ्घैः सङ्गीयमानं सङ्कीर्त्यमानं स्थलं क्षेत्रं बृन्दारकाणां देवानां सरितो नद्याः तटे तीरे गङ्गातीरे इत्यर्थः, अस्ति वर्तते। तत्र स्थले कालकेशीं कालाः केशाः यस्याः तां कालिकां यः पश्यति वीक्षते अस्य तस्य कालीदर्शनभाग्यवतो जनस्य कालादपि मृत्योरपि, नैव भीतिः भवतीति शेषः, मृत्योरपि भीः नास्ति चेत् अन्यस्मात् का भीः ? दर्शनवानकुतोभयो भवति ॥१८॥

अथ कामरूपदेशस्थं कामरूपक्षेत्रं कीर्तयति ॥

**नीलाचलं सिद्धसमूहसेव्यं लीलानिकेतं प्रवदन्ति यस्याः ॥**
**भद्रा परा काचन गुह्यमुद्रा कामेश्वरी सा भुवनस्य मूलम् ॥१९॥**

नीलाचलमिति– सिद्धसमूहसेव्यं सिद्धजनसमुपास्यं नीलाचलम् एतन्नामकं क्षेत्रं यस्याः देव्याः लीलानिकेतं लीलावासं प्रवदन्ति बुधा इति शेषः। काचन गुह्यमुद्रा योनिमुद्रा रहस्यरूपा सा परा भद्रा शिवा कामेश्वरी भुवनस्य जगतो मूलं भवतीति शेषः। देव्येव सर्वस्य जगतः जनिस्थानमिति लक्षयितुं गुह्यमुद्रेति तान्त्रिकैः कथ्यते ॥१९॥

अथ मगधदेशस्थलकीर्तनं भवति ॥

**माङ्गल्यगौरीपददर्शनस्य कर्ता तु भूत्वा सुकृतस्य भर्ता ॥**
**आचारपूतैरधिगम्यमग्र्यं स्थानं प्रपद्येत यतो न पातः ॥२०।**

माङ्गल्येति– माङ्गल्यगौरीपददर्शनस्य माङ्गल्यमय्याः गौर्याः पादयोः दर्शनस्य कर्ता तु गौरीपददर्शनं कृतवांश्चेदित्यर्थः। स दर्शनकृत् सुकृतस्य पुण्यस्य भर्ता धारकः पोषकश्च भूत्वा आचारपूतैः सदाचारपवित्रैः पुरुषैः अधिगम्यं लभ्यम् अग्र्यं श्रेष्ठं स्थानं परमं पदं प्रपद्येत गच्छेत्, यतो यस्मात् स्थानान्न पातो भवति, अच्युतं पदं भजते इति भावः ॥२०॥

अथोत्तरदेशस्थले द्वे आह ॥

**वाराणसी शुभ्रगिरेरनूनं क्षेत्रं पवित्रं भुवनत्रयेऽपि ॥**
**अर्थे प्रजानां विधृतान्नपात्रा गौरी स्वयं यत्र विशालनेत्रा ॥२१॥**

वाराणसीति— वाराणसी काशी भुवनत्रयेऽपि त्रैलोक्येऽपि पवित्रं पावनं शुभ्रगिरेः कैलासस्य अनूनं तत्सममित्यर्थः, क्षेत्रं भवति, यत्र क्षेत्रे गौरी विशाल-

नेत्रा विशालाक्षी प्रजानामर्थे प्रजापोषणाय स्वयं विधृतान्नपात्रा विधृतम् अन्न-पूर्णं पात्रं यया सा अन्नपूर्णा सती विराजते ॥२१॥

**बृन्दारकाराधितपादपद्मां नन्दामिमामिन्दुसमानवक्त्राम् ॥**
**आलोक्य विन्ध्याचलवासिनीं ना नालोचयेत्संसृतितो भयानि ॥२२॥**

बृन्दारकेति— बृन्दारकाराधितपादपद्मां सुरजनार्चितचरणारविन्दाम् इन्दु-समानवक्त्रां चन्द्रसुन्दरमुखीं विन्ध्याचलवासिनीम् इमां नन्दां भगवतीम् आलोक्य ना नरः मनुजः संसृतितः संसारात् भयानि न आलोचयेत् न पश्येत् विन्ध्यगिरिकृतनिवासां नन्देति विश्रुतां मूर्तिं प्राप्य तद्दर्शनात् संसृतिभीति-विमुक्तो भवति नर इति भावः ॥२२॥

अथ मालवदेशीय-अवन्तीपुरीश्वरीं स्तौति ॥

**आनन्ददेहामिह मुक्तिसंज्ञां नारीं परीरब्धुमना मनुष्यः ॥**
**दूतीं वृणोतु प्रमथेश्वरस्य कान्तामवन्तीपुरनायिकां ताम् ॥२३॥**

आनन्द इति— आनन्द एव देहो यस्याः तां मुक्तिसंज्ञां मुक्तिः इति संज्ञा सङ्केतो नामेति यावत् यस्याः तां नारीं स्त्रियम् इह भुवि परीरब्धुमनाः परीरब्धुम् आलिङ्गितुम् मनः यस्य स मनुष्यः प्रमथेश्वरस्य भूतपतेः शिवस्य कान्तां रमणीम् अवन्तीपुरनायिकाम् अवन्तीपुराधिष्ठात्रीं देवीं दूतीं विधेय-विशेषणं, वृणोतु। मुक्तिस्त्रियां रन्तुकामेन पुसा तां सङ्गमयितुं भगवती दूती दौत्यकर्मरता भवतीति तात्पर्यम्। मुक्तिकामं प्रति मोक्षस्य सम्पाद-यित्रीति भावः ॥२३॥

अथ कैलासस्तुतिः ॥

**यत्राचलच्छिद्रकृता सहाहं भ्रात्रा मुहुः खेलितवान्वनेषु ॥**
**तं सिद्धदेवर्षिनुतं स्मरामि कैलासमावासगिरिं जनन्याः ॥२४॥**

यत्रेति— यत्र कैलासे वनेषु अचलच्छिद्रकृता गिरिरन्ध्रकृता सुब्रह्मण्येन कनीयसा भ्रात्रा सह अहं गणपतिः मुहुः अभीक्ष्णं खेलितवान् क्रीडितवान्

अस्मि, तं सिद्धदेवर्षिनुतं सिद्धपुरुषैः देवैः ऋषिभिश्च स्तुतं, जनन्याः पार्वत्याः आवासगृहं कैलासं गिरिं स्मरामि ध्यायामि ॥२४॥

स्तबकोपसंहारस्तुतिः ॥

**पूर्णाऽम्बरे शीतकरेऽधिकारं बिभ्रत्यगेन्द्रे धवले सलीला ॥**<br>
**क्षेत्रेषु काश्यादिषु गुप्तशक्ति- र्गौरीन्द्रवज्रासु च सन्निधत्ताम् ॥२५॥**

पूर्णाऽम्बर इति– अम्बरे आकाशे पूर्णा, धवले सिते अगेन्द्रे हिमाचले सलीला सक्रीडा, शीतकरे चन्द्रे अधिकारं बिभ्रती, चन्द्रे स्वामाज्ञां लीलया प्रयुञ्जाना, ततोऽप्यधिकशोभा देवी गौरी, काश्यादिषु क्षेत्रेषु गुप्तशक्तिः गुप्ता गूढा शक्तिर्यस्याः सा, इन्द्रवज्रासु च इन्द्रवज्रावृत्तनिबद्धास्विमासु स्तुतिषु, चकारात् काश्यादिषु क्षेत्रेषु सन्निधत्ते इति सत्यम्, इमासु स्तुतिष्वपि सान्निध्यं करोतु। अनेन वीर्यवत्यो दृष्टफलकाश्च भवन्त्वित्युक्तम् ॥२५॥

पञ्चविंशः स्तबकः सव्याख्यः समाप्तः ॥

# षड्विंशः स्तबकः

अथास्मिन् षड्विंशे स्तबके अरुणाचलक्षेत्रे प्रसन्नाम् अपीतकुचाम्बिकां स्तौति ॥

**आगमविन्मतिकैरविणीनां बोधमजस्रमसौ विदधानः ॥**
**पातु महेशवधूवदनांशो हासशशी सकलानि कुलानि ॥१॥**

आगमेति– आगमविन्मतिकैरविणीनाम् आगमविदां वेदादिप्रमाणभूतशास्त्रज्ञानां मतयः एव कैरविण्यः कुमुदिन्यः तासाम् अजस्रं नित्यं बोधं ज्ञानं, पक्षे विकासं विदधानः कुर्वाणः महेशवधूवदनांशः महेश्वरीमुखमण्डलकलेत्यर्थः, हासशशी हास एव शशी चन्द्रः सकलानि कुलानि पातु रक्षतु। अत्र हास एव शशी इति मयूरव्यंसकादिसमासाश्रयणात् परिणामालङ्कारः। नेह आरोप्यमाणस्य शशिनः आरोपविषयहासात्मना परिणतिं विना सकलकुलरक्षणोपयोगित्वं सम्भवति। न च हासः शशीव इति उपमितसमासाश्रयणात् पूर्वपदप्राधान्यमस्तीति शङ्क्यम्। सामान्यधर्माप्रयोग एव उपमितसमासः आश्रयणीयः, 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति उपमितसमासानुशासनात्। इह तु बोधं विदधान इति बोधविधानसामान्यप्रयोगाच्च। उत्तरपदस्य विषयिणः शशिनः प्रकृतविषयहासात्मना परिणामो दुर्वारः ॥१॥

**आयतलोचनचुम्बितकर्णा दानयशोजिततोयदकर्णा ॥**
**शोणनगेशमनःप्रियवर्णा नाशयताज्जगदार्तिमपर्णा ॥२॥**

आयतेति– आयतलोचनचुम्बितकर्णा आयताभ्यां दीर्घाभ्यां लोचनाभ्यां चुम्बितौ कर्णौ श्रोत्रे यस्याः सा, कर्णान्तविश्रान्तनेत्रेत्यर्थः। दानयशोजिततोयदकर्णा दानेन यशः तेन जितः तोयदः मेघो वर्षकः इव कर्णः कौन्तेयः यस्याः सा अभीष्टदानदाक्ष्याज्जातया कीर्त्या तोयवर्षकं मेघमिव याचितदानदक्षं कौन्तेयं जितवतीत्यर्थः, कौन्तेययशोऽतिशायिनी दानकीर्तिः देव्याः इति यावत्। शोणनगेशमनःप्रियवर्णा शोणनगेशस्य अरुणाचलेश्वरस्य मनःप्रियः

हृदयङ्गमः वर्णो रञ्जको रागः यस्याः सा, अरुणाचलेश्वरहृदयरञ्जनीत्यर्थः, अपर्णा दुर्गा जगदार्तिं लोकस्य पीडां नाशयतात् ध्वंसयतु ॥२॥

**वेदतुरङ्गविलोचनभाग्यं　　वेदशिरोनिचयैरपि मृग्यम् ॥**
**शोकविदारिसुधाकिरणास्यं　　शोणगिरौ समलोकि रहस्यम् ॥३॥**

वेदेति— वेदतुरङ्गविलोचनभाग्यं वेदास्तुरङ्गा वाहा यस्य तस्य शिवस्य विलोचनानां भाग्यं पुण्यफलं, त्रिपुरसमरे हरस्य वेदाः वाहाः अभूवन्निति पुराणम्। वेदशिरोनिचयैः वेदशिरसां वेदान्तानां निचयैः समूहैरपि मृग्यम् अन्वेष्यम्, शोकविदारिसुधाकिरणास्यं शोकं विदारयितुं शीलमस्येति शोकविदारि दुःखध्वंसं तत् सुधाकिरणः चन्द्र इव आस्यम् आननं यस्य तत्, रहस्यं गूढं तत्त्वं शोणगिरौ अरुणाचले समलोकि समदर्शि मया दृष्टमित्यर्थः ॥३॥

**मुञ्च समस्तमनोरथलाभे　　संशयमद्य करामलकाभे ॥**
**दृक्पथमाप नगेन्द्रतनूजा　　सोऽहमितः परमन्तरराजा ॥४॥**

मुञ्चेति— करामलकाभे करे हस्ते आमलकं फलं तस्य आभा इव आभा यस्य तस्मिन् समस्तमनोरथलाभे सर्वकामसिद्धौ विषये अद्य संशयं मुञ्च सन्देहं मा कृथाः इति मनः प्रति सम्बोधनम्। करगतामलकमित्यत्र लोकवादानुकरणेन अयत्नसिद्धम् अभीप्सितं बोध्यम्। 'सहस्व कतिचिन्मासान् मीलयित्वा विलोचने' इत्यादाविव लोकोक्तिं नामालङ्कारमाहुः। असन्दिग्धमनोरथलाभविषये हेतुमाह। नगेन्द्रतनूजा पर्वतराजपुत्री पार्वती दृक्पथं दृष्टिमार्गम् आप प्राप्ता इत्यर्थः। दुष्करः सर्वमनोरथलाभः। स समर्थनसापेक्षः। नगेन्द्रतनूजादर्शनलाभेन स समर्थितः। तस्मात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। सोऽहं तथा प्राप्तदेवीदर्शनोऽहम् इतः परम् अन्तरराजा अन्तरे अन्तरङ्गे हृदये राजा ईशः यस्य सः, यद्वा अन्तरं हृदयं राजा यस्य सः अस्मीति अध्याहार्यम्। नाहमितः परम् अन्याधीनो बाह्यवशङ्गतो भवामि। तत्र दर्शनभाग्यमेव हेतुरिति भावः ॥४॥

**शिल्पविदः प्रतिमां प्रविशन्ती　　स्वल्पविदां तरणाय चकास्ति ॥**
**शोणधराभृति सम्प्रति लब्धा　　हन्त चिरादियमेव ममाम्बा ॥५॥**

शिल्पविद इति— शिल्पविदः शिल्पं वेत्तीति शिल्पवित् तस्य विग्रहादि-

निर्माणकलावेदिनः प्रतिमां तन्निष्पादितां मूर्तिं प्रविशन्ती स्वकलया शिल्पिकृतविग्रहविशेषम् आविशन्तीत्यर्थः, स्वल्पविदां वेदवेदान्तादिपाठैरसंस्कृतधियां मन्दज्ञानिनामपि तरणाय जन्मतरणाय चकास्ति ज्वलति देवीत्यध्याहार्यम्, शोणधराभृति अरुणाचले सम्प्रति अधुना लब्धा मयेति शेषः। हन्त आश्चर्ये, चिरात् बह्वोः कालादियमेव मम अम्बा। एतावन्तं कालमिमामविदित्वा जीवितमयापयम्। अधुनैव ज्ञात्वा इमां प्राप्तवानस्मि ॥५॥

**भारतभूवलयेऽत्र विशाले सन्त्वनघानि बहूनि गृहाणि ॥**
**आस्यविगीतसुधाकरबिम्बा शोणगिरौ रमतेऽत्र मदम्बा ॥६॥**

भारतेति— अत्र अस्मिन् विशाले विस्तीर्णे भारतभूवलये भारतभूमिमण्डले अनघानि शुभानि बहूनि गृहाणि देवीनिवासाय सन्तु भवन्तु। एवं सत्स्वपि, अत्र शोणगिरौ अरुणाचले आस्यविगीतसुधाकरबिम्बा आस्येन मुखेन विगीतं निन्दितं सुधाकरस्य चन्द्रस्य बिम्बं यस्याः सा, चन्द्रबिम्बशोभातिशायि विकसितं प्रसन्नं वदनं देव्याः इत्यर्थः। मदम्बा रमते रता भवति। यद्यपि पावनानि रमणीयानि भरतखण्डे निवासस्थानानि भगवत्याः सन्ति, तथाऽपि अत्रैव अरुणाचले सोल्लासविशेषं सुप्रसन्नरतेति भावः ॥६॥

**वारितसंश्रितपातकजाला वारिधिवीचिनिरङ्कुशलीला ॥**
**वारिजपत्रविडम्बननेत्रा वारणराजमुखेन सपुत्रा ॥७॥**

वारितेति— वारितसंश्रितपातकजाला वारितं निवारितं संश्रितानाम् आश्रितजनानां पातकजालं पापजालं यया सा। वारिधिवीचिनिरङ्कुशलीला वारिधेः सागरस्य वीचय ऊर्मय इव निरङ्कुशा अप्रतिहता लीला सततविलासो यस्याः सा, विश्रृङ्खलनवनवोन्मेषविलासशालिनीत्यर्थः। वारिजपत्रविडम्बननेत्रा वारिजपत्रे कमलदले विडम्बयत उपहसत इति वारिजपत्रविडम्बने ते नेत्रे यस्याः सा, कमलशोभातिशायिनी नेत्रे अस्याः। वारणराजमुखेन गजमुखेन गणपतिना सपुत्रा पुत्रवतीत्यर्थः ॥७॥

**आयतवक्रघनासितकेशी तोयजबाणरिपोर्हृदयेशी ॥**
**काशसुमाच्छयशाः परमैषा पाशभिदस्तु तवेन्दुविभूषा ॥८॥**

आयतेति— आयतवक्रघनासितकेशी आयताः दीर्घाः वक्राः कुटिलाः घनाः

सान्द्राः असिताः कृष्णाश्च केशाः कचाः यस्याः सा। तोयजबाणरिपोः कमलपुष्पबाणशत्रोः कामारेः रुद्रस्य हृदयेशी प्राणेश्वरी, काशसुमाच्छयशाः काशसुममिव काशपुष्पमिव अच्छं शुभ्रं यशः यस्याः सा। परमा श्रेष्ठा। इन्दुविभूषा चन्द्रचूडा एषा अम्बा तव पाशभिद् पाशम् आविद्यकं जन्मादिबन्धं भिनत्ति छिनत्तीति पाशभित् अस्तु भवतु ॥८॥

**पङ्कजसम्भवपूजितपादा　पङ्कविनाशनपावननामा ॥**
**किङ्करकल्पलता परमेयं　शङ्करनेत्रसुधा शरणं नः ॥९॥**

पङ्कजेति— पङ्कजसम्भवपूजितपादा पङ्कजसम्भवेन पद्मयोनिना ब्रह्मणा पूजितौ पादौ यस्याः सा। पङ्कविनाशनपावननामा पङ्कं पाप्मानं विनाशयतीति पङ्कविनाशनं पावनं नाम यस्याः सा। किङ्करकल्पलता किङ्कराणां सेवकानां भक्तानां कल्पलता इष्टार्थदात्री स्वर्लता। परमा सर्वोत्तमा। शङ्करनेत्रसुधा शम्भुलोचनयोरमृतायमाना प्रीतिकरीत्यर्थः। इयम् अम्बा नः अस्माकं शरणं रक्षणं भवतीति शेषः ॥९॥

**चञ्चलदृग्विनतामरवल्ली　पञ्चपृषत्कशरासनझिल्ली ॥**
**काञ्चनगर्भमुखप्रणुतेयं　पञ्चमुखप्रमदा शरणं नः ॥१०॥**

चञ्चलेति— चञ्चलदृक् चञ्चले विलासविशेषाच्चले दृशौ यस्याः सा। विनतामरवल्ली विनतानां प्रणतजनानाम् अमरवल्ली कल्पलता ईप्सितार्थदायिनी। पञ्चपृषत्कशरासनझिल्ली पञ्चपृषत्कस्य मन्मथस्य शरासनं धनुः झिल्ल्यौ भ्रुवौ यस्याः सा, देव्याः भ्रुवौ कामस्य धनुरित्यर्थः। 'झिल्लिका भ्रूलतायां स्याद्' इति नामकल्पद्रुमः। 'वदनस्मरमाङ्गल्यगृहतोरणझिल्लिका' इत्यत्र ललितासहस्रनामभाष्ये झिल्ली भ्रूरिति व्याख्यातम्। काञ्चनगर्भमुखप्रणुता काञ्चनगर्भो हिरण्यगर्भो ब्रह्मा स मुखे अग्रे येषां ते काञ्चनगर्भमुखाः ब्रह्मादयः तैः प्रणुता संस्तुता इयं पञ्चमुखप्रमदा पञ्च मुखानि ईशानतत्पुरुष-अघोर-वामदेव-सद्योजाताख्यानि यस्य तस्य पञ्चमुखस्य परमेश्वरस्य प्रमदा योषा नः अस्माकं शरणं रक्षणं भवतीति शेषः ॥१०॥

**अम्ब विधूय भटान्मदनादीन्　नूपुरनादबिभीषिकयैषः ॥**
**हन्त जहार बलेन मनो मे　शोणनगाङ्घ्रिनिवासिनि तेऽङ्घ्रिः ॥११॥**

अम्बेति— शोणनगाङ्घ्रिनिवासिनि अरुणाचलपादप्रदेशवासिनि अम्ब!

ते तव एषः अङ्घ्रिः पादः नूपुरनादविभीषिकया पादकटकध्वनिना भर्त्सनेन मदनादीन् कामादीन् भटान् विधूय अपसार्य स्वयमेव मे मनः बलेन जहार मन्मानसं प्राप्य आचकर्षेति भावः। कामादिभटैः रक्षितं मे मनः तव पादागतेरवकाशं न प्रादात्। तथाविधं मानसम् अपहृतवत्यसि, हन्त आश्चर्यम् तावांस्तव पादमहिमा ॥११॥

**कर्णपुटे कुरु मुग्ध ममोक्तिं मुञ्च धनादिषु मानस सक्तिम् ॥**
**शोणगिरीन्द्रवधूपदभक्तिं शीलय शीलय यास्यसि मुक्तिम् ॥१२॥**

कर्णपुट इति– मुग्ध मूढ मानस! मम उक्तिं व्याहृतिं कर्णपुटे कुरु शृणु, धनादिषु आदिशब्देन कान्तादिविषयभोगेषु सक्तिम् आसक्तिं मुञ्च सङ्गं परित्यजेत्यर्थः। शोणगिरीन्द्रवधूपदभक्तिं अरुणाचलेश्वरप्राणनायिकाचरणभक्तिं शीलय शीलय वीप्सायां द्विरुक्तिः, अभ्यासादाचर, मुक्तिं यास्यसि, मोक्षं लप्स्यसे इत्यर्थः ॥१२॥

**जीर्णतरे जरयाऽखिलदेहे बुद्धिबलं च विलुम्पति मोहे।**
**हन्त सवित्रि तपन्मतिरन्ते सेवितुमिच्छति ना चरणं ते ॥१३॥**

जीर्णतर इति– अखिलदेहे सर्वस्मिन् शरीरे जरया वयोवृद्धया जीर्णतरे अतिशयेन जीर्णे क्षयं गते सति, मोहे ज्ञानलोपे बुद्धिबलं विलुम्पति ह्रासयति सति, सवित्रि जननि! तपन्मतिः तपन्ती मतिः बुद्धिः यस्य सः तापार्तबुद्धिरित्यर्थः, ना नरः अन्ते देहावसानसमये ते चरणं सेवितुम् इच्छति, हन्त खेदे, इदं कष्टम्। शरीरेन्द्रियादिपाटवे सति त्वच्चरणसेवारतिः न जायते प्रायशो नरस्येति शोचनीयमिदम् ॥१३॥

**तन्त्रविदो नवयोनि तु चक्रं शोणधराधररूपमुशन्ति ॥**
**अर्धममुष्य वपुर्मदनारे- रर्धमगेन्द्रसुते तव गात्रम् ॥१४॥**

तन्त्रेति– तन्त्रविदः शाक्तागमविज्ञाः नवयोनि नव योनयः यस्य तत् चक्रं तु श्रीचक्रम् एव शोणधराधररूपम् अरुणगिरिरूपम् उशन्ति कामयन्ते, कान्त्यर्थाद्वष्टेः सम्प्रसारणम्, वदन्तीति यावत्। अमुष्य श्रीचक्ररूपस्य गिरेः

अर्धं मदनारेः शिवस्य वपुः शरीरं, अगेन्द्रसुते पार्वति देवि ! तव गात्रम् अर्धम्। यत् तन्त्रशास्त्रेषु प्रसिद्धं श्रीचक्रं श्रीपुरम् इति विश्रुतं तदेव अरुणगिरिरूपेण राजते इत्याहुः, तत्रापि शिवयोः युवयोः शरीरं विभक्तं पत्युरर्धं तवार्धमिति वक्तव्यम्। न सर्वोऽपि गिरिः शिववपुः, न वा सर्वमपि श्रीचक्रं त्वद्वपुः। तथा चाहुः— 'चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः। नवयोन्यात्मकं चक्रं श्रीचक्रं शिवयोर्वपुः'॥ इति। तस्मादरुणाचलः सर्वोऽपि शिवशरीरमिति न तथ्यं, तत्र तव शरीरभागोऽप्यस्तीति भावः ॥१४॥

**अस्तु नगेश्वरनन्दिनि लिङ्गं तैजसमेतदिहापि तवांशः ॥**
**वीतगुणस्य विना तव योगं देवि शिवस्य कुतः खलु तेजः ॥१५॥**

अस्त्विति— नगेश्वरनन्दिनि पार्वति ! एतत् अरुणाचलाख्यं तैजसं तेजोमयं लिङ्गम् अस्तु भवतु। दक्षिणदेशे पञ्चभूतक्षेत्रेषु काञ्च्यादिषु अरुणाचलस्य तैजसक्षेत्रत्वं पुराणप्रसिद्धम्। इहापि तैजसे लिङ्गेऽपि, न केवलं गिरौ तव अंशो भागो भवतीत्यध्याहार्यम्। देवि, अम्ब ! वीतगुणस्य निर्गुणस्य परब्रह्मस्वरूपस्य शिवस्य तव योगं विना सम्बन्धं विना कुतः खलु तेजः ? तेजो नैव स्यादित्यर्थः। निर्गुणस्य परस्य पुरुषस्य शक्तियोगेनैव सगुणत्वं भवति। तेजश्च गुणः, तैजसं लिङ्गं च गुणि भवति। गुणेन तेजसा विना गुणिनो लिङ्गस्य तैजसत्वमेव न सिद्ध्येत्। भेषजे, अनभिव्यक्तगुणस्य द्रव्यविशेषस्य भैषज्ययोगेन तेजो वीर्यं भवति। श्लिष्टैः गुणयोग-तेजश्शब्दैरुपमाध्वनिः। समर्थनीयस्य तैजसलिङ्गार्धदेवीशरीरस्य उत्तरार्धवाक्यार्थेन समर्थनात् काव्यलिङ्गम् अलङ्कारः ॥१५॥

**स्थापितमूर्तिरियं तव नम्या पूजयितुं जगदीश्वरि रम्या ॥**
**शोणनगार्धमिदं तव रूपं कीर्तयितुं नगजे धुतपापम् ॥१६॥**

स्थापितेति— जगदीश्वरि अम्ब ! नम्या नन्तुं योग्या तव स्थापितमूर्तिः शिल्पिकृतप्रतिमा पूजयितुं रम्या भवति। नगजे पार्वति ! धुतपापम् अपहतपापम् शोणनगार्धम् अरुणाचलार्धम् इदं तव रूपं कीर्तयितुं रम्येति पूर्वेणान्वयः। करचरणाद्यवयवसम्पन्ना शिल्पिकृता ते मूर्तिः कायिकपूजनविषया

रमणीया भवति। पर्वतार्धं ते गात्रं तु वाचिकपूजनविषयं रमणीयम्। मानसं तु उभयत्र गम्यम् ॥१६॥

**शोणनगार्धतनोऽनिशमङ्के धारयसेऽयि गुहं रमणाख्यम् ॥**
**आगतमप्ययि हा मुहुरम्बो- च्चाटयसे गणपं ननु कस्मात् ॥१७॥**

शोणेति– अयि शोणनगार्धतनो अरुणाचलार्धाङ्गि ! अनिशमश्रान्तम् अङ्के उत्सङ्गे रमणाख्यं श्रीमहर्षिं गुहं स्कन्दावतारं धारयसे। अयि अम्ब ! मुहुः पुनः पुनः आगतमपि गणपं गणपतिं कस्मात् हेतोः उच्चाटयसे ननु दूरीकरोष्येव? कनीयांसं पुत्रम् अङ्के निधाय लालयसि, ज्यायांसं दूरीकुरुषे, कुत एतत्? अरुणाचलस्य कटकम् अधिशेते भगवान्महर्षिः, अधुनाऽपि तत्पादं न त्यक्तवान्। गणपतिस्तु मुहुर्मुहुः नाविच्छेदेन तत्र वासमकरोदिति गम्यते ॥१७॥

**अङ्कजुषे रमणाय नु दातुं मानववेषधराय गुहाय ॥**
**शोणनगार्धतनो बहु दुग्धं मातरपीतकुचेह विभासि ॥१८॥**

अङ्केति– शोणनगार्धतनो अरुणगिरीश्वरार्धाङ्गि, मातः ! मानववेषधराय मानुषरूपधृते रमणाय अङ्कजुषे अङ्कं जुषते सेवते इति अङ्कजुट् तस्मै उत्सङ्गभाजे गुहाय देवाय तव पुत्राय बहु दुग्धं स्तन्यं दातुम् अपीतकुचा न पीतौ अपीतौ कुचौ यस्याः सा सती इह क्षेत्रे विभासि नु राजसि किम्? नु वितर्के। क्षेत्रे अपीतकुचेति देवीनाम ॥१८॥

**पूर्णसमाधिवशात् स्वपिषि त्वं पीतमपीतकुचेऽम्ब न वेत्सि ॥**
**अङ्कजुषा रमणेन सुतेन प्रेक्ष्य यथेष्टमुरोरुहदुग्धम् ॥१९॥**

पूर्णेति– अपीतकुचे अम्ब ! पूर्णसमाधिवशात् सम्पूर्णसमाधितः विस्मृतसकलबाह्यप्रपञ्चेव त्वं स्वपिषि सुप्ताऽसि। अत एव अङ्कजुषा उत्सङ्गभाजा रमणेन महर्षिणा तव सुतेन उरोरुहदुग्धं वक्षोजक्षीरं स्तन्यं यथेष्टम् इष्टमनतिक्रम्य स्थितम् अमितम् प्रेक्ष्य दृष्ट्वा पीतम् न वेत्सि न जानीषे ॥१९॥

**ज्ञानरसाह्वयमम्ब निपीय   स्तन्यमसौ रमणो मुनिराट् ते ॥**
**ज्ञानमयोऽभवदीश्वरि सर्वः   पुष्यति येन तनुं हि तदात्मा ॥२०॥**

ज्ञानेति– अम्ब, ईश्वरि ! असौ रमणो मुनिराट् मुनीन्द्रः ते ज्ञानरसाह्वयं ज्ञानमेव रसः अमृतं स आह्वयो नाम यस्य तत् ते तव स्तन्यं निपीय नितरां पीत्वा, ज्ञानमयः सन् स्वार्थे मयट्, सर्वोऽभवत्। सर्वस्यापि आत्मनोऽनन्यत्वात्। येन हेतुना तदात्मा स ज्ञानरसः आत्मा स्वरूपं यस्य सः तनुं देहं पुष्यति पुष्णाति हि, पुष्टां करोतीत्यर्थः ॥२०॥

**प्रीतिपदाय पयोधरकुम्भात्   पार्वति धीमयदुग्धमपीतात् ॥**
**अस्तु गुहाय शिवे बहु दत्तं   किञ्चिदिवेश्वरि धारय मह्यम् ॥२१॥**

प्रीतीति– पार्वति ! अपीतात् पयोधरकुम्भात् स्तनकुम्भात् धीमयदुग्धम् धीमयं बुद्धिमयं दुग्धं ज्ञानरसमयमिति यावत्, प्रीतिपदाय प्रेमास्पदाय गुहाय स्कन्दाय बहु अमितं दत्तम् अस्तु, दीयतां नाम। ईश्वरि ! मह्यं किञ्चिदिव स्वल्पं वा धारय। गुहाय यथेष्टं देहि; मह्यं तु स्वल्पं वा दातुं प्रसीद। दातुमदातु वा त्वं प्रभ्वीति गमयितुम् ईश्वरीति सम्बोधनम्, न मातरिति ॥२१॥

**प्रौढमिमं यदि वेत्सि तनूजं   शैलसुते मदवारि दधानम् ॥**
**मास्तु पयो वितरानघमन्नं   येन दधानि महेश्वरि शक्तिम् ॥२२॥**

प्रौढमिति– शैलसुते पार्वति ! मदवारि दानजलं दधानं विभ्रतं गजमुखत्वात्, इमं तनूजं गणपतिं प्रौढं प्रवृद्धं वेत्सि यदि जानासि यदि, स्तन्यपानदशामतीत्य पुष्टो युवा प्रवृद्धो न स्तनन्धय इति मां मन्यसे चेदित्यर्थः, तर्हि पयः स्तन्यं मास्तु न दीयताम्। अनघं शुभ्रं सर्वश्रेयस्करम् अन्नं वितर देहि, महेश्वरि ! येन अन्नेन शक्तिं दधानि। शक्तिधारणसामर्थ्यप्रदम् अन्नं देहीति भावः ॥२२॥

**स्वार्जितमेव मया यदि भोज्यं   सम्मद एव ममाखिलमातः ॥**
**आशिषमग्र्यतमामयि दत्त्वा   प्रेषय यानि जयानि धरित्रीम् ॥२३॥**

स्वार्जितमिति– अखिलमातः विश्वजननि ! मया स्वार्जितम् आत्मना सम्पादितम् एव अन्नं भोज्यं यदि, प्राप्तवयस्कस्त्वम् अन्नार्थसम्पादनक्षमः स्वयमार्जय भुङ्क्ष्व चेति भणसि यदि, एवमपि मम सम्मद एव हर्ष एव, सानन्दं सम्मतं मम इत्यर्थः। अयि सर्वजननि ! अग्र्यतमां प्रशस्ततमाम् आशिषं दत्त्वा आशीरुक्ति प्रयुज्य मां प्रेषय, यानि अहं गच्छानि, धरित्री भूमिं जयानि। प्रास्थानिकमङ्गलाशंसीनि ते वचनानि सर्वत्र भुवि मम जयप्रदानि भवेयुरिति नात्र मम संशयः ॥२३॥

**विद्युति विद्युति वीक्ष्यविलासा वीक्षितकर्मणि लक्ष्यरहस्या ॥**
**पार्वणचन्द्रमुखी ललिताङ्गी तैजसलिङ्गसखी शरणं नः ॥२४॥**

विद्युतीति– विद्युति विद्युति तटिति तटिति प्रतिविद्युत् वीक्ष्यविलासा वीक्ष्यो दर्शनीयो विलासो यस्याः सा, एकैकस्यामपि क्षणप्रभायां देव्याः विलासो दृश्यः इत्यर्थः। वीक्षितकर्मणि दर्शनकर्मणि लक्ष्यरहस्या लक्षयितु सूक्ष्मतो द्रष्टुं योग्यं लक्ष्यं रहस्यं यस्याः सा। दर्शनविधाने तस्याः रहस्यमाकलनीयमिति भावः। तस्याः एव दृष्टिरूपत्वात् दर्शने तद्रहस्यं लक्षणीयमित्याशयः। पार्वणचन्द्रमुखी पर्वणोऽयं पार्वणश्चन्द्रः पूर्णचन्द्र इत्यर्थः, स इव मुखं यस्याः सा, ललिताङ्गी कोमलदेहा तैजसलिङ्गसखी तैजसलिङ्गरूपिणोऽरुणाचलेश्वरस्य प्रेयसी नः अस्माकं शरणं रक्षणं भवतीति शेषः ॥२४॥

**मातरपीतकुचेऽरुणशैला- धीश्वरभामिनि भामहनीये ॥**
**साधु विधाय समर्पयते ते दोधकमाल्यमिदं गणनाथः ॥२५॥**

मातरिति– अपीतकुचे अरुणशैलाधीश्वरभामिनि अरुणाचलेशजाये भामहनीये भया प्रभया महनीये पूजनीये मातः अम्ब ! इदं दोधकमाल्यं दोधकवृत्तग्रथितं मालायै हितं माल्यं पुष्पं साधु निर्दुष्टं गुणशोभितं विधाय ते तुभ्यं गणनाथः गणपतिः समर्पयते अङ्गीकुरुष्वेति प्रार्थना ॥२५॥

षड्विंशः स्तबकः सव्याख्यः समाप्तः ॥

## सप्तविंशः स्तबकः

अथ भगवतीं प्रचण्डचण्डीं कविरभीष्टां मूर्ति सप्तविंशे स्तबके स्तौति ॥

**विधुन्वन्ध्वान्तानि प्रतिदिशमधर्मं परिहरं-**
**च्छ्रियं व्यातन्वानस्सपदि शमयन् दुःखपटलम् ॥**
**सहस्राराम्भोजे द्रवमसदृशं मे प्रजनयन्**
**प्रचण्डायाश्चण्डयास्सितहसितलेशो विजयते ॥१॥**

विधुन्वन्निति– प्रचण्डायाः प्रकर्षेण चण्डायाः उग्रायाः पापेष्विति शेषः, चण्डयाः चण्डीदेव्याः सितहसितलेशः शुभ्रमन्दहासः विजयते अत्युत्कर्षेण वर्तते। किं किं कुर्वन्? प्रतिदिशं दिशि दिशि सर्वासु दिक्ष्वित्यर्थः ध्वान्तानि तमांसि विधुन्वन् अपहरन्, अधर्मं निःश्रेयसप्रतिबन्धकं पाप्मानं परिहरन् निवारयन्, श्रियं सम्पदं व्यातन्वानः विदधानः, दुःखपटलं दुःखानाम् अनिष्टानां तापदानां कष्टानां पटलं समूहं सपदि क्षणात् शमयन् व्यपोहन्, मे मम सहस्राराम्भोजे शिरसि सहस्रदले असदृशम् असमानं द्रवं रसममृतधारामिति यावत् प्रजनयन् उत्पादयन्, विजयते इति शेषः। अत्र सितहसितलेशस्य सकलपुरुषार्थविधायकत्वमुक्तं पूर्वार्धेन। तथा च अधर्मं परिहरन् इत्यनेन धर्मसिद्धिः, श्रियं व्यातन्वान इत्यनेन अर्थलब्धिः, दुःखपटलं शमयन् इत्यनेन सुखप्रदकामावाप्तिः, ध्वान्तानि विधुन्वन्नित्यनेन मोक्षोपयोगिप्रकाशोपलब्धिश्चेति बोध्यम्। एवं प्रभाविशिष्टो भगवत्याः मन्दहासो मम शिरःकमले विलसन् अमृतं स्रावयतीति कवेरनुभूतिः तृतीयपादेन कीर्तिता। दशमहाविद्यासु छिन्नमस्तां देवीं प्रचण्डचण्डीमाहुः तन्त्रशास्त्राणि। तस्या एवावतारो मूर्तिभेदो रेणुकेति ताम् उत्तरस्तबके प्रस्तौति ॥१॥

**अरीणां शीर्षेषु ज्वलितदवकीलीन्द्रसदृशं**
**विनम्राणां शीर्षेष्वमृतकरबिम्बेन तुलितम् ॥**
**विरोधिध्वान्तानां तरुणतरणिप्राभवहरं**
**प्रचण्डायाश्चण्डयाश्चरणमसतां हन्तु विभवम् ॥२॥**

अरीणामिति– प्रचण्डायाः चण्डयाः प्रचण्डचण्डीदेव्याः चरणं पादः 'चरणोऽस्त्रियाम्' इति नपुंसकेऽपि वर्तते, असतां खलानां विभवम् ऐश्वर्यं हन्तु नाशयतु। कीदृशं चरणम्? पादत्रयेण विशिनष्टि। अरीणां शत्रूणां शीर्षेषु शिरस्सु ज्वलितदवकीलीन्द्रसदृशं ज्वलितो दीप्तः दवे वने यः कीली ज्वाली अग्निः स इन्द्र इव तेन सदृशं दीप्तदावाग्निश्रेष्ठेन तुल्यमित्यर्थः, 'दव-दावौ वनारण्यवह्नी' 'वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः। विनम्राणां विनतानां भक्तानामिति यावत्, शीर्षेषु शिरस्सु अमृतकरबिम्बेन चन्द्रबिम्बेन तुलितं सदृशं, भक्तानाम् उपासकानां सहस्रारस्थितं सत् अमृतवर्षीत्यर्थः। विरोधिध्वान्तानां विरोधिनां ज्ञानप्रतिबन्धकानां ध्वान्तानां तमसां तरुणतरणिप्राभवहरं तरुणतरणेः बालार्कस्य प्राभवहरं वैभवापहरं ध्वान्तविध्वंसने बालार्कादपि पटुतरमित्यर्थः। एवम् एकस्य चरणस्य अग्नि-चन्द्र-सूर्यादिकार्यातिशयकारित्वोल्लेखनादुल्लेखालङ्कारः। आद्यपादत्रये उपमालङ्कारः। तिलतण्डुलन्यायेन स्फुटावगम्यभेदयोरुभयोः मेलनादुपमोल्लेखयोः संसृष्टिः ॥२॥

**भजे भासां शालां निखिलधिषणानां जनिभुवं**
**बलानामाधात्रीं निखिलभुवनेन्द्रस्य दयिताम् ॥**
**भजन्ते यां गीतैर्मधुसमयमाद्यत्पिकवधू-**
**कलालापा हृद्यैर्हयवदनपङ्केरुहदृशः ॥३॥**

भजे इति– भासां त्विषां शालां निलयभुवं ज्योतिषामाश्रयस्थानमिति यावत्, निखिलधिषणानां सर्वासां प्रज्ञानां जनिभुवं सकलानां लोकशास्त्रप्रज्ञानाम् उत्पत्तिस्थानम् इत्यर्थः, बलानां विद्या-बुद्धि-पराक्रमादिबलानाम् आधात्रीम् उत्पादयित्रीं निखिलभुवनेन्द्रस्य सर्वलोकेश्वरस्य दयितां प्रेयसीं भजे सेवे। यां मधुसमयमाद्यत्पिकवधूकलालापाः मधुश्चैत्रमासः तस्य समये काले वसन्तकाल इत्यर्थः, माद्यन्तीनां हृष्यन्तीनां पिकवधूनां स्त्रीकोकिलानां कलालाप इव कलालापोऽव्यक्तमधुरभाषणं यासां ताः, वासन्तिकहर्षोद्रेकप्रेरितश्रवणसुभगकोकिलस्वरा इत्यर्थः, हयवदनपङ्केरुहदृशः हयवदनाः किन्नराः तेषां पङ्केरुहदृशः पद्माक्ष्यः सुन्दर्यः किन्नराङ्गनाः, यद्वा हयवदनाः तुरङ्गवदनाः पङ्केरुहदृशः अङ्गनाः किन्नर्य इति कर्मधारयः समासः, 'स्यात्किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः' इत्यमरः। हृद्यैः हृदयङ्गमैः गीतैः गानैः भजन्ते सेवन्ते कीर्तनैः स्तुवन्तीत्यर्थः। सर्वज्योतिर्निधिं सकलविधप्रज्ञोद्भवस्थानं निखिल-

बलाधायिनीं यामम्बां किन्नर्यः स्तुवन्ति तां भजे इति भावः। अनेन हिमाचलवासिनी देवी स्तुतेति गम्यते, तत्र हि किन्नरीणां वासः। कुमारसम्भवेऽपि 'भिन्दन्ति मन्दां गतिमश्वमुख्यः' इति महाकविः ॥३॥

**ज्वलन्ती तेजोभिर्महिषमथने या तव तनु-**
**र्लसन्ती लावण्यैर्गिरिशरमणे या तव तनुः ॥**
**विना क्रोधप्रीती न किमपि तयोर्भेदकमभूत्**
**तयोराद्या दुर्गा भवति ललिताऽन्या मुनिनुते ॥४॥**

ज्वलन्तीति– मुनिनुते ऋषिभिः स्तुते देवि! महिषमथने महिषासुरमर्दने विषये तव या तनुः मूर्तिः तेजोभिः प्रतापैः ज्वलन्ती दीप्यन्ती अभूत् इत्यध्याहार्यम् । गिरिशरमणे शिवरतिविषये तव या तनुः मूर्तिः लावण्यैः रामणीयकैः लसन्ती विलसन्ती अभूत्, तयोरुभयोस्तन्वोः भेदकं विशेषदर्शकं क्रोधप्रीती विना क्रोधं प्रीतिं च वर्जयित्वा न किमपि अभूत्। तयोः द्वयोः मूर्त्योः आद्या तेजोभिः ज्वलन्ती क्रोधाविष्टा दुर्गा भवति; अन्या लावण्यैः लसन्ती प्रीतिविशिष्टा ललिता गौरी भवति। एकैव त्वं दुष्टमथने दुर्दर्शा दुर्गा, शिवरमणे प्रियदर्शना शिवा च भवसीति भावः। तेजोभिरिति बहुवचनेन सर्वेभ्योऽप्यङ्गेभ्यः शत्रुहृदयभेदकस्य रौद्रतावहस्य प्रतापस्य बहुशो विजृम्भणं द्योत्यते। तथा लावण्यैर्लसन्तीत्यनेन सर्वाङ्गसौन्दर्यविलसितं शिवरतिपोषकं गम्यम् ॥४॥

**सहस्रं भानूनां भवति दिवसानामधिपतेः**
**सहस्रं शीर्षाणां भवति भुजगानामधिपतेः ॥**
**सहस्रं नेत्राणां भवति विबुधानामधिपतेः**
**सहस्रं बाहूनां भवति समये हैमवति ते ॥५॥**

सहस्रमिति– दिवसानाम् अह्नाम् अधिपतेः सूर्यस्य भानूनां किरणानां सहस्रं भवति। सहस्रांशुः सूर्यः प्रसिद्धः। भुजगानां सर्पाणाम् अधिपतेः शेषस्य शीर्षाणां शिरसां सहस्रं भवति। आदिशेषः सहस्रशीर्षः पुराणप्रसिद्धः। विबुधानां देवानाम् अधिपतेः देवराजस्येन्द्रस्य नेत्राणां सहस्रं भवति। इन्द्रः सहस्राक्षो विश्रुतः। भोः हैमवति उमे देवि! समये अवसरे सति ते

तव बाहूनां सहस्रं भवति। दुष्टशिक्षणाय प्राप्ते काले बहुधा तव पराक्रमो विजृम्भते इति भावः ॥५॥

**प्रसन्नो वक्त्रेन्दुर्न च नयनयोः कोऽप्यरुणिमा**
**न कम्पो बिम्बोष्ठे स्मितमपि लसत्काशविशदम् ॥**
**सरोजाभः पाणिः किणविरहितः कोमलतमो**
**ज्वलच्छूलं त्वासीज्जननि तव शुम्भाय भयदम् ॥६॥**

प्रसन्न इति– जननि मातः! वक्त्रेन्दुः तव मुखचन्द्रः प्रसन्नः स्वच्छः रोषलाञ्छनं न किमपि दृश्यते तत्र। नयनयोः नेत्रयोः कोऽपि क्रोधसूचकोऽरुणिमा रक्तिमा च न भवति। बिम्बोष्ठे बिम्बाधरे कम्पः क्रोधव्यञ्जको वेपथुः न भवति। स्मितमपि मन्दहसितमपि लसत्काशविशदं काशपुष्पमिव धवलं भवति। सरोजाभः कमलसन्निभः कोमलतमः अतिललितः पाणिः हस्तः किणविरहितः, किणेन मुहुर्मुहुरायुधग्रहणेन जायमानो ग्रन्थिः किणः तेन विरहितः वर्जितः। आयुधग्रहणलक्ष्म न किमपि दृश्यते हस्ते। एवं वक्त्रेन्दु-नयन-बिम्बोष्ठ-मन्दस्मित-पाणिकमलानि लावण्यमयानि प्रियदर्शनानि भवन्ति। तु तथाऽपि ज्वलत् दीप्यत् तव शूलम् आयुधं शुम्भाय असुराय भयदं भयप्रदम् आसीत्। वक्त्रप्रसन्नतादिसौम्यगुणाननुरूपस्य भयङ्करशूलस्य प्रसक्तेः विषमालङ्कारः। 'अननुरूपसंसर्गो विषमम्' इति रसगङ्गाधरलक्षणात् ॥६॥

**वधे शुम्भस्यासीत्तव जननि या काचन तनु-**
**र्दधानाऽग्र्याः शक्तीः शशिकिरणसारोपमरुचिः ॥**
**इमां ध्यायं ध्यायं स्मरहरसखि व्याकुलमिदं**
**मनो मे विश्रान्तिं भजति भजतां कल्पलतिके ॥७॥**

वधे इति– जननि! शुम्भस्य शुम्भासुरस्य वधे ध्वंसे अग्र्याः श्रेष्ठाः शक्तीः ब्रह्माणीप्रमुखाः दधाना बिभ्राणा शशिकिरणसारोपमरुचिः शशिकिरणस्य चन्द्रकिरणस्य सारेण अमृतेन उपमा यस्याः, सा रुचिः शोभा यस्याः सा, या तव काचन अनिर्वर्ण्या तनुः मूर्तिः आसीत्। शुम्भासुरदमनसमये 'बलावलेपाद् दुष्टे त्वं मा दुर्गे गर्वमावह। अन्यासां बलमाश्रित्य युध्यसे चातिमानिनी ॥' इति शुम्भेनोक्ता दुर्गा सर्वाः स्वा विभूतीः स्वात्मन्युपसंहृत्य

एकैव युद्धाय सन्नद्धाऽभूदिति देवीमाहात्म्यम् आह। ईदृशी शुम्भसंहारिणी सम्पूर्णा या तव मूर्तिरभूत्, तामिमां ध्यायं ध्यायं ध्यात्वा ध्यात्वा मुहुर्मुहुरेतद्ध्यानेनेत्यर्थः, भोः स्मरहरसखि कामारिप्रेयसि! भजता भक्तानां कल्पलतिके अभीष्टदायिनि! इदं व्याकुलं विकीर्णमार्तं मे मम मनो विश्रान्ति भजति विश्रमसुखमनुभवतीत्यर्थः ॥७॥

**यदि त्वं संहारे पटुरसि सवित्रि त्रिजगत-**
**स्तदेतत्त्वां याचे सरसिरुहगर्भादिविनुते ॥**
**इमे मे पाप्मानो भगवति नदन्तो बहुविधा-**
**स्तदेषु प्रख्यातं प्रतिभयतमं दर्शय बलम् ॥८॥**

यदीति– त्रिजगतः त्रयाणां जगतां समाहारः त्रिजगत् तस्य सवित्रि जननि, सरसिरुहगर्भादिविनुते ब्रह्मादिसंस्तुते देवि! त्वं संहारे कार्ये पटुः निपुणा असि भवसि यदि, तत् त्वां एतत् बुद्धिस्थम् याचे प्रार्थये। भगवति! बहुविधाः नानाप्रकाराः इमे मे मम पाप्मानः पापानीत्यर्थः, गर्जन्तो नदन्तः भवन्तीति शेषः। वीर्यवन्ति पापानि इत्यर्थः। तत् तस्मात् प्रख्यातं विश्रुतं प्रतिभयतमं भयं प्रतिगतं प्रतिभयम् अतिशयेन प्रतिभयं प्रतिभयतमं भयङ्करतमं 'भयङ्करं प्रतिभयम्' इत्यमरः। बलं दर्शय। पाप्मनां विध्वंसे तव संहारसामर्थ्यं प्रकटयेति प्रार्थयते ॥८॥

**बिभेदोरः क्रोधात्कनककशिपोरब्धितनया-**
**कुचग्रावोल्लीढैरतिशितशिखैर्यैः किल नखैः ॥**
**त्वया दत्ता शक्तिर्नरहरिशरीराय जगतां**
**विनेत्रे पुंसेऽस्मै जननि रणरङ्गस्थलरमे ॥९॥**

बिभेदेति— रणरङ्गस्थलरमे रणरङ्गस्थले समराङ्गणे रमे विजयदात्रि लक्ष्मि जननि मातः! यः अब्धितनयाकुचग्रावोल्लीढैः अब्धितनयायाः सागरपुत्र्याः लक्ष्म्याः कुचावेव ग्रावाणौ शाणोपलौ तयोः उल्लीढैः घर्षितैः अत एव अतिशितशिखैः अतिशिताः निशिताः शिखाः कोटयोऽग्राणीत्यर्थः, येषां तैः नखैः कनककशिपोः हिरण्यकशिपोः दैत्येश्वरस्य उरः वक्षः क्रोधात् रोषात् बिभेद

विदारयामास, किल ऐतिह्ये। इति वदन्ति पुराणानीति भावः। अस्मै तस्मै जगतां विनेत्रे शासित्रे पुंसे नरहरिशरीराय नृसिंहाय पुरुषाय त्वया शक्तिर्दत्ता। नरसिंहमूर्तये नारसिंही शक्तिः हिरण्यकशिपुवधाय त्वया दत्ता। लोके तु विष्णुः तं दैत्यं निजघानेति वदन्ति ॥९॥

**अजेयस्त्रैलोक्यप्रकटितपताकः पलभुजां**
**बिडौजा यत्कारागृहपरिचयी पङ्क्तिवदनः ॥**
**सहस्रारं साक्षाद्धृतनरशरीरं तमजयत्**
**तवैवावेशेन प्रियपरशुरम्ब द्विजशिशुः ॥१०॥**

अजेय इति– अम्ब! अजेयः जेतुं योग्यः जेयः न जेयः अजेयः त्रैलोक्यप्रकटितपताकः त्रैलोक्ये त्रिभुवने प्रकटिता स्थापिता पताका जयध्वजो येन सः, पलभुजां राक्षसानां बिडौजाः इन्द्रः राक्षसेश्वरः पङ्क्तिवदनो दशग्रीवो रावणः यस्य कारागृहस्य बन्धनागारस्य परिचयः संस्तवः अस्यास्तीति यत्कारागृहपरिचयी अभवत् इत्यध्याहार्यम्। साक्षाद्धृतनरशरीरं प्रत्यक्षं स्वीकृतमानुषविग्रहं सहस्रारं सहस्रदलचक्रं तं कार्तवीर्यमर्जुनं द्विजशिशुः ब्राह्मणबालः प्रियपरशुः प्रियः परशुः कुठारः आयुधं यस्य स परशुधारी रामः तवैव आवेशेन आवेशबलेन अजयत् जितवान्। राक्षसेश्वराय त्रिलोकविजयिने रावणायापि कारागारबन्धनं दत्तवान् कार्तवीर्यः। स च सहस्रारचक्रस्यैव मानुषं रूपं, अत एव सहस्रबाहुरिति प्रसिद्धः। तं परशुरामो जितवान्। कार्तवीर्येणाभीप्सितां धेनुम् अदत्तवन्तं जमदग्निं स निजघान। तत्प्रतीकाराय परशुरामः पुत्रः प्रथमं कार्तवीर्यमनन्तरं क्षत्रियवंशं त्रिस्सप्तकृत्वः निर्मूलितवान् इति पुराणकथा ॥१०॥

**त्वदीया सा शक्तिस्सकलजगदन्तेऽप्यनलसा**
**पुरा कार्यस्यान्ते तनयमयि हित्वा नृपरिपुम् ॥**
**अविक्षत्काकुत्स्थं दशमुखकुलोन्माथविधये**
**सहस्रांशुं हित्वा शशिनमिव घस्रे गलति भा ॥११॥**

त्वदीयेति— अयि अम्ब! सकलजगदन्तेऽपि सर्वलोकविनाशेऽपि अनलसा

अश्रान्ता त्वदीया तवेयं पूर्वोक्ता यदावेशेन परशुरामः कार्तवीर्यं जितवान् सा शक्तिः पुरा पूर्वं कार्यस्य परशुरामप्रतिज्ञातक्षत्त्रवधरूपस्य कार्यस्य अन्ते अवसाने नृपरिपुं क्षत्त्रियशत्रुं परशुरामं हित्वा विहाय काकुत्स्थं श्रीरामं दशमुखकुलोन्माथविधये रावणराक्षसकुलध्वंसाय अविक्षत् प्राविक्षत्। केव? भा प्रभा घस्रे दिने दिनान्ते इति भावः, सहस्रांशुं हित्वा मुक्त्वा शशिनं चन्द्रं गलति इव। यथा दिनान्ते रविं विहाय चन्द्रं गच्छति भा तथा कार्यान्ते परशुरामं हित्वा तव संहारशक्तिः श्रीरामं प्रविष्टेत्यर्थः। परशुरामो महाविष्णोरवतारस्तथा श्रीरामश्च। उभावपि समकालिकौ रामायणकथया विश्रुतौ। कथं तर्हि उभयोरवतारत्वमिति संशयं परिहरति। अवतारतत्त्वविदो नैष्ठिकस्याचार्यस्य कवेरयमाशयः। सर्वेष्ववतारेषु अवतारपुरुषद्वारा महाशक्तिरेव कार्यं निर्वहति। भुजबलदर्पान्धानां वधेन तपोबलप्रदर्शनं परशुसमावतारस्य कार्यमभूत्। तस्य कार्यस्य निर्वर्तनानन्तरं सा शक्तिः धर्मविद्वेषिराक्षसकुलनिर्मूलनाय राममाविष्टा। प्रधानमल्लन्यायेन रावणे निर्मथिते राक्षसकुलमुन्मूलितं स्यादिति राक्षसेश्वरोन्माथः कृतो भगवता रामभद्रेण। तदेव द्योतयितुं कुलपदं प्रयुक्तम्। कुलपदेन रावणस्य राक्षसकुलं ग्राह्यं, न तु कुटुम्बं तस्य। अत्र भायाः सहस्रांशुशशिरूपानेकाधारसंश्रयणात् पर्यायः। 'पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः' इति तल्लक्षणात्। यद्यपि सहस्रांशुसंश्रयणं कण्ठतो नोक्त तथाऽपि सहस्रांशुं हित्वेति तत्परित्यागकथनेन पूर्वं तत्संश्रय आक्षिप्यते, तेन पर्यायनिर्वाहः। अत्र द्विजशिशुं हित्वा काकुत्स्थं प्रविष्टायाः शक्तेः, सहस्रांशुं हित्वा शशिनं प्रविष्टायाः भायाश्च, एकाश्रयपरित्यागपूर्वान्याश्रयरूपसाधर्म्यादुपमालङ्कारः। एवं पर्यायस्योपमाशिरस्कत्वात् पर्यायोपमयोरङ्गाङ्गिभावेन सङ्करः ॥११॥

**हृते लोकव्राते भगवति भवत्यैव स पुरा-**
**मरिः कीर्तिं लब्धुं चतुरमतिरायाति समये ॥**
**त्वया लोकत्राणे जननि रचिते राक्षसवधाद्**
**यशोऽवाप्तुं विष्णुर्मिलति च कुतोऽप्येष निपुणः ॥१२॥**

हृत इति— भगवति देवि! लोकव्राते जगज्जाले भवत्यैव हृते संहृते सति, चतुरमतिः कुशलधीः स संहारकृदिति प्रख्यातः पुरामरिः त्रिपुरान्तकः हरः कीर्तिं प्रलयकृत् इति ख्यातिं लब्धुं समये कार्यवमानकाले आयाति

आगच्छति। जननि! राक्षसवधात् रक्षःकुलप्रध्वंसाद्धेतोः त्वया लोकत्राणे जगद्रक्षणे रचिते विहिते सति, कुतोऽपि स्थानात् एष निपुणः कुशलो विष्णुः यशः जगत्त्रातेति कीर्तिम् अवाप्तुं लब्धु मिलति समागच्छति। हरे संहारकारिणी शक्तिः, विष्णौ स्थितिकारिणी च त्वमेव शक्तिस्त्वदीया एवेति वा भावः ॥१२॥

**स्वरूपं ते वज्रं वियति रजसां सूक्ष्ममहसा-**
**मुपाधिस्ते स्तोमो भवति चपला काऽपि तनुभा ॥**
**अरुद्धा ते व्याप्तिर्बलमखिलदत्तं बलनिधेः**
**सहस्रांशः स्वस्य प्रभवसि समस्तस्य च शिवे ॥१३॥**

स्वरूपमिति— शिवे अम्ब! वज्रं कुलिशमायुधं ते तव स्वरूपं प्रकृतिः भवति, वियति आकाशे रजसां रेणुरूपाणां सूक्ष्ममहसां सूक्ष्माणां महसां ज्योतिषां स्तोमः समूहः ते तव उपाधिः अवच्छेदक आश्रयः भवति, चपला तटित् काऽपि तनुभा शरीरप्रभा भवति। ते तव व्याप्तिः सर्वव्यापिता अरुद्धा अप्रतिहता। स्वस्य बलनिधेः अमितबलराशेः सहस्रांशः अल्पिष्ठोंशः, सहस्रशब्दोऽत्यधिकद्योतकः, अखिलदत्तम् अखिलाय विश्वस्मै दत्तं बलम् भवति। समस्तस्य सर्वस्यापि प्रभवसि त्वं प्रभुरसि। ज्योतिर्मय्याः सर्वव्यापिन्यास्तव अमेयबलस्यात्यल्पांश एव विश्वबलमिति भावः ॥१३॥

**यतः कालव्याजात्पचसि भुवनं वैद्युतमहः-**
**प्रभावात्कालीं त्वामयि विदुरतः पण्डितवराः ॥**
**प्रभोः शस्त्रं भूत्वा दहसि यदरीन्वज्रवपुषा**
**प्रचण्डां चण्डीं तद्भगवति भणन्त्यक्षयबले ॥१४॥**

यत इति— अयि अम्ब! यतः यस्मात् कालव्याजात् कालस्य मिषेणेत्यर्थः वैद्युतमहःप्रभावात् विद्युत इदं वैद्युतं तन्महः ज्योतिः तस्य प्रभावात् प्रतापविशेषात् महिम्नेति यावत्, भुवनं विश्वं पचसि पक्वं करोषि। भगवती कालेन साधनेन सर्वस्यापि पाकं विधत्ते इति प्रतीतिर्भवति, वस्तुतस्तु वैद्युतज्योतिःप्रभावेनैव पाको निर्वाह्यते। कालकर्तृकः पाक इति न तथ्यमिति अपह्नवः। यस्मात् कालव्याजात् पचसि अतः अस्मात् तस्मात् पण्डित-

वराः विज्ञाः त्वां कालीं विदुः। काली-कालयोः लिङ्गमात्रभेद इति प्रागुक्तमिह स्मार्यम्। अक्षयबले न विद्यते क्षयो यस्य तत् बलं यस्याः सा, तस्याः सम्बुद्धिः अव्ययशक्तिके भगवति, यत् यस्मात् प्रभोरिन्द्रस्य परमेश्वरस्य शस्त्रम् आयुधं भूत्वा वज्रवपुषा वज्रं कुलिशमेव वपुः शरीरं तेन अरीन् शत्रून् दहसि दग्धान् करोषि, तत् तस्मात् प्रचण्डां चण्डी प्रचण्डचण्डी देवीं त्वां भणन्ति पण्डितवराः। इदि परमैश्वर्ये इति धात्वर्थानुगमात् इन्द्र एव परमेश्वरः, तस्य शक्तिरिन्द्राण्येव प्रचण्डचण्डी इति कवेः आशयः। महाकालस्य रुद्रस्य पत्नी काली, इन्द्रस्य प्रचण्डचण्डी, उभे अपि एकैव। कार्यभेदात् नामभेद इति भावः ॥१४॥

**अयि त्वामेवेन्द्रं कथयति मुनिः कश्चिदजरे**
**त्वया शस्त्राढ्यं तं भणति तु परस्तत्त्वविदृषिः ॥**
**युवां माता-पुत्रौ भगवति विभाज्यौ न भवत-**
**स्ततो धीनां द्वेधा विबुधजनगोष्ठीषु गतयः ॥१५॥**

अयि इति– अयि अजरे जरारहिते नित्ययौवने अम्ब! कश्चिन्मुनिः ऋषिः तत्त्वदर्शी त्वामेवेन्द्रं कथयति, लिङ्गभेदमतथ्यं पश्यन् तत्त्वतस्त्वमेवेन्द्रो भगवान् परमेश्वरः इति ब्रवीति। परोऽन्यः तत्त्ववित् तत्त्वज्ञानी ऋषिर्द्रष्टा तम् इन्द्रं त्वया शस्त्राढ्यं शस्त्रवन्तं भणति, न त्वमेवेन्द्रः किंतु तस्य आयुधं शक्तिः त्वमसीति ब्रूते। वस्तुतस्तु भगवति! युवां त्वं शक्तिः स भगवानिन्द्रः उभावपि मातापुत्रौ न विभाज्यौ अवियोज्यौ परस्परसंश्लिष्टौ भवतः। अतः हेतोः विबुधजनगोष्ठीषु विद्वज्जनपरिषत्सु धीनां बुद्धीनां द्वेधा द्विप्रकारा इत्यर्थः गतयः सरणयो भवन्तीति शेषः आशयो द्विधा भवतीत्यर्थः, 'गतिस्तु गमने मार्गे दशायां बुद्ध्युपाययोः' इति नानार्थरत्नमाला। तत्त्वदृगृषिरिति च पाठः ॥१५॥

**विकुर्वाणा विश्वं विविधगुणभेदैः परिणमद्**
**विधुन्वाना भावान् भुवनगतिरोधाय भवतः ॥**
**वितन्वाना शर्वं चलवदचलं काचिदवितुं**
**विचिन्वाना जन्तोः कृतलवमपीशा विजयते ॥१६॥**

विकुर्वाणेति– काचित् ईदृशीति वक्तुमशक्या महाशक्तिः परिणमत् परि-

पच्यमानं विश्वं जगत् विविधगुणभेदैः विविधैः गुणभेदैः सत्त्वादीनाम् अंश-भूयस्त्वाल्पीयस्त्वविनिमयेन बहुलभेदैरित्यर्थः, विकुर्वाणा, परिवृत्तं कुर्वाणा, परिणामि जगत् नानाविधगुणभेदविशिष्टं विदधानेत्यर्थः। भुवनगतिरोधाय भुवनस्य जगतः गतेः चलनस्य रोधाय भवतः भवतेः शतरि द्वितीयाबहुवचनं प्रभवतः कल्पमानानिति यावत्, भावान् चेष्टाः इत्यर्थः, विधुन्वाना निवारयन्ती 'भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः। विश्वगतिरक्षिणी विश्वेश्वरी विश्वगतिप्रतिबन्धिकाः आसुरीश्चेष्टाः निवारयन्तीति भावः। अचलं चलनरहितम् अक्षरं शर्वं भगवन्तं परमेश्वरं चलवत् चलमिव वितन्वाना विस्तृण्वाना विततं कुर्वाणा। अक्षरमपि ईश्वरं जगदपेक्षया विश्वस्य वितती क्रियमाणायां तेन सह तं सर्वाश्रयं विततम् अत एव चलन्तमिव विदधतीत्यर्थः। जन्तोः जन्मिनः कृतलवमपि कृतस्य कर्मफलस्य लवं लेशमपि अवितुं रक्षितुं विचिन्वाना गवेषयन्ती, प्राणिनां कर्मणः लेशमपि तद्रक्षणाय जागरूकतया मार्गयमाणेत्यर्थः। एवम्भूता ईशा ईश्वरी विजयते वैशिष्ट्येन जयति ॥१६॥

**प्रभा भानोर्यद्वद्भवसि सकलस्यापि तपनी**
**प्रचण्डा शक्तिः सत्यखिलभुवनेशस्य तपतः ॥**
**सुधांशोर्ज्योत्स्नेव प्रमदयसि चेतः प्रविशतो**
**भवन्ती भूतादेर्दहरकुहरं मोदलहरी ॥१७॥**

प्रभेति— अम्ब ! तपतः ज्वलतः सकलभुवनेशस्य सर्वलोकेश्वरस्य प्रचण्डा शक्तिः चण्डी सती सकलस्य विश्वस्य तपनी तपनशक्तिः भानोः सूर्यस्य प्रभा यद्वत् यया तुल्यं यथेत्यर्थः तथा भवसि। दहरकुहरं हृदयाकाशं प्रविशतः भूतादेः भूतानां पृथिव्यादीनां प्राणिनां वा आदेः मूलभूतस्य आत्मनः 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः' इति हि श्रूयते। तस्मात् हृदिस्थस्य अन्तरात्मनः इत्यर्थः, मोदलहरी आनन्दलहरी भवन्ती, सुधांशोः सोमस्य ज्योत्स्नेव सौम्यप्रभेव चेतः मनः प्रमदयसि प्रकर्षेण हर्षयसि। सूर्यप्रभेवोग्रा शक्ति प्रकटयसि, चन्द्रप्रभेव सौम्या आनन्दम् आधत्से इति भावः ॥१७॥

**प्रचण्डा गौरी वा त्वमसि वसुरुद्रार्कविनुते**
**स भीमः शम्भुर्वा विभुरभयदः पादसुहृदाम् ॥**

**तयोरेकं रूपं तव सहविभोः खेलति मह-**
**त्यमुष्मिन्नाकाशे धवलमहसि क्रीडति परम् ॥१८॥**

प्रचण्डेति— वसुरुद्रार्कविनुते ! वसुरुद्रादित्यैः क्रमशो भूरादिलोकत्रयाधिकारिकैः देवैः विनुते सन्नुते त्वं प्रचण्डा चण्डी उग्रा वा गौरी सौम्या वा असि उभयथा वा भवसि, पादसुहृदां पादयोः बन्धूनां भक्तानाम् अभयदः त्राणप्रदः स विभुरीश्वरः भीमो वा उग्रो वा शम्भुः सुखमयः सौम्यो वा भवति। सहविभोः विभुना सह वर्तत इति सहविभुः तस्याः सेश्वरायाः तव तयोरुक्तयोः चण्डीगौरीरूपयोरेकं रूपं महति अमुष्मिन् परस्मिन् आकाशे :खेलति क्रीडति अर्थात् चण्डीरूपम्। परम् इतरद् गौरीरूपं धवलमहसि सोमे क्रीडति। आकाशे प्रतापशक्तिः सौरभेव वैद्युती चण्डी, सौम्या सोमभा गौरीति प्रागुक्तम्। उत्तरत्र चेदं स्पष्टं ब्रूते ॥१८॥

**विभक्ता या द्वेधा त्वमसि गगने शीतमहस-**
**स्तथा रम्ये बिम्बे ज्वलितललितस्त्रीतनुविधा ॥**
**तयोर्ब्रूहीशाने जननि कतमा मे जननभूः**
**पुराजन्मन्यासीद्विकटमथवोग्रैव सुषुवे ॥१९॥**

विभक्तेति— या त्वं द्वेधा द्विप्रकारेण विभक्ता ज्वलितललितस्त्रीतनुविधा ज्वलिता प्रतप्ता ललिता कोमला च स्त्रियास्तनू देहौ तयोर्विधे इव विधे यस्याः सा ज्वलिता चण्डी ललिता गौरी इति स्त्रीरूपप्रकारद्वयवतीत्यर्थः, सा त्वं गगने आकाशे ज्वलिता चण्डी असि, तथा शीतमहसः सोमस्य रम्ये मनोहरे बिम्बे मण्डले ललिता गौरी असि। ईशाने ईश्वरि जननि ! तयोः चण्डीगौर्योः मध्ये कतमा मूर्तिः पुराजन्मनि पूर्वजनने मे मम जननभूः उत्पत्तिस्थानम् आसीत्, किं मम चण्डीगर्भो जननभूरासीत् उत गौरीगर्भः ? ब्रूहि कथय। अथवा उग्रैव चण्डैव विकटं गजाननं गणपतिं सुषुवे प्रसूतवती। विकट इति गणपतेर्नाम गजमुखत्वेन विकटरूपत्वात्। विकटं करालं घोरमित्यर्थः, 'विकटः पृथुले रम्य विशालविकरालयोः' इति नानार्थरत्नमाला। आकाशे प्रतपन्ती चण्ड्येव गणपतिमसूत वेति विकल्पेन प्रश्नः। उत्तरेण पद्येन स्वयं समाधत्ते ॥१९॥

**दृशोर्भेदाद् दृष्टेर्न भवति भिदा काऽपि करयो-**
**र्न भेदादन्नं स्यात्कृतमभिविमानैक्यवशतः ॥**

**भिदा तन्वोरेवं न भवति भिदायै तव शिवे**
**वियद्देशे चण्डयां सितमहसि गौर्या च भवति ॥२०॥**

दृशोरिति– दृशोर्द्वयोरक्ष्णोर्भेदात् पृथक्त्वात् दृष्टेः दर्शनस्य काऽपि भिदा पृथक्ता न भवति। द्वयोरक्ष्णोः एकमेव दर्शनं, न दर्शने भेद इत्यर्थः। करयोर्हस्तयोर्भेदात् कृतं निष्पादितं वस्त्वित्यर्थः न वा भिन्नं भवति। एकमेव वस्तु द्वाभ्यां हस्ताभ्यां कृतं हस्तभेदाद्धेतोः न भिन्नं भवति। शिवे अम्ब! एवम् अनया रीत्या, अभिविमानैक्यवशतः आत्मीयत्वेन विशिष्य मानयतीत्यभिविमानः, अभिविपूर्वकात् मनु अवबोधन इति धातोर्ण्यन्तात् घञि अभिविमान इति रूपं, स्वीयोत्कर्षविबोधनम् इत्यर्थः। तस्यैक्यस्य अभेदस्य वशतः वशाद्धेतोः तन्वोः शरीरयोर्भिदा भेदः तव भिदायै भेदाय न भवति। वियद्देशे आकाशे तपन्त्यां चण्डयां देव्यां सितमहसि चन्द्रे विलसन्त्यां गौर्यां च विजयमानैकैव भवति भवतीत्यध्याहार्यम् ॥

दृग्द्वयेन दृष्टिद्वयं न भवति, करद्वयेन कृतद्वयं च न भवति। एवं चण्डीगौरीशरीरभेदाद् देवीस्वरूपस्य न भेदो भवतीत्युक्तम्। यथा द्वयोः दृशोः एकमेव दर्शनं, यथा च द्वयोः करयोः एकमेव कृतं, तथा चण्डीगौरीशरीरयोः एकमेव शरीरिस्वरूपमिति गम्योपमा। अनेन दर्शनस्य दृग्द्वयमिव, कृतस्य करद्वयमिव देवीस्वरूपस्य चण्डीगौरीशरीरद्वयं स्वभावसिद्धमिति द्योत्यते। शरीरभेदात् स्वरूपभेदो न भवतीति प्रकृतोपपाद्यम् अर्थं प्रति पूर्वार्धगतवाक्यद्वयार्थस्यानुमितिकरत्वेनोपपादकत्वात् काव्यलिङ्गमलङ्कारः। नेहार्थान्तरन्यासः शङ्क्यः, प्रकृताप्रकृतयोः सामान्यविशेषभावादर्शनात्। 'अनुमितिकरत्वेन सामान्यविशेषभावाभ्यामनालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः काव्यलिङ्गम्' इति रसगङ्गाधरकाराः ॥२०॥

**व च्छिन्नं शीर्षं विदुरखिलधात्र्यागमविदो**
**मनुष्याणां मस्ते बहुलतपसा यद्विदलिते ॥**
**सुषुम्नायां नाडयां तनुकरणसम्पर्करहिता**
**बहिश्शक्त्या युक्ता विगतचिरनिद्रा विलससि ॥२१॥**

तवेति– अखिलधात्रि विश्वभर्त्रि! आगमविदः तान्त्रिकाः, तन्त्रशास्त्रोक्तविद्याज्ञानिन इति यावत्, तव शीर्षं शिरः छिन्नं कृत्तं विदुः जानन्ति, त्वां

छिन्नमस्तामाहुः। यत् यस्मात् बहुलतपसा बहुलेन गाढेन तपसा तपोनिष्ठया विदलिते द्विधा विशीर्णे मनुष्याणां मस्ते शिरसि सुषुम्नायाम् एतदाख्यायां ज्योतिर्वाहिन्यां नाड्यां मध्यनाड्यां तनुकरणसम्पर्करहिता देहेन्द्रियादिसम्बन्धवर्जिता निर्लेपा सती बहिश्शक्त्या शरीराद्बहिः ब्रह्माण्डगतमहाशक्त्या युक्ता संयुक्ता विगतचिरनिद्रा उज्झितस्वापा शरीरे जातप्रबोधा कुण्डलिनी त्वं विलससि, तस्मात् विदुरिति पूर्वेण सम्बन्धः। योगिषु कुण्डलिनी प्रबुद्धा सुषुम्नायां वहन्ती शरीरमनाश्रित्य शीर्षकपालं भित्त्वा निर्गत्य बहिर्ब्रह्माण्डशक्त्या युक्ता बाह्याभ्यन्तरयोर्यातायातविहारेण विलसतीति इममर्थम् अन्यत्र च स्वानुभूत्या कविर्ब्रूते। 'तव च्छिन्नं मस्तम्' इति पाठान्तरम् ॥

जीवतो योगिनः शीर्षकपालभेदनम् श्रुत्यनुभवसिद्धम्। 'व्यपोह्य शीर्षकपाले' इति तैत्तिरीयश्रुतिः। इममेवाभिप्रायं स्मारयति अधुनाऽपि सम्प्रदायः यन्मृतस्य तुरीयाश्रमिकशरीरस्य खननात्पूर्वं तच्छिरः नारिकेलफलैर्भिद्यते ॥२१॥

**उताहो तन्वङ्ग्यां भृगुकुलविधात्र्यां पितृगिरा**
**तनूजेन च्छिन्ने शिरसि भयलोलाक्षिनलिने ॥**
**न्यधास्तेजो भीमं निजमयि यदक्षुद्रमनघं**
**तदाहुस्त्वामम्ब प्रथितचरिते कृत्तशिरसम् ॥२२॥**

उताहो इति– उताहो विकल्पे, अथवा छिन्नमस्तात्वप्राप्तेः हेत्वन्तरं विकल्पते। भृगुकुलविधात्र्यां भार्गववंशविधायिन्यां तन्वङ्ग्यां सुन्दर्यां जमदग्निभार्यायां रेणुकायां भयलोलाक्षिनलिने भयेन लोले चकिते अक्षिनलिने नयनकमले यस्य तस्मिन् शिरसि मस्तके तनूजेन पुत्रेण परशुरामेण पितृगिरा पितुर्जमदग्नेः वाचा तदादेशेनेत्यर्थः, छिन्ने सति, अयि देवि! निजं स्वीयम् अक्षुद्रम् उत्तमम् अनघं पवित्रं भीमम् उग्रं तेजः ज्योतिः न्यधाः निहितवत्यसि निपूर्वकस्य धाञ्-धातोः लुङि मध्यमपुरुषैकवचनम्। तत् तस्मात् अम्ब प्रथितचरिते विश्रुतचरित्रे! त्वां कृत्तशिरसं कृत्तं छिन्नं शिरो यस्यास्तां छिन्नमस्ताम् आहुः वदन्ति। परशुरामेण मातुः शिरसि छिन्ने तस्यां भगवत्या प्रचण्डचण्ड्या स्वं तेजो निहितम्। तेन हेतुना रेणुका प्रचण्डचण्डीतेजस्काऽभूत्। प्रचण्डचण्डी च छिन्नमस्तेति कीर्त्यते, स्वतेजोवासभुवो रेणुकायाः कृत्तशिरस्कत्वात् ॥२२॥

**हुतं धाराज्वालाजटिलचटुले शस्त्रदहने**
**तपस्विन्याः कायं भगवति यदाऽम्ब त्वमविशः ।।**
**तदा तस्याः कण्ठप्रगलदसृजः कृत्तशिरसः**
**कबन्धेन प्राप्तो भुवनविनुतः कोऽपि महिमा ।।२३।।**

हुतमिति– अम्ब! त्वं यदा धाराज्वालाजटिलचटुले अविच्छिन्ना धाराकारा ज्वाला धाराज्वाला तया जटिले सान्द्रे चटुले शीघ्रे अत एव प्रचले शस्त्रदहने खड्गाग्नौ 'वाच्यवच्चटुलं शीघ्रम्' इति विश्वः, तपस्विन्याः तापस्याः अदण्डद्यत्वात् शोचनीयाया वा रेणुकायाः कायं देहं यदा अविशः प्रविष्टाऽसि, तदा कृत्तशिरसः छिन्नमस्तायास्तस्या रेणुकायाः कण्ठप्रगलदसृजः कण्ठात् प्रगलतः निर्गच्छतः असृजः रुधिरात् भुवनविनुतः लोकसंस्तुतः कोऽपि महिमा महान् प्रभावः कबन्धेन शिरोवियुक्तकलेवरेण प्राप्तः लब्धः। अत एव लोके रेणुकायाः कबन्धोऽद्यापि पूज्यते ।।२३।।

**निधेस्त्वत्तो हृत्वा भगवति न लज्जे भुवि सृजन्**
**रसक्षोणीर्वाणीस्त्वदमलयशस्सौरभजुषः ।।**
**नृपोद्यानात्सूनोत्करमपहरन् भक्तिनटनं**
**वितन्वानस्तस्मै मुहुरुपहरंस्सेवक इव ।।२४।।**

निधेरिति– भगवति! त्वदमलयशस्सौरभजुषः तवामलानां स्वच्छानां यशसां कीर्तीनां सौरभं सौगन्ध्यं जुषन्ते सेवन्ते इति त्वदमलयशस्सौरभजुषः ताः रसक्षोणीः रसभूमीः वाणीः गिरः रसपूरिता वाच इत्यर्थः ताः, कर्म, निधेः सर्वरसोत्तरवाङ्मयनिधानभूतायास्त्वत्तः हृत्वा आदाय भुवि इह लोके सृजन्नहं न लज्जे न लज्जितोऽस्मि। त्वत्पावनकीर्तिगन्धवाहिनीः रसपरिप्लुता वाणीस्त्वत्त एव हृत्वा तासां काव्यरूपेण पुनर्निर्मितिं विधाय, मदीयेयं कवितासृष्टिरिति वादे स्यादेव मम लज्जा। तथाऽपि न लज्जे, कुतः उत्तरार्धेनोपमया हेतुमाह। अहं न लज्जे, क इव नृपोद्यानात् नृपस्य प्रभोरुद्यानात् उपवनात् सूनोत्करं पुष्पराशिमपहरन् स्वीयमिव आददानः, भक्तिनटनं भक्तेः प्रभौ सगौरवानुरागस्य नटनं बाह्यचेष्टितैः प्रदर्शनं वितन्वानः कुर्वाणः मुहुः पुनः पुनः तस्मै नृपाय उपहरन् तदीयोद्यानादाहृतं प्रसूनोत्करम् उपहरन् उपा-

यनीकुर्वन् सेवकः किङ्कर इव न लज्जे इति पूर्वेण सम्बन्धः। त्वत्तो निधे-रित्यनेन देव्याः प्रसादविशेषेण लब्धेयं कविता इति गम्यते। भुवि सृजन् इत्यनेन अभिनवेयं मे निर्मितिरिति द्योतितम् ॥२४॥

**दधानास्सन्तोषं मनसि सुकवीनामतितरां**
**ददानाः प्रत्यग्रं विबुधसदसे भावमलघुम् ॥**
**कुलानामुत्साहं सपदि विदधानाश्शिववधू-**
**पराणां शोभन्तां जगति शिखरिण्यो गणपतेः ॥२५॥**

दधानाः इति– सुकवीनां सत्कवयो रसास्वादनपटवः निर्मत्सराश्च, अत-स्तेषां मनसि सन्तोषम् अतितरां विशेषतः दधानाः बिभ्राणाः। विबुध-सदसे विद्वत्परिषदे अलघुं गुरुं प्रत्यग्रम् अभिनवं भावम् अभिप्रायं ददानाः वितरन्त्यः। शिववधूपराणां शिववधूः भगवती परं प्रधानं येषां तेषां देवी-भक्तानां कुलानां सङ्घानाम् उत्साहं बिक्रमसम्पन्नं व्यवसायं सपदि क्षणात् विदधानाः कुर्वाणाः गणपतेः कवेः शिखरिण्यः शिखरिणीवृत्तनिबद्धाः स्तुतयः जगति लोके शोभन्ताम् दीप्यन्तु, शोभमाना भवन्तु इति यावत् ॥२५॥

सप्तविंशः स्तबकः सव्याख्यः समाप्तः ॥

# अष्टाविंशः स्तबकः

अथास्मिन्नष्टाविंशे स्तबकेऽपि रेणुकां भगवतीं प्रस्तुत्य अन्याश्च क्षेत्रमूर्तीः स्तौति ।।

**अन्तर्वलक्षपरिधिभ्रममादधानो**
**वक्त्रस्य पूर्णतुहिनद्युतिमण्डलस्य ।।**
**हासः करोतु भवतां परमं प्रमोदं**
**शुद्धान्तपङ्कजदृशः प्रमथेश्वरस्य ।।१।।**

अन्तरिति– प्रमथेश्वरस्य परमशिवस्य शुद्धान्तपङ्कजदृशः अन्तःपुरसुन्दर्याः पार्वत्याः हासः भवतां परमम् उत्तमं प्रमोदमानन्दं करोतु। हासं पूर्वार्धेन विशिनष्टि। पूर्णतुहिनद्युतिमण्डलस्य पूर्णचन्द्रबिम्बस्य वक्त्रस्य वदनस्य व्यस्तं रूपकम्। अन्तर्वलक्षपरिधिभ्रमम् अन्तः अन्तरे वलक्षस्य शुभ्रस्य परिधेः परिवेषस्य भ्रमं भ्रमणम् आदधानः उत्पादयन् हासः प्रमोदं करोत्विति सम्बन्धः। मुखं परितः हासप्रभाया मण्डलाकारो विलास इति द्योतयितु भगवत्या मुखचन्द्रस्य हासः परिवेषायत इत्युक्तम्। रूपकम् अलङ्कारः ।।१।।

**सम्मोहनानि तुहिनांशुकलाधरस्य**
**सञ्जीवनानि सरसीरुहसायकस्य ।।**
**सन्दीपनानि विनतेषु जनेषु शक्तेः**
**संहर्षणानि मम सन्तु शिवास्मितानि ।।२।।**

सम्मोहनानीति– तुहिनांशुकलाधरस्य चन्द्रखण्डभृतः शिवस्य सम्मोहनानि मोहजनकानि, सरसीरुहसायकस्य अरविन्दबाणस्य मन्मथस्य हरनेत्रदग्धस्य सञ्जीवनानि जीवनाधायकानि, विनतेषु विनम्रेषु जनेषु भक्तेषु शक्तेस्सन्दीपनानि उत्तेजकानि वीर्यवर्धनानीति यावत्, शिवास्मितानि पार्वतीमन्दहसितानि मम संहर्षणानि हर्षजनकानि सन्तु भवन्तु। शिवास्मितानां सम्मोहन-सञ्जीवन-सन्दीपन-संहर्षणत्वानि बहूनि उल्लिखितानि। अत उल्लेखोऽलङ्कारः ।।२।।

पापानि मे हरतु काचन कृत्तशीर्षा
माता पदाम्बुजभुजिष्यवितीर्णहर्षा ॥
या भक्तलोकवरदानविधौ विनिद्रा
वासं *कमण्डलुधुनीपुलिने करोति ॥३॥

पापानीति– पदाम्बुजभुजिष्यवितीर्णहर्षा पदाम्बुजयोः भुजिष्येभ्यो भक्तेभ्यः वितीर्णः दत्तः हर्षः सम्मदः यया सा, काचन कृत्तशीर्षा छिन्नशिरस्का माता मे मम पापानि हरतु व्यपोहतु। या देवी भक्तलोकवरदानविधौ भक्तजनेभ्योऽभीष्टवरदानविधाने विनिद्रा जागरूका सती पुण्ये पावने कमण्डलुधुनीपुलिने कमण्डलुनदीसैकतप्रदेशे वासं करोति। 'यः कुण्डलीपट्टणराजधानीम्' इति (२५ स्त. ८ श्लो.) श्लोके यस्मिन् क्षेत्रे प्रतिष्ठिता मूर्तिः स्तुता तत्रैव कमण्डलुनदी भवति। तस्मात् सैव रेणुका अत्र कीर्तिता ॥३॥

षष्ठावतारजननावनिरेकवीरा
भीमा धुनोतु दुरितानि गणाधिपस्य ॥
या भक्तरक्षणविधावतिजागरूका
पुण्ये कमण्डलुधुनीपुलिने चकास्ति ॥४॥

षष्ठेति– षष्ठावतारजननावनिः षष्ठः अवतारः परशुरामः तस्य जननावनिः उत्पत्तिभूः जननीत्यर्थः। एकवीरा अद्वितीयवीरा एकवीरेति विश्रुता वा भीमा चण्डी भीमा देवीति विख्याता देवी गणाधिपस्य गणपतेः दुरितानि पापानि धुनोतु निवारयतु। या देवी भक्तरक्षणविधौ भक्तजनपालनकर्मणि अतिजागरूका अत्यन्तं सावधाना सती पुण्ये पवित्रे कमण्डलुधुनीपुलिने कमण्डलुनदीसैकतदेशे चकास्ति विभाति ॥४॥

छेदाय चेद् गतरजा मुनिरादिदेश
चिच्छेद चेद्बहुगुणस्तनयः सवित्रीम् ॥

---

*अत्रैव रेणुकाक्षेत्रे सङ्कटसमये 'रेणुकागीतम्' दैवप्रेरणया गीतवान नैष्ठिकः कविः। उज्ज्वलप्रतापमिदं गीतमालायामन्तर्गतं कालान्तरे मुद्रितमभूत् ॥

**दाह्यं शरीरमखिलप्रभुरीशशक्ति-**
**र्यद्याविवेश च कथा परमाद्भुतेयम् ।।५।।**

छेदायेति– गतरजाः गतं नष्टं रजः क्रोधगुणो यस्य सः सात्त्विको मुनिः जमदग्निः छेदाय रेणुकाशिरःकर्तनाय आदिदेश चेत् आज्ञप्तवांश्चेत्। बहुगुणः अनेकसद्गुणः तनयः परशुरामः सवित्रीं जननीं चिच्छेद चेत्। अखिलप्रभुः सर्वेश्वरी ईशशक्तिः ईश्वरशक्तिः दाह्यं दग्धुं योग्यं शरीरं मृतं कलेवरम् आविवेश प्रविष्टा च यदि, चकारादेतानि सर्वाणि संवृत्तानि चेत् इयं परमाद्भुता अत्याश्चर्यकरी कथा। शान्तस्य मुनेः क्रोधः, पुत्रस्य मातृशिरश्छेदः, ईशशक्तेः मृतशरीरावेशः इत्येतत्सर्वम् आश्चर्यकरम् इत्यर्थः ।।५।।

**पुत्रः प्रियस्तव शिरः सहसा चकर्त**
**कृत्ता च हर्षभरिता भवती ननर्त ।।**
**नो तस्य पापमपि नो तव काऽपि हानि-**
**र्नाशोऽस्य हा भुजभुवामभवद्विपाकः ।।६।।**

पुत्र इति– प्रियः पुत्रः परशुरामः तव शिरः सहसा अविचारितं चकर्त 'अतर्किते तु सहसा' इत्यमरः। प्रियः पुत्रः अप्रियं घोरं कर्म कृतवान्। कृत्ता छिन्ना च भवती हर्षभरिता आनन्दपूरिता सती ननर्त नृत्तं चकार। तस्य पापमपि मातृवधपापं च न, देवि! तवापि शिरश्छेदान्न हानिः न काऽपि क्षतिः। अस्य कर्मणः विपाकः परिणामः भुजभुवां क्षत्रियाणां नाशोऽभवत्; हा आश्चर्यम्! असम्भवमिवेदं चरितं प्रतिभातीत्यर्थः ।।६।।

पूर्वोक्तां कथामविश्वस्य भूतार्थमाह ।।

**अम्बैव सा सुरभिरर्जुनभूपतिर्यां**
**वीर्याज्जहार स च भार्गव आजहार ।।**
**तस्या हृतेः परगृहस्थितिरेव हेतु-**
**र्गन्धर्वदर्शनकथा रिपुकल्पितैव ।।।७।।**

अम्बेति– सा सुरभिः कामधेनुः अम्बैव श्रीमातैव पूज्यत्वात् नान्या केवला गौः। याम् अर्जुनभूपतिः अर्जुनमहाराजः कार्तवीर्यः जहार हृतवान्,

यां स च भार्गवः परशुराम आजहार आनीतवान्। परगृहस्थितिरेव शत्रु-गृहवास एव तस्याः हतेः वधस्य हेतुः। गन्धर्वदर्शनकथा गन्धर्वदर्शनमोहिताम् अत एव अपराद्धां रेणुकां हन्तुमाज्ञप्तवान् मुनिरिति कथा रिपुकल्पितैव भार्गवशत्रुभिः कल्पिता न यथार्था ॥७॥

**छिन्नानि नो कति शरीरभृतां शिरांसि**
**तत्पूज्यते जगति रैणुकमेव शीर्षम् ॥**
**कृत्ताः कलेबरवतां कति नाभयो न**
**चेतो धिनोति सुरभिर्मृगनाभिरेकः ॥८॥**

छिन्नानि इति– शरीरभृतां देहधारिणां शिरांसि कति न छिन्नानि ? बहूनि लोके शिरांसि छिन्नानि छिद्यन्ते च। तथाऽपि तेष्वेकमेव जगति लोके तत् पुराणप्रसिद्धं रैणुकं रेणुकाया इदमेव शीर्षं शिरः पूज्यते। कलेबरवतां शरीरिणां नाभयः मध्यवर्तिप्राण्यङ्गानीत्यर्थः कति न कृत्ताः छिन्नाः? बहवो नाभयः कृत्ता एव भवन्ति। तथाऽपि तेषु मृगनाभिः कस्तूरिकामृगस्य नाभिः एक एव चेतो मानसं धिनोति तर्पयति। अत्रोत्तरार्धपूर्वार्धगतोपमानोपमेय-वाक्यार्थघटकधर्मयोः रैणुकशीर्षपूज्यत्व-मृगनाभिचेतोधिन्वनयोः बिम्बप्रतिबिम्ब-भावाद् दृष्टान्तोऽलङ्कारः। प्रकृतवाक्यार्थघटकानामुपमानादीनां साधारणधर्म-स्य च बिम्बप्रतिबिम्बभावे दृष्टान्त इति पण्डितराजः ॥८॥

**प्राणा वसन्ति शिरसा रहिते शरीरे**
**लीलासरोजति शिरस्तु करेऽस्य कृत्तम् ॥**
**तन्निघ्नमेतदखिलं च धियैव धीराः**
**पश्यन्तु नन्दनगरे तदिदं विचित्रम् ॥९॥**

प्राणा इति– शिरसा रहिते शरीरे शिरोहीने देहे प्राणाः वसन्ति, अस्य शरीरस्य करे कृत्तं छिन्नं शिरः लीलासरोजति लीलार्थं सरोजं कमलं लीला-सरोजं तदिवाचरतीति लीलासरोजति, आचारे क्विप्। एतदखिलम् इदं विश्वं च तन्निघ्नं तस्य करधृतशिरसः शरीरस्य निघ्नम् अधीनं भवतीत्यध्या-हार्यम्। नन्दनगरे कुण्डलीपत्तने तदिदं विचित्रम् अद्भुतं धीराः विद्वांसः धियैव पश्यन्तु। कुण्डलीपुराख्ये क्षेत्रे प्राग्वर्णिते रेणुकामूर्तिः एवंरूपा पूज्यते।

धीराः धियैव पश्यन्त्वित्यनेन दशमहाविद्यासु प्रथितायाः छिन्नमस्तायाः गूढं तत्त्वम् अनेन विचित्ररूपवर्णनेन विदुषां विदितं स्यादित्यभिप्रायः। अन्यत्र च प्रचण्डचण्डीप्रस्तावेप्रतिपादितम् ॥९॥

**प्राणेश्वरी विधिपुरे लसतः पुरारे-**
**रङ्गीकरोतु शरणागतिमम्बिका मे ॥**
**लब्धं निपीय यदुरोरुहकुम्भदुग्धं**
**सम्बन्धमूर्तिरभवत्कविचक्रवर्ती ॥१०॥**

प्राणेश्वरीति— विधिपुरे ब्रह्मपुरे लसतः विजयमानस्य पुरारेः शिवस्य प्राणेश्वरी अम्बिका मे शरणागतिं प्रपत्तिम् अङ्गीकरोतु अभ्युपगच्छतु। लब्धं प्राप्तं यदुरोरुहदुग्धं यस्याः उरोरुहयोः वक्षोजयोः दुग्धं क्षीरं स्तन्यमिति यावत् निपीय पीत्वा सम्बन्धमूर्तिः ज्ञानसम्बन्ध इति प्रसिद्धः शैवसमयाचार्यः कविचक्रवर्ती अभवत्। ब्रह्मपुरं चोलदेशगतं सम्बन्धमूर्तेः जन्मक्षेत्रम्। त्रि-वर्षो बाल एव कविः देवाराख्यं द्राविडवेदप्रबन्धं निर्माय शिवमाराधितवान्। भगवती तस्मै स्तन्यं ददौ। तन्महिमैव तदीयो वाग्विलास इति ऐतिह्यम्। 'शीर्हाळि' इति द्रविडेषु विश्रुतमिदं स्थलम् ॥१०॥

**अप्राप्य लोकरचनावनपातनेषु**
**यस्यास्त्रयोऽपि पुरुषाः करुणाकटाक्षम् ॥**
**नैवेशते किमपि सा जगदेकमाता**
**भद्रा परा प्रकृतिरस्त्वघनाशिनी नः ॥११॥**

अप्राप्येति— त्रयोऽपि पुरुषाः ब्रह्म-विष्णु-रुद्राः लोकरचनावनपातनेषु क्रमशः लोकसर्जन-रक्षण-संहारेषु विषये यस्याः करुणाकटाक्षं करुणापूर्णनेत्रा-न्तदर्शनम् अप्राप्य अलब्ध्वा किमपि न ईशत एव किमपि स्वं कर्म सृष्ट्यादि कर्तुं नैव प्रभवन्ति। सा जगदेकमाता लोकसवित्री भद्रा मङ्गला परा प्रकृतिः मूलप्रकृतिर्महामाया भगवती नः अस्माकम् अघनाशिनी पापविध्वंसिनी अस्तु भवतु। पापनाशाख्यं चोलदेशक्षेत्रमस्ति। तत्र विराजमाना मूर्तिः स्तुता ॥११॥

**राका प्रबोधशशिनो हृदयोदयस्य**
**नौका विपज्जलनिधौ पततां जनानाम् ॥**
**वेदध्वजस्य ललिता त्रिरुचिः पताका**
**काचिन्ममास्तु शरणं शिवमूलटीका ॥१२॥**

राकेति– हृदयोदयस्य हृदयादुदयः उद्गमः यस्य तस्य प्रबोधशशिनः प्रबोधः ज्ञानमेव शशी चन्द्रः तस्य राका पूर्णिमा उदयशब्दार्थसामर्थ्यात् हृदये सागरारोपः आक्षिप्यते। प्रबोधचन्द्रपूर्णिमेत्यर्थः। विपज्जलनिधौ आपत्समुद्रे पततां मज्जतां जनानां नौका तारिणी, वेदध्वजस्य वेदा ध्वजः केतुर्यस्य तस्य वेदगिरीश इति प्रसिद्धस्य काञ्चीमण्डलस्थक्षेत्रविशेषस्याधिष्ठातुरीश्वरस्य त्रिरुचिः तिस्रो लोहितशुक्लकृष्णाः रजस्सत्त्वतमःप्रभाः रुचयः कान्तयो यस्याः सा पताका वैजयन्ती काचित् शिवमूलटीका शिव एव मूलं सूत्रमिव दूरवगाहं तस्य टीका व्याख्या प्रकाशिका ललिता देवी त्रिपुरसुन्दरी वेदगिरिक्षेत्राम्बिकायाः त्रिपुरसुन्दरीति नाम प्रसिद्धम्। सा अम्बा मम शरणं रक्षणमस्तु। ललिताया देव्या नौकाद्यभेदारोपाद्रूपकमलङ्कारः। एकस्या एव नौका-राका-पताकात्वेन उल्लेखनात् रूपकशिरस्क उल्लेखोऽलङ्कारः ॥१२॥

**मौलौ महेन्द्रसुदृशस्सुमनोनिकाय-**
**संशोभिते सदसि मान्य इवाभिजातः ॥**
**रेणुश्च यच्चरणभूर्लभतेऽग्रपीठं**
**त्राणाय सा भवतु भूतपतेर्वधूर्नः ॥१३॥**

मौलाविति– यच्चरणभूः यस्याः चरणयोः भवतीति यच्चरणभूः रेणुश्च धूलिरपि सुमनोनिकायसंशोभिते सुमनसां पुष्पाणां निकायेन समूहेन संशोभिते 'अथ सधर्मिणां स्यान्निकायः' इत्यमरः, महेन्द्रसुदृशः महेन्द्रसुन्दर्याः मौलौ चूडायां सुमनोनिकायसंशोभिते सुमनसां शुद्धमनसां देवानां वा निकायेन बृन्देन संशोभिते विराजिते सदसि सभायां मान्यः पूज्यः अभिजातस्सत्कुलज इव अग्रपीठं प्रथमासनं लभते प्राप्नोति, सा भूतपतेः रुद्रस्य वधूः देवी नः अस्माक त्राणाय रक्षणाय भवतु। भगवत्याः चरणरेणुः देवराजसुन्दरीचूडायां पूज्यं स्थानं भजत इति भावः। सुमनश्शब्दः श्लिष्टो व्याख्यातः। पूर्णोपमालङ्कारः ॥१३॥

**अम्बावृणोति परितोऽप्ययमन्धकारो**
**नात्मानमेव मम किं तु कुलं च देशम् ॥**
**शीघ्रं मदीयहृदयोदयपर्वताग्रे**
**श्रीमानुदेतु तव पादमयूखमाली ॥१४॥**

अम्बेति– अम्ब ! अयमन्धकारः गन्तव्यमार्गप्रकाशावरकमज्ञानमित्यर्थः मम आत्मानमेव केवलं परितोऽभितः न आवृणोति, किन्तु कुलम् अस्मदीयं भारतीयं मानुषं वा सङ्घं देशं च भारतदेशं च आवृणोति। मदीयहृदयोदयपर्वताग्रे ममेदं मदीयं हृदयं तदेव उदयपर्वतः उदयाद्रिः तस्याग्रे श्रीमान् लक्ष्मीवान् पादपक्षे, रोचिष्मान् सूर्यपक्षे, तव पादमयूखमाली पाद एव मयूखमाली सूर्यः शीघ्रम् उदेतु उद्गच्छतु। आत्मानं कुलं देशं चावृण्वन्तम् अश्रियम् अन्धकारं निवारयितुं भगवत्याः पाद एव क्षम इति वस्तु हृदयपादयोः उदयपर्वत-मयूखमालित्वारोपाभ्यां रूपकेणानुप्राणितम् ॥१४॥

**कष्टं धुनोतु मम पर्वतपुत्रिकायाः**
**प्रत्यग्रपङ्करुहबान्धवकान्तिकान्तम् ॥**
**अम्भोरुहासनमुखामरमौलिरत्न-**
**ज्योतिर्विशेषितगुणं चरणारविन्दम् ॥१५॥**

कष्टमिति– प्रत्यग्रपङ्करुहबान्धवकान्तिकान्तं प्रत्यग्रस्य अभिनवस्य पङ्करुहस्य कमलस्य बान्धवस्य बालार्कस्येत्यर्थः, कान्तिरिव कान्तं कमनीयम्, अम्भोरुहासनमुखामरमौलिरत्नज्योतिर्विशेषितगुणम् अम्भोरुहासनमुखानां ब्रह्मादीनाम् अमराणां देवानां मौलिषु यानि रत्नानि वज्रादीनि तेषां ज्योतिर्भिः तेजोभिः विशेषितः प्रकाशितः सर्वजगद्वन्द्यत्वादिः गुणो यस्य तत्, पर्वतपुत्रिकायाः पार्वत्याः चरणारविन्दं पादकमलं मम कष्टम् अनिष्टं धुनोतु व्यपोहतु ॥१५॥

**ज्याशिञ्जितानि समरे गिरिशं जिगीषोः**
**कामस्य हंसनिवहस्य निमन्त्रणानि ॥**
**धुन्वन्तु मे विपदमद्रिकुमारिकायाः**
**पादारविन्दकटकक्वणितानि तानि ॥१६॥**

ज्याशिञ्जितानीति– समरे युद्धे गिरिशं शिवं जिगीषोः जेतुमिच्छोः कामस्य मन्मथस्य ज्याशिञ्जितानि मौर्वीक्वणितानि, हंसनिवहस्य हंससमूहस्य निमन्त्रणानि आह्वानानि, हंसगतिरिव गमनं तस्या इति भावः। · अद्रिकुमारिकायाः पार्वत्याः तानि प्रसिद्धानि पादारविन्दकटकक्वणितानि पादकमलभूषणवलयशिञ्जितानि मे मम विपदं धुन्वन्तु। देव्याः पादहंसकध्वनयः शिवं वशयितुं मदनधनुर्ज्याघोषायमाना भवन्ति इत्यर्थः ॥१६॥

**यः सर्वलोकमथनं महिषं जिगाय**
**यस्यैव कर्म दमनं च तदन्तकस्य ॥**
**नारीनराकृतिभृतो महसस्तमङ्घ्रि**
**मञ्जीरनादमधुरं शरणं व्रजामि ॥१७॥**

य इति– यः अङ्घ्रिः सर्वलोकमथनं सर्वान् लोकान् मथ्नातीति सर्वलोकमथनः तं महिषम् असुरं जिगाय जितवान्, यस्य अङ्घ्रेरेव तत् कर्म अन्तकस्य यमस्य च दमनमभूत् इति अध्याहार्यम्, यमेनाप्यजय्यस्य महिषस्य जयात् अन्तकोऽपि अङ्घ्रेः महिषध्वंसकर्मणा जित एवेत्यर्थापत्तिः। मञ्जीरनादमधुरं नूपुरध्वनिसुभगं तं नारी-नराकृतिभृतः स्त्रीपुरुषाकारधारिणः महसः ज्योतिषोऽङ्घ्रि पादं शरणं व्रजामि प्रपन्नोऽस्मीत्यर्थः। शिवशक्त्योरेकशरीरत्वप्रसिद्धेः, महसो नारी-नराकृतिभृत्त्वम् ॥१७॥

**आपन्महोग्रविषराशिनिमग्नमेतं**
**दीनं त्वदीयचरणं शरणं प्रपन्नम् ॥**
**उद्धर्तुमम्ब करुणापरिपूर्णचित्ते**
**वित्तेशमित्रकुलनारि तवैव भारः ॥१८॥**

आपदिति– करुणापरिपूर्णचित्ते दयाभरितहृदये, वित्तेशमित्रकुलनारि वित्तेशस्य धनाधिपस्य कुबेरस्य मित्रस्य शिवस्य कुलनारि कुलाङ्गने अम्ब ! आपन्महोग्रविषराशिनिमग्नम् आपद्विपदेव महोग्रविषराशिः अतिघोरगरलसागरः तस्मिन् निमग्नम् अन्तः पतितं, त्वदीयचरणं त्वत्पादं शरणं प्रपन्नं शरण्यत्वेनाश्रितम् एतं मामुद्धर्तुम् उदञ्चयितु तवैव भारः, नान्यस्य, यदेषोऽहं त्वदेकशरणोऽस्मि ॥१८॥

**लोकाधिराज्ञि पतितं विपदन्धकूपे**
**संरुद्धदृष्टिमभितस्तिमिरच्छटाभिः ।।**
**मातः समुद्धर कृपाकलिते मृडानि**
**पुत्रं करेण जगतामभयङ्करेण ।।१९।।**

लोकेति— लोकाधिराज्ञि जगदधीश्वरि, मृडानि मृडस्य शिवङ्करस्य शिवस्य पत्नि, कृपाकलिते दयाबन्धे मातः! विपदन्धकूपे विपदापदेव अन्धस्तमोव्याप्तः कूपोऽन्धुः तस्मिन् पतितम् अत एव अभितः सर्वतः तिमिरच्छटाभिः तमोलेखाभिः संरुद्धदृष्टिं संरुद्धा प्रतिरुद्धा दृष्टिर्दर्शनं यस्य तं पुत्रं मां जगतां लोकानाम् अभयङ्करेण रक्षकेण करेण हस्तेन समुद्धर बहिः प्रकाशभूमिमानय ।।१९।।

**अस्य त्वदीयपदपङ्कजकिङ्करस्य**
**दुर्भाग्यपाकविफलीकृतपौरुषस्य ।।**
**प्राणेश्वरि प्रमथलोकपतेरुपायं**
**वीक्षस्व तारणविधौ निपुणे त्वमेव ।।२०।।**

अस्येति— प्रमथलोकपतेः भूतेशस्य शिवस्य प्राणेश्वरि पार्वति अम्ब! त्वदीयपदपङ्कजकिङ्करस्य त्वत्पादारविन्दभक्तस्य, दुर्भाग्यपाकविफलीकृतपौरुषस्य दुर्भाग्स्यस्य दुर्विधेः 'भाग्यं स्त्री नियतिर्विधिः' इत्यमरः। पाकेन परिणामेन विफलीकृतं व्यर्थीकृतं पौरुषं पुरुषकार इत्यर्थः यस्य तस्य अस्य मम तारणविधौ तारणकर्मणि निपुणे कुशले अम्ब! त्वमेव उपायं साधनं वीक्षस्व पश्य उपायं दृष्ट्वा मां तारय। जितपौरुषं दैवं जेतुम् उपायं प्रसन्ना देव्येव द्रष्टुमर्हति ।।२०।।

**मृत्युञ्जयोरुमणिपीठतटे निषण्णे**
**ताटङ्ककान्तिबहुलीकृतगण्डशोभे ।।**
**माणिक्यकङ्कणलसत्करवारिजाते**
**जाते कुलाचलपतेर्जहि पातकं नः ।।२१।।**

मृत्युमिति— मृत्युञ्जयोरुमणिपीठतटे मृत्युञ्जयस्य शिवस्य ऊरुरेव मणिमयं पीठतटं तस्मिन् निषण्णे आसीने शिववामाङ्कपीठस्थे, ताटङ्ककान्ति-

बहुलीकृतगण्डशोभे ताटङ्कयोः कर्णाभरणयोः कान्तिभिः बहुलीकृता: भूयिष्ठाः कृताः गण्डयोः शोभाः यस्यास्तस्याः सम्बुद्धिः। माणिक्यकङ्कणलसत्करवारिजाते माणिक्यखचितवलयशोभमानहस्तकमले, कुलाचलपतेः पर्वतराजस्य जाते पुत्रि ! नः अस्माकं पातकं जहि नाशय ॥२१॥

**किं ते वपुर्जननि तप्तसुवर्णगौरं**
**कामारिमोहिनि किमिन्दुकलावलक्षम् ॥**
**पाकारिनीलमणिमेचककान्त्युताहो**
**बन्धूकपुष्पकलिकारुचि वा स्मरामि ॥२२॥**

किमिति– जननि ! तप्तसुवर्णगौरं स्फुटकाञ्चनमिव गौरं ते तव वपुर्देहं स्मरामि ध्यायामि किम् ? कामारिमोहिनि शिवसम्मोहिनि देवि ! इन्दुकलावलक्षं चन्द्रकलाधवलं ते वपुः स्मरामि किम् ? उताहो अथवा पाकारिनीलमणिमेचककान्ति इन्द्रनीलरत्नश्यामलकान्ति वपुः स्मारमि किम् ? बन्धूकपुष्पकलिकारुचि रक्तकपुष्पकोरककान्ति वपुः स्मरामि वा ? किंवर्णा त्वं मम ध्यानगोचरा भवसीति चतुर्वर्णाः मूर्तीरुदाहृत्य पृच्छति। किं सौवर्णपीता गौरीमूर्तिः, उत सोमकलाधवला सरस्वतीमूर्तिः, आहोस्वित् इन्द्रनीलाभा कालीमूर्तिः, बन्धूकारुणभा लक्ष्मीमूर्तिः मया ध्येयेति प्रश्नः। एकैव बहुमूर्तिभेदा देवी गुणभेद-फलभेदाविष्काराय प्रभ्वी भवति। अतोऽयं प्रश्नः। 'तप्तसुवर्णवर्णम्' इति च पाठः ॥२२॥

अथ द्वाभ्यां दशमहाविद्यारूपिणी भगवती नामतो व्याचष्टे ॥

**त्वं सुन्दरी नृपतिजातिजितस्त्वमम्बा**
**धूमावती त्वमजरे भुवनेश्वरी त्वम् ॥**
**काली त्वमीश्वरि शुकार्भकधारिणी त्वं**
**तारा त्वमाश्रितविपद्दलनासिधारा ॥२३॥**

त्वमिति– त्वं सुन्दरी त्रिपुरसुन्दरी, इमामेव श्रीविद्यारूपिणीमाहुः। नृपतिजातिजितः क्षत्रियजातिजयिनः परशुरामस्य अम्बा रेणुका, छिन्नमस्तेत्यर्थः। अजरे जरावर्जिते त्वं धूमावती ज्येष्ठा, इमामेव धूम्रवाराहीमाहुः।

ईश्वरि, त्वं भुवनेश्वरी, काली त्वम् इयं दक्षिणाकालीत्यप्युच्यते। त्वं शुकार्भकधारिणी कीरबालं हस्ते दधाना श्यामला मातङ्गी असि। आश्रितविपद्दलनासिधारा आश्रितजनानाम् आपच्छेदिनी शस्त्रकोटिः तारा त्वमसि। ताराभेदावेव नीलसरस्वती एकजटा च ॥२३॥

**त्वं भैरवी भगवती बगलामुखी त्वं**
**रामा च सा कमलकाननचारिणी त्वम् ॥**
**कैलासवासिनयनामृतभानुरेखे**
**को वेद ते जननि जन्मवतां विभूतीः ॥२४॥**

त्वमिति– त्वं भगवती भैरवी भवसि, इमां त्रिपुरभैरवीमाहुः। त्वं बगलामुखी, इमां सर्वस्तम्भनकरीं बकमुखीं पीतवर्णामाहुः। कमलकाननचारिणी पद्मवनचारिणी सा रामा स्त्री पद्मालया लक्ष्मीस्त्वमसि। एवं दशमहाविद्यामूर्तीरुक्त्वा देवीं सम्बोधयति। कैलासवासिनयनामृतभानुरेखे कैलासवासिनः शिवस्य नयनानाम् अमृतभानुरेखे चन्द्रलेखे शिवनेत्रपेयाङ्गि, जन्मवतां प्राणिनां जननि, ते तव विभूतीः को वेद जानाति? न कोऽपीत्यर्थः ॥२४॥

**धुन्वन्तु सर्वविपदः सुकृतप्रियाणां**
**धुन्वन्तु चाखिलसुखान्यघलालसानाम् ॥**
**आवर्ज्य भूरिकरुणं पुरजित्तरुण्या-**
**श्चित्तं वसन्ततिलकाः कविभर्तुरेताः ॥२५॥**

धुन्वन्त्विति– कविभर्तुः कवीश्वरस्य एता वसन्ततिलका एतद्वृत्तरचिताः नुतयः पुरजित्तरुण्याः हरसुन्दर्याः पार्वत्याः भूरिकरुणं प्राज्यकारुण्यं चित्तं हृदयम् आवर्ज्य आकृष्य सुकृतप्रियाणां सुकृतेषु पुण्येषु प्रियाणां साधुजनानां सर्वविपदः सर्वा आपदः धुन्वन्तु ध्वंसयन्तु। अघलालसानाम् अघेषु पापेषु लालसा महानभिलाषो येषां तेषां खलानाम् अखिलसुखानि सर्वाणि सुखानि च धुन्वन्तु अपनयन्तु ॥२५॥

इति श्रीमहर्षिरमणभगवत्पादान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतिमुनेः कृतावुमासहस्रे अष्टाविंशः स्तबकः समाप्तः।

समाप्तं च सप्तमं शतकम् ।

प्रभाख्या व्याख्या च समाप्ता ॥

# एकोनत्रिंशः स्तबकः

एकोनत्रिंशे स्तबकेऽस्मिन् नवविधं भजनं प्रस्तूयते ॥

**आयुष्या भुवनानां चक्षुष्यास्त्रिपुरारेः ॥**
**कुर्वन्तु प्रमदं नः पार्वत्याः स्मितलेशाः ॥१॥**

आयुष्या इति– भुवनानाम् लोकानाम् आयुः जीवनं प्रयोजनम् एषाम् इति आयुष्याः सकलभुवनजीवनार्था इत्यर्थः। त्रिपुरारेः शिवस्य चक्षुष्याः चक्षुषे हिताः शिवनयनतर्पकाः पार्वत्याः स्मितलेशाः मन्दहासाः नः अस्माकं प्रमदं प्रहर्षं कुर्वन्तु ॥१॥

**नात्यर्घाणि निरर्थं नेतव्यानि दिनानि ॥**
**अम्बायाश्चरितानि श्रोतव्यान्यनघानि ॥२॥**

नेति– अत्यर्घाणि अतिमूल्यानि दिनानि निरर्थं निष्प्रयोजनं यथा तथा न नेतव्यानि यापयितव्यानि। सर्वस्याप्यायुषो मितत्वात् दिनानि न व्यर्थानि कार्याणि। सत्येवायुषि तत्कृतकृत्यं भवेत्। तस्मादाह। अनघानि पावनानि अम्बायाश्चरितानि श्रोतव्यानि। देव्याः पावनचरित्रश्रवणेन श्रोत्रेन्द्रियं कृतकृत्यं भवति, आयुषो दिनानि सार्थानि स्युः। अनेन श्रवणं नाम नवविधभजनस्यादिमम् उक्तम् ॥२॥

**उद्योगं कुरु जिह्वे संहर्तुं दुरितानि ॥**
**पूतान्यद्रिसुतायाः कीर्त्यन्तां चरितानि ॥३॥**

उद्योगमिति– जिह्वे रसने! दुरितानि पापानि संहर्तुं नाशयितुम् उद्योगमुद्यमं कुरु। अद्रिसुतायाः पार्वत्याः पूतानि पवित्राणि चरितानि कीर्त्यन्ताम् त्वयेति शेषः। पार्वतीपवित्रचरित्रकीर्तनेन तव पापसंहारोद्योगः फलितो भवतीत्यर्थः। पूर्वं श्रवणेन्द्रियस्य कर्तव्यम् उक्तम्, इह वागिन्द्रियस्य। अत्र कीर्तनमुक्तम् ॥३॥

अथ त्रिभिः स्मरणं सनियमं प्रतिपादयति।

**श्रीसक्तिर्विनिवार्या चिन्ता काऽपि न कार्या ॥**
**नित्यं चेतसि धार्या दीनानां गतिरार्या ॥४॥**

श्रीति– श्रीसक्तिः श्रियां सम्पदि सक्तिः सङ्गः अर्थेप्सेत्यर्थः विनिवार्या, काऽपि चिन्ता न कार्या, न केनापि हेतुना मनो व्याकुलं स्यात्। दीनानां सर्वथा बलहीनानां गतिः शरणमार्या पार्वती चेतसि मनसि नित्यमनवरतं धार्या निधेयेत्यर्थः। अर्थसङ्गवर्जं निश्चिन्ततया मनसि भगवती ध्यानेन धार्या स्यात् ॥४॥

**ज्ञातुं या गदितुं या श्रोतुं या श्वसितुं या ॥**
**द्रष्टुं याऽन्तरशक्ति- स्तिष्ठात्र स्मृतिरेषा ॥५॥**

ज्ञातुमिति– या ज्ञातुं विषयान् बोद्धुम् अन्तरशक्तिर्भवति, तथा या गदितुं वाचं वक्तुम् अन्तरशक्तिः, या श्रोतुं शब्दान्, या च श्वसितुम् उच्छ्वसितुम् निःश्वसितुम् वा अनितुं, या द्रष्टुं रूपाणि च अन्तरशक्तिर्भवति अत्र तस्याम् अन्तरशक्तौ तिष्ठ, एषा स्मृतिः भवति, स्मृतिश्च ज्ञप्तिः केवला संवित् ॥५॥

**विभ्राजीनशताभं बिभ्राणं शिरसीन्दुम् ॥**
**स्मर्तव्यं जगदम्बा- रूपं वा धुतपापम् ॥६॥**

विभ्राजीति– विभ्राजितुं शीलमस्येति विभ्राजि विदीप्यत्, इनशताभं इनानां सूर्याणां शतस्य आभेवाभा यस्य तत्, इन्दुं चन्द्रं शिरसि बिभ्राणं धारयमाणं, धुतपापं धुतम् अपहृतं पापं कलुषं भक्तानां येन तत् जगदम्बा-रूपं वा स्मर्तव्यम् ध्यातव्यम्। पूर्वश्लोके स्मृतिः स्यादित्युक्तम्। तथा कर्तुम् अशक्तौ भास्करशताभं विभ्राजमानं चन्द्रचूडम् अम्बायाः रूपं वा ध्येयमिती-होपासनविधा स्मृतिपर्यायित्वेनोक्ता ॥६॥

अथ त्रिभिः पादसेवनं प्रतिपाद्यते ॥

**येषां स्यात्परितप्तं प्रायश्चित्तमघेन ॥**
**रुद्राणीपदसेवा प्रायश्चित्तममीषाम् ॥७॥**

येषामिति– येषां जनानाम् अघेन पापेन चित्तं मनः प्रायः प्रायेण बहुश इत्यर्थः, 'प्रायो भूम्नि' इत्यमरः, परितप्तं जातानुतापं दूनमिति यावत्, स्यात् भवेत्, अमीषां तेषां रुद्राणीपदसेवा देवीचरणभजनं प्रायश्चित्तं पापापनोदकं कर्म भवतीति शेषः। 'प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते। तपोनिश्चयसंयोगात् प्रायश्चित्तमितीर्यते' इति हेमाद्रिः। अत्रेदं बोध्यम्। यदा पापेन चित्तस्य परितापो जायते सोऽनुतापे पर्यवस्यति। तथाऽनुतापवतां भगवत्पादसेवा नामस्मरणं वा प्रायश्चित्तं भवति। असत्यनुतापे भगवन्नामस्मरणादिः न ऋजुः भवति, ततो न तत् पापापनोदकं प्रायश्चित्तं भवति। अत एवाहुरभियुक्ताः— 'कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते। प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम्' इति ॥७॥

**तद्दीप्तं पदयुग्मं　सेवे यत्र भवन्ति ॥**
**अङ्गुल्यो दश भानो-　र्भानूनां शतकानि ॥८॥**

तदिति– तत् तस्मात् दीप्तं ज्वलितं पदयुग्मं देवीचरणयुगलं सेवे भजे, यत्र पदयुग्मे भानोः सूर्यस्य भानूनां किरणानां दश शतकानि दश अङ्गुल्यः करशाखा भवन्ति। पादद्वयस्य दशाङ्गुल्य एव भानोः दशशतकानि इति ताद्रूप्येणोक्तम्। अत एव दीप्तमिति विशेषणम् ॥८॥

**नो चेत्कुप्यसि किञ्चिद्　याचे वाचमतीते ॥**
**सेवां मातरुरीकु-　र्विष्टं मे कुरु मा वा ॥९॥**

नो चेदिति– वाचमतीते वाचामगोचरे, मातः! नो कुप्यसि चेत्, किञ्चिद्याचे प्रार्थये। किं तत्? सेवां मया क्रियमाणाम् उरीकुर्वङ्गीकुरु, इष्टं ममाभीष्टं कुरु वा मा वा। अभीष्टं देहि वा मा वा, सेवां तु अङ्गीकुरु ॥९॥

अथ द्वाभ्याम् अर्चनमाह॥

**शर्वाणीचरणार्चा-　पीठं पीवरकाणाम् ॥**
**वध्यस्थानमिदं स्या-　दुग्राणां दुरितानाम् ॥१०॥**

शर्वाणीति– पीवरकाणां पीनानां कुत्सायां कन्, दुष्टपुष्टानामित्यर्थः

उग्राणां घोराणां दुरितानाम् इदं शर्वाणीचरणार्चापीठं शर्वाणी शर्वस्य सर्वपापहिंसकस्य शिवस्य पत्नी तस्याः चरणार्चापीठं पादपूजापीठं वध्यस्थानं बोध्यमिति भावः ॥१०॥

**स्कन्दाम्बापदपीठ- स्पृष्टं चेद्बलमाप्तम् ॥**
**एकैकं सुममंह- स्स्वेकैकं कुलिशं स्यात् ॥११॥**

स्कन्दाम्बेति– स्कन्दाम्बापदपीठस्पृष्टं स्कन्दाम्बायाः पार्वत्याः पदयोः पादयोः पीठेन स्पृष्टं बलं वीर्यम् आप्तं लब्धं चेत्, अंहस्सु हन्तव्येषु पापेषु विषये एकैकं सुमं पुष्पं एकैकं कुलिशं वज्रायुधं स्यात्। देवीपादपीठस्पर्शलब्धबलं सुमम् अंहस्संहारे वज्रायत इति भावः ॥११॥

अथ सप्तभिर्वन्दनमाह ॥

**अम्भोजोपममङ्घ्रिं शम्भोः पट्टमहिष्याः ॥**
**अंहस्संहृतिमुग्रां संहर्तुं प्रणमामः ॥१२॥**

अम्भोजेति– शम्भोः शिवस्य पट्टमहिष्याः महादेव्याः अम्भोजोपमम् अरविन्दसन्निभम् अङ्घ्रिं चरणम् उग्रां भयङ्करीम् अंहस्संहृतिं पापसन्ततिं संहर्तुं प्रणमामः। पापप्रणाशनप्रयोजनोऽस्माकं देवीचरणारविन्दयोः प्रणाम इत्यर्थः ॥१२॥

**ये कालीपदवेषं नालीकं प्रणमन्ति ॥**
**नैषां किञ्चिदशक्यं नालीकं मम वाक्यम् ॥१३॥**

य इति– ये जनाः कालीपदवेषं काल्याः देव्याः पदयोः चरणयोः वेषम् आकल्पं प्रसाधितं बाह्यम् आकारम् इति यावत् अलीकम् अप्रियम् यथा तथा न प्रणमन्ति आर्जवेन प्रीत्या ये नमस्कुर्वन्ति, एषां तेषां न किञ्चिदशक्यं, सर्वं शक्यं भवति। मम वाक्यम् अलीकम् अनृतं न, तथ्यमित्यर्थः। काल्याः शिलादिप्रतिमायाम् अलङ्कृतं पादं ये ऋजुभक्ताः प्रणमन्ति तेषां सर्वत्र शक्तिः स्यादिति भावः, 'आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्' 'अलीकं त्वप्रियेऽनृते' इत्यमरः ॥१३॥

**वासस्तेऽत्र समाप्तः पङ्केतो व्रज दूरम् ॥**
**कालीं शङ्करनारीं कालेऽस्मिन् प्रणमामः ॥१४॥**

वास इति– पङ्क रे पाप, अत्र अस्मिन् मयि ते तव वासः समाप्तः अवसितः। इतोऽस्मात् दूरं व्रज अपेहि, अस्मिन् काले शङ्करनारीं शङ्करस्त्रियं कालीं प्रणमामः। अहंस्संहर्त्र्याः काल्याः प्रणामसमयः अस्माकमागतः, इतः परं तव वध एव, दूरं गच्छेति भावः ॥१४॥

**आशा रे तदवस्था भूभागानटतस्ते ॥**
**कामानां क्व नु पारः कामारेर्नम नारीम् ॥१५॥**

आशेति– रे सखे! भूभागान् भूगोलखण्डान् बहून् देशान् अटतः सञ्चरतः ते तव आशा अधिकापेक्षा 'आशा तृष्णाऽपि चायता' इत्यमरः। तदवस्था सा अवस्था दशा यस्याः सा, नित्यमटतस्तव आशायाः अटनदशैव, न सिद्धिरेकत्र स्थितिः स्यादिति भावः। कामानां मनोरथानां पारः क्व? क्वाप्यन्तो नास्ति। तस्मात्कामारेः कामशत्रोः शिवस्य नारीं देवीं नम प्रणम ॥१५॥

**धन्यास्ते तुहिनाद्रेः कन्यां ये प्रणमन्ति ॥**
**अन्यानुन्नतशीर्षान्मन्ये वन्यलुलायान् ॥१६॥**

धन्या इति– ये तुहिनाद्रेः हिमाचलस्य कन्यां पार्वतीं प्रणमन्ति नमस्कुर्वन्ति, ते धन्याः भाग्यशालिनः। उन्नतशीर्षान् उन्नतानि शीर्षाणि शिरांसि येषां तानन्यान् इतरान् वन्यलुलायान् वने भवान् लुलायान् महिषान् मन्ये। 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः। येषां शिरांसि देव्यै नतानि ते भाग्यवन्तः वस्तुतः उन्नता भवन्ति। अन्येषां शिरांसि एव उन्नतानि यथा महिषाणाम् ॥१६॥

**पादाम्भोजमुमायाः प्राज्ञास्संप्रणमन्तः ॥**
**गृह्णन्ति श्रियमस्मिन् राजन्तीं निजशक्त्या ॥१७॥**

पादेति– उमायाः पार्वत्याः पादाम्भोजं सम्प्रणमन्तः नमस्कुर्वन्तः प्राज्ञाः अस्मिन् पादाम्भोजे राजन्तीं शोभमानां श्रियं निजशक्त्या स्वया शक्त्या

गृह्णन्ति आददते। प्रणामात्पादारविन्दश्रियो ग्रहणं प्राज्ञानां स्वशक्त्या सम्पद्यते ॥१७॥

**मन्दाराद्रिसुताङ्घ्री दातारौ सदृशौ स्तः ॥**
**उत्कण्ठैः फलमाद्या- दन्यस्मान्नतकण्ठैः ॥१८॥**

मन्दारेति– मन्दाराद्रिसुताङ्घ्री मन्दारः इष्टार्थदायी देवतरुः अद्रिसुताङ्घ्रिः पार्वतीपादश्च उभौ सदृशौ समानौ दातारौ दानदक्षौ स्तः। अयं तु विशेषः। आद्यात् मन्दारवृक्षात् उत्कण्ठैः उद्गताः कण्ठाः येषां तैः, शिरस उपलक्षणं कण्ठः, उन्नमितशिरस्कैरिति यावत्, फलं लभ्यत इति शेषः। वृक्षात् फलमर्थयमानैः शिर उन्नमितं हि भवति। अन्यस्मात् अद्रिसुताङ्घ्रेः नतकण्ठैः नम्रशिरोभिः फलं लभ्यते ॥१८॥

**कालस्यापि विजेतुः शर्वाण्याश्चरणस्य ॥**
**एषोऽहं कविलोक- क्ष्मापालोऽस्मि भुजिष्यः ॥१९॥**

कालस्येति – कालस्यान्तकस्यापि विजेतुः विजयिनः शर्वाण्याः देव्याश्चरणस्य पादस्य भुजिष्यः किङ्कर एषोऽहं कविलोकक्ष्मापालः कविकुलाधीशो जातोऽस्मि। तत् एतत् पार्वतीपादभक्तेर्माहात्म्यं यदहं कवीश्वरोऽभवम्। अत्र दास्यमुक्तम् ॥१९॥

इह सख्यमाह ॥

**रक्ते दर्शय रागं रुद्राणीपदपद्मे ॥**
**चेतः पुष्यति शोभां सारस्सारवतोऽग्रे ॥२०॥**

रक्ते इति– चेतः रे मनः! रक्ते रक्तवर्णे रुद्राणीपदपद्मे पार्वतीपादकमले रागं प्रेमाणं दर्शय। तत्र प्रीतिं कृत्वा अभ्यासबलात् प्रकाशय। तथा करोषि चेत् श्रेयः स्यादित्यर्थान्तरं न्यस्यति। सारवतः बलवतः अग्रे पुरस्तात् सारः बलं शोभां पुष्यति वर्धयति। रागरक्तपदयोः श्लेषः। चेतो रागवत् रक्तम् अनुरक्तम्, रुद्राणीपदपद्मं च रक्तं रक्तवर्णं च अनुरक्तम् प्रीतिमत् इति यावत्। अनुरक्तस्य पुरः अनुरागो वर्धते। 'सारो बले स्थिरांशेऽर्थे न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः ॥२०॥

अथ आत्मनिवेदनमेव परा भक्तिः प्रेमरूपा मुक्तिप्रदेति चतुर्भिः आत्मरतिम् अम्बापदभक्तिरूपामभिधत्ते ॥

**संशोध्यागमजालं सारांशं प्रवदामः ॥**
**स्कन्दाम्बापदभक्ति- र्भुक्त्यै चाथ विमुक्त्यै ॥२१॥**

संशोध्येति— आगमजालम् आगमानां वेदानां तन्त्राणां च प्रमाणशास्त्राणां जालं बृन्दं संशोध्य परीक्ष्य सारांशं तत्र मुख्यमंशं प्रवदामः। तं वदति। स्कन्दाम्बापदभक्तिः भुक्त्यै ऐहिकामुत्रिकभोगाय अथ विमुक्त्यै च मोक्षाय च भवति। सर्वपुरुषार्थदा स्वर्गापवर्गदा सा भक्तिरित्यर्थः ॥२१॥

**वात्सल्यं गतिहीने- ष्वायुष्यं सुकृतस्य ॥**
**भूयोभिः सह सख्यं श्रीहेतुष्विह मुख्यम् ॥२२॥**

वात्सल्यमिति— गतिहीनेषु सर्वथोपायहीनेषु दीनेष्विति यावत् 'गतिस्तु गमने मार्गे दशायां बुद्ध्युपाययोः' इति नानार्थरत्नमाला। वात्सल्यं प्रीतिः सुकृतस्य पुण्यस्य आयुष्यम् आयुः प्रयोजनमस्येत्यायुष्यं भवति रक्षाविहीनेषु जनेषु प्रीतिः पुण्यवर्धनी भवति इत्यर्थः। भूयोभिः बहुतरैः जनैः सह सख्यं सौहार्दम् इह लोके श्रीहेतुषु श्रियः शोभायाः यशस इति यावत् हेतुषु निमित्तेषु मुख्यं भवति। बहुजनसख्यं वर्चोवर्धनमिति भावः ॥२२॥

**श्लाघ्यं पुष्यति कामं प्रेमा स्वप्रमदायाम् ॥**
**शर्वाणीपदभक्ति- र्नित्याय प्रमदाय ॥२३॥**

श्लाघ्यमिति— स्वप्रमदायां स्वस्यां स्त्रियां, नान्यस्त्रियां, प्रेमा श्लाघ्यं कीर्तनीयं श्रेष्ठं कामं पुष्यति वर्धयति। शर्वाणीपदभक्तिः उमाचरणप्रीतिः नित्याय अच्युताय प्रमदाय आनन्दाय भवतीति शेषः ॥२३॥

**एकैवं बहुभेदा भिन्नत्वाद्विषयाणाम् ॥**
**रत्याख्या द्रुतिरन्तः सा सूते फलभेदान् ॥२४॥**

एकेति— एवं पूर्वश्लोकद्वयोक्तविधया एका रत्याख्या रतिः प्रीतिः आख्या यस्याः सा अन्तः अन्तरे द्रुतिः प्रीतिरसस्रुतिः विषयाणाम् उपाधीनाम् भिन्न-

त्वात् बहुभेदा बहवः वात्सल्य-प्रेम-भक्त्यादयो भेदाः विशेषाः यस्याः सा सती फलभेदान् सुकृतायुष्यश्लाघ्यकामनित्यप्रमदादिफलभेदान् प्रसूते। 'रतिः काम-प्रियाप्रीत्योः' इति नानार्थरत्नमाला ॥२४॥

**हर्षं कञ्चन मातु- र्मत्तो भक्तिभरेण ॥**
**तन्वन्नेष विधत्तां हेरम्बो मदलेखाः ॥२५॥**

हर्षमिति— भक्तिभरेण भक्त्यतिशयेन मत्तः हृष्टः, मदलेखाः एतद्वृत्त-बद्धा नुतीः तन्वन् कुर्वन्नेष हेरम्बो गणपतिः कविः मातुरुमायाः कञ्चन कमपि हर्षं सम्मदविशेषं विधत्ताम्। मत्तः दानधारया गजमुखत्वात्, मद-लेखाः मदजलरेखाः तन्वन् हेरम्बो गजानन इति मत्त-हेरम्ब-मदलेखापदेषु श्लेषेण, मदलेखायुतः पुष्टः गजमुखः मातुरुमायाः यथा हर्षं विधत्ते तथेत्युपमा-ध्वनिः। पुष्टं पुत्रं दृष्ट्वा मातुर्जायते हि हर्षः ॥२५॥

एकोनत्रिंशः स्तबकः सव्याख्यः समाप्तः ॥

# त्रिंशः स्तबकः

त्रिंशेऽस्मिन् स्तबके ध्यानावाहनासनाद्युपचारा अध्यात्मपूजा कीर्त्यंते। तत्रादौ हासस्तुतिः ॥

**कृतेन सा निसर्गतो धृतेन नित्यमानने ॥**
**सितेन शीतशैलजा स्मितेन शं तनोतु मे ॥१॥**

कृतेनेति– निसर्गतः स्वभावात् कृतेन सहजसिद्धेनेत्यर्थः, आनने मुखे नित्यमविरतं धृतेन भृतेन सितेन धवलेन स्मितेन मन्दहसितेन सा तच्छब्द-वाच्या सर्वेश्वरी शीतशैलजा पार्वती मे मम शं सुखं तनोतु करोतु ॥१॥

**प्रतिक्षणं विनश्वरा- नये विसृज्य गोचरान् ॥**
**समर्चयेश्वरीं मनो विविच्य विश्वशायिनीम् ॥२॥**

प्रतिक्षणमिति– अये! मन इति सम्बोधनम्। प्रतिक्षणं क्षणे क्षणे विन-श्वरान् नश्यतः गोचरान् शब्दादिविषयानिन्द्रियार्थान् विसृज्य परित्यज्य, मनो विविच्य विवेचनं कृत्वा, चित्तवृत्तीः पृथक्कृत्यापसार्य अवशिष्टां विश्वशायिनीं विश्वस्मिन् शेते इति विश्वशायिनी तां वृत्तीनां विषयाणां च आधारतया अवतिष्ठमानां भगवतीम् ईश्वरीं समर्चय पूजय। अनेन पूजोपचारेषु प्रथमं ध्यानमुक्तम् ॥२॥

**विशुद्धदर्पणेन वा विधारिते हृदाऽम्ब मे ॥**
**अयि प्रयच्छ सन्निधिं निजे वपुष्यगात्मजे ॥३॥**

विशुद्धेति– अयि अगात्मजे पार्वति अम्ब! सानुनयं सम्बोधनम्। विशुद्धदर्पणेन वा निर्मलेन मुकुरेणेव 'वद्वा यथा तथैवैवं साम्ये' इत्यमरः। मे मम हृदा हृदयेन विधारिते सम्यग्धृते निजे वपुषि स्वीये शरीरे सन्निधिं सन्निकर्षणं प्रयच्छ देहि। निर्मलदर्पणे इव मम प्रसन्ने हृदये स्थितिं कुर्वति तव शरीरे सान्निध्यं कुरु। अनेन आवाहनमुक्तम् ॥३॥

**पुरस्य मध्यमाश्रितं सितं यदस्ति पङ्कजम् ॥**
**अजाण्डमूल्यमस्तु ते सुरार्चिते तदासनम् ॥४॥**

पुरस्येति– सुरार्चिते देवपूजिते अम्ब ! पुरस्य शरीरस्य मध्यं मुख्यं मूलस्थानं हृदयम् आश्रितं यत् सितं श्वेतं पङ्कजं पुण्डरीकम् अस्ति, अजाण्डं ब्रह्माण्डं मूल्यम् अर्घः यस्य तत् ते तव आसनम् अस्तु भवतु। मम हृदयारविन्दं तवासनं भवतु। हृदयारविन्दस्य ब्रह्माण्डमूल्यत्वं श्रुतिरुद्घोषयति। किं तदत्र विद्यते यदन्वेष्टव्यमिति प्रस्तुत्य छान्दोग्याष्टमप्रपाठके श्रूयते। 'स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसौ उभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इति। अनेन आसनमुक्तम् ॥४॥

**अखण्डधारया द्रव- न्नवेन्दुशेखरप्रिये ॥**
**मदीयभक्तिजीवनं दधातु तेऽम्ब पाद्यताम् ॥५॥**

अखण्डेति– नवेन्दुशेखरप्रिये बालचन्द्रचूडप्रेयसि अम्ब ! अखण्डधारया अविच्छिन्नया धारया द्रवत् स्रवत् मदीयभक्तिजीवनं मदीया भक्तिरेव जीवनम् उदकं ते तव पाद्यतां पद्भ्यांम् इदं पाद्यं तस्य भावः पाद्यता तां दधातु बिभर्तु। निरन्तरधारा मे प्रीतिस्तव चरणयोः पाद्यायताम् इति भावः। पाद्योपचारः उक्तः ॥५॥

**विवासनौघमानस- प्रसादतोयमम्ब मे ॥**
**समस्तराज्ञि हस्तयो- रनर्घमर्घ्यमस्तु ते ॥६॥**

विवासनेति– अम्ब, समस्तराज्ञि सर्वेश्वरि ! मे मम विवासनौघमानसप्रसादतोयं विगतः वासनानां संस्कारविशेषाणाम् ओघः समूहः यस्मात्तस्य मानसस्य प्रसादः नैर्मल्यम् एव तोयम् अम्बु ते तव हस्तयोरनर्घम् अमूल्यम् अर्घ्यम् अर्घार्थम् पूजार्थम् अस्तु। अर्घ्योपचारे मनःप्रसादस्तोयंवदाचरतु ॥६॥

**महेन्द्रयोनिचिन्तनाद् भवन्भवस्य वल्लभे ॥**
**महारसो रसस्त्वया निपीयतां विशुद्धये ॥७॥**

महेन्द्रेति– भवस्य शिवस्य वल्लभे प्रिये ! महेन्द्रयोनिचिन्तनात्, सुषुम्नानाडीमार्गे तालुकयोरन्तरे यः स्तन इवावलम्बते स इन्द्रयोनिरुच्यते, तन्मार्गध्यायिनां रसः स्रवतीति योगिनां सिद्धान्तः। तैत्तिरीयाश्चामनन्ति–'स य एषोऽन्तर्हृदय आकाशः तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एष स्तन इवावलम्बते सेन्द्रयोनिः। यत्रासौ केशान्तो निवर्तते। व्यपोह्य शीर्षकपाले' इति। एवं महतः इन्द्रयोनेः सुषुम्नामार्गवर्तितालुकान्तरोपजिह्विकायाः चिन्तनेन ध्यानेन भवन् स्रवन् महारसः श्रेष्ठस्वादः रसोऽमृतरसः त्वया विशुद्धये मम शरीरशुद्धिसम्पादनाय निपीयताम्, त्वं पिबेत्यर्थः। नाहं रसास्वादं करोमि, त्वमेव कुरु, तस्मादिदं शरीरं शुद्धं तव वासाय स्यादिति भावः। अनेन पानीयोपचारः कृतः ॥७॥

**सहस्रपत्रपङ्कज- द्रवत्सुधाजलेन सा ॥**
**सहस्रपत्रलोचना पिनाकिनोऽभिषिच्यते ॥८॥**

सहस्रेति– सहस्रपत्रपङ्कजद्रवत्सुधाजलेन सहस्रारकमलात् द्रवता स्रवता अमृतरसेन पिनाकिनः शिवस्य सहस्रपत्रलोचना पङ्कजाक्षी सुन्दरी सा भगवती अभिषिच्यते सहस्रारामृतरसेन देवीं स्नपयामीति भावः। अनेन कवेर्नैष्ठिकशिरोमणेरन्तःशरीरे प्रसन्ना देवी योगशक्त्याविष्कृतसहस्रारामृतेनाभिषिक्तेति स्फुटम्। अनेन स्नपनमुक्तम् ॥८॥

**ममार्जितं यदिन्द्रियैः सुखं सुगात्रि पञ्चभिः ॥**
**तदस्त्व तुभ्यमर्पितं सुधाख्यपञ्चकायताम् ॥९॥**

ममेति– सुगात्रि शोभनाङ्गि अम्ब ! मम पञ्चभिरिन्द्रियैः चक्षुरादिभिर्यत्सुखं दर्शनश्रवणादिजन्यम् आर्जितं सम्पादितं, तत् तुभ्यं सुधाख्यपञ्चकायतां सुधा अमृतम् आख्या नाम यस्य तत् पञ्चकं सुधाख्यपञ्चकं तदिवाचरतु। आचारे क्यङि लोट्। पञ्चामृतायतामित्यर्थः। सम्प्रदायानुसारेण बाह्यपूजोपचारेषु पञ्चामृतस्नानं सुप्रसिद्धम् ॥९॥

**वसिष्ठगोत्रजन्मना द्विजेन निर्मितं शिवे ॥**
**इदं शरीरमेव मे तवास्तु दिव्यमंशुकम् ॥१०॥**

वसिष्ठेति– शिवे भगवति ! वसिष्ठगोत्रजन्मना वसिष्ठवंशजातेन द्विजेन कौण्डिन्येन ब्राह्मणेन निर्मितम् उत्पादितम् इदं मे शरीरं तव दिव्यम् अंशुकं दुकूलं भवतु। कथम् इदमुच्यते यत् स्वं देहं स्वेनैव निर्मितमिति ? मास्तु शङ्का। नैष्ठिक आचार्यः तपोबलेन अन्तरं देहं देवीवसनयोग्यं निर्माय तत्परिपाकमहिम्ना भौतिकं भौमं देहमपि देव्याः दिव्यदुकूलायतामित्युक्तवान्। वसनोपचार उक्तः ॥१०॥

**विचित्रसूक्ष्मतन्तुभृ- न्ममेयमात्मनाडिका ॥**
**सुखप्रबोधविग्रहे मखोपवीतमस्तु ते ॥११॥**

विचित्रेति– सुखप्रबोधविग्रहे सुखमानन्दः प्रबोधः ज्ञानं च विग्रहः शरीरं यस्याः तस्याः सम्बुद्धिः, चिदानन्दशरीरे अम्ब ! विचित्रम् अद्भुतं सूक्ष्मम् अन्तःस्पर्शगम्यं सूक्ष्मदृग्गोचरं तन्तुं सूत्रं बिभर्तीति विचित्रसूक्ष्मतन्तुभृत् इयं मम आत्मनाडिका हृदयात् आत्मज्योतिर्वहन्ती सहस्रारं प्रस्थिता मध्यनाडी ब्रह्मनाडी अमृतनाडीति आत्मविद्भिः गीता नाडी ते तव मखोपवीतं यज्ञोपवीतम् अस्तु भवतु। वस्त्रानन्तरमुपवीतधारणम् उक्तम् ॥११॥

**महद्विचिन्वतो मम स्वकीयतत्त्ववित्तिजम् ॥**
**इदं तु चित्तसौरभं शिवे तवास्तु चन्दनम् ॥१२॥**

महदिति– महत् सर्वोत्कृष्टं तत्त्वं वस्तु वा विचिन्वतः गवेषयतो मम स्व आत्मैव स्वकस्तस्येदं स्वकीयम् आत्मीयं तत्त्वं याथार्थ्यं तस्य वित्तिर्वेदनं ज्ञानं तस्माज्जायत इति स्वकीयतत्त्ववित्तिजं स्वात्मीययाथार्थ्यज्ञानजातम् इदम् चित्तसौरभं तु मनस्सौगन्ध्यमेव, भोः शिवे ! तव चन्दनं गन्धोऽस्तु। तत्त्वविचारात्सुवासितं मनः, तस्मात्तदेव ते गन्धायताम् इति भावः। अनेन गन्धधारणं कीर्तितम् ॥१२॥

**महेशनारि निःश्वसँ- स्तथाप्यमुच्छ्वसँत्सदा ॥**
**तवानिशं समर्चको ममास्तु जीवमारुतः ॥१३॥**

महेशेति– महेशनारि महेशकान्ते महेश्वरि सदा निःश्वसन् बहिर्गच्छन्

तथा उच्छ्वसन् अन्तर्गच्छन् अयं मम जीवमारुतः उच्छ्वासनिःश्वासात्मकः प्राणवायुस्तव अनिशं सन्ततं समर्चकः पूजकोऽस्तु। मम प्राणवायुरेव पूजा-पुष्पायतामित्यर्थः, पुष्पार्चनोपचारः उक्तः ॥१३॥

**विपाककालपावक- प्रदीप्तपुण्यगुग्गुलुः ॥**
**सुवासनाख्यधूपभृद् भवत्वयं ममाम्ब ते ॥१४॥**

विपा ति— अयं मम विपाककालपावकप्रदीप्तपुण्यगुग्गुलुः विपाककाले परिपाकसमये यः पावकोऽग्निः तेन प्रदीप्तं ज्वलितं पुण्यं सुकृतं तदेव गुग्गुलुः सुगन्धधूपद्रव्यम् इत्यर्थः, ते तव सुवासनाख्यं सुगन्धाख्यं धूपं बिभर्तीति सुवास-नाख्यधूपभृत् भवतु। मम पुण्यपरिपाकवशात् याः सुवासनाः शोभनसंस्कार-विशेषाः भवन्ति ता एव तव धूपाय भवन्त्विति भावः। धूपः समर्पितः ॥१४॥

**गुहावतारमौनिना मयीश्वरि प्रदीपिता ॥**
**इयं प्रबोधदीपिका प्रमोददायिकाऽस्तु ते ॥१५॥**

गुहेति— ईश्वरि! गुहावतारमौनिना गुहावतारेण स्कन्दांशजातेन मौनिना रमणेन महर्षिणा मयि प्रदीपिता प्रज्वालिता इयं प्रबोधदीपिका ज्ञानदीपिका ते तव प्रमोददायिका आनन्दप्रदाऽस्तु भवतु। एवं दीपो दर्शितः ॥१५॥

**इमामयि प्रियात्प्रियां महारसामहङ्कृतिम् ॥**
**निवेदयामि भुज्यता- मियं त्वया निरामये ॥१६॥**

इमामिति— अयि निरामये नीरोगे अम्ब! प्रियात् प्रियाम् अत्यन्तप्रियां, महारसां महान् रसः आस्वादो यस्यास्ताम् इमाम् अहङ्कृतिं निवेदयामि तव भोजनायेति शेषः। इयं त्वया भुज्यतां भक्ष्यताम्। अहङ्कृतेर्महारसत्वं भक्षणीयत्वं द्योतयितुमुक्तम्। दोषभूयिष्ठा अप्यहङ्कृतिर्भक्षिता न रोगाय भवतीति गमयितुं निरामये इति सम्बोधनम्। महारसेति विशेषणेन अह-ङ्कृतिः शुद्धेति गम्यते। अशुद्धायाम् अहङ्कृतौ स्वनिवेदनस्यासम्भवो बोध्यः अहङ्कृतौ अशुद्धायामपि तद्ग्रसने समर्था सा निरामया, किमुन शुद्धायाम्? एवमहङ्कारार्पणं महानैवेद्यम् उक्तम् ॥१६॥

**सरस्वती सुधायते मनो दधाति पूगताम् ।।**
**हृदेव पत्रमम्बिके त्रयं समेत्य तेऽर्प्यते ।।१७।।**

सरस्वतीति– अम्बिके ! सरस्वती वाक् सुधायते लेपायते 'सुधालेपोऽमृतं स्नुही' इत्यमरः, ताम्बूले पत्रस्य लेपनं भवतीत्यर्थः। मनः चित्तं पूगतां क्रमुकफलतां दधाति 'पूगः क्रमुकबृन्दयोः' इत्यमरः, हृदेव हृदयमेव पत्रं नागवल्लीदलं भवति। त्रयं सरस्वती मनः हृदिति त्रयं समेत्य ते तुभ्यं ताम्बूलाय अर्प्यते ।।१७।।

**विनीलतोयदान्तरे विराजमानविग्रहा ।।**
**निजा विभूतिरस्तु ते तटिल्लता प्रकाशिका ।।१८।।**

विनीलेति– विनीलतोयदान्तरे श्यामलमेघस्यान्तरे विराजमानविग्रहा विभ्राजमानशरीरा निजा स्वीया विभूतिः कलाविशेषः तटिल्लता ते तव प्रकाशिका अस्तु। अत्र अन्तः स्फुरन्ती तटिल्लतैवाभिप्रेता 'तटिल्लता समरुचिः षट्चक्रोपरिसंस्थिता' इति हि कीर्तितम्। तन्त्रशास्त्रेषु तटित्स्वरूपं अनाहतादधश्चक्रेषु वदन्ति केचन, आज्ञाचक्रात् उपरीत्यन्ये। अनेन नीराजनमुक्तम् ।।१८।।

**स्वरोऽयमन्तरम्बिके द्विरेफवत्स्वरंत्सदा ।।**
**ममाभिमन्त्र्य धीसुमं ददाति देवि तेऽङ्घ्रये ।।१९।।**

स्वर इति– अम्बिके ! अयम् अन्तः अन्तरे स्वरः शुद्धः प्राणः द्विरेफवत् भ्रमरवत् सदा स्वरन् शब्दायमानः अव्यक्तनादायमानः इति यावत्, मम धीसुमं बुद्धिपुष्पम् अभिमन्त्र्य जप्त्वा ते तव अङ्घ्रये चरणाय ददाति अर्पयति। स्वृ शब्दोपतापयोरिति धातोः निष्पन्नः स्वरशब्दः नादार्थको ज्ञेयः। अयमेव स्वरः प्राणस्य मूलं स्वरूपं उद्गीथापरनामधेयमाहुरौपनिषदाः। 'आदित्य उद्गीथः' 'स्वरन्नुदेति' इत्यादिश्रुतिः। तस्मादयं स्वर इत्यत्र मुख्यप्राणस्वरूपतया व्याख्येयत्वात् अव्यक्तनादो सर्वशब्दप्रपञ्चमूलप्रकृतिः इति ग्राह्यम्। तस्मादस्य जप्तृत्वं युक्तम्। येन अभिमन्त्रितं धीसुमं देवीचरणाय समर्प्यते। एवं सर्वोपचारपूजावसाने मन्त्रपुष्पं समर्पितम् ।।१९।।

इहेदमवधेयम्। नैमित्तिकपूजासु आवाहितायाः देवतायाः यथास्थानप्रतिष्ठापनरूपं विसर्जनं प्रसिद्धम्। इह तु नित्येयमाध्यात्मिकी पूजा। तस्मान्नेहावाहनारब्धा पूजा विसर्जनावसाना भवितुमर्हति। अतो मन्त्रपुष्पोपचारेण पूजाविधि समाप्य नास्ति विसर्जनमिति ब्रूते॥

**तवार्चनं निरन्तरं　यतो विधातुमस्म्यहम्॥**
**न विश्वनाथपत्नि ते　विसर्जनं विधीयते॥२०॥**

तवेति– विश्वनाथपत्नि विश्वेश्वरमहिषि! तव निरन्तरम् अविच्छिन्नम् अर्चनं पूजनं विधातुं कर्तुम् अहमस्मि। यतः यस्मात् हेतोः ते तव विसर्जनं त्वत्कर्मकविसर्जनं न विधीयते, नास्ति त्वद्विसर्जनविधिरिति भावः, ततः विधातुमस्मीति पूर्वेण सम्बन्धः॥२०॥

**वियोग इन्दुधारिणा　न चेह विश्वनायिके॥**
**मदम्ब सोऽत्र राजते　तटिल्लताशिखान्तरे॥२१॥**

वियोग इति– विश्वनायिके विश्वेश्वरि अम्ब! इन्दुधारिणा चन्द्रशेखरेण शिवेन परमात्मना वियोगश्च न भवति। सहस्रारकमलस्य धारकः आत्मा हृदयस्थः तेन नास्ति वियोग इति भावः। मदम्ब! स सहस्रारचन्द्रधरः हृदयाकाशगः शिवः परमात्मा तटिल्लताशिखान्तरे नाभ्यामुपरि भास्वत्याः तटिल्लतायाः विद्युल्लतायाः शिखायाः ज्वालाया अन्तरे मध्ये राजते ज्वलति। 'अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति' इत्यारभ्य 'नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा। तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इति हि श्रूयते। हृदयात्सहस्रारं प्रस्थिता ज्योतिर्वाहिनी नाडी पूर्वम् उपन्यस्ता, तत्र नाड्यां स्थितस्य पुरुषस्य कथं हृदयेन वियोगो भवति? पूर्वश्लोके विसर्जनं न विधीयते इति निरन्तरपूजनस्य हेतुरुक्तः। इह इन्दुधारिणा वियोगादेव पूजनविच्छेदस्य सम्भवः, स तु नेत्युक्तम्। अतो निरन्तरपूजासामग्री मे सिद्धेति द्योत्यते॥२१॥

**इदं शरीरमेककं　विभाव्य नव्यमन्दिरम्॥**
**विहारमत्र सेश्वरा　भवानि कर्तुमर्हसि॥२२॥**

इदमिति– भवानि! इदं शरीरम् एककम् एकाकिनम् 'एकाकी त्वेक एककः'

इत्यमरः सजातीयसहायशून्यमिति यावत्, नव्यमन्दिरं नूतनप्रासादं विभाव्य विशेषेण भावयित्वा अभिमान्येत्यर्थः, अत्र सेश्वरा ईश्वरसहिता विहारं सञ्चारं क्रीडनमिति यावत् कर्तुमर्हसि। ईश्वर्याः सहस्रारं मुख्यं स्थानम् ईश्वरस्य हृदयम्। अत एव सेश्वरेत्युक्तम् ॥२२॥

**जडेष्विवालसेष्विव प्रयोजनं न निद्रया ॥**
**विहर्तुमेव याच्यसे हृदीशसद्मराज्ञि मे ॥२३॥**

जडेष्विति— ईशसद्मराज्ञि ईश्वरगृहाधिराज्ञि अम्ब! जडेषु अज्ञेषु, अलसेषु मन्देषु इव निद्रया न प्रयोजनं भवति। जडेषु ज्ञानरिक्तेषु अलसेषु क्रियाशून्येषु देवी निद्राति। तेन तेष्विव अप्रयोजनां निद्रां मयि मा कृथाः इत्यभ्यर्थयते। मे मम हृदि हृदये विहर्तुं सञ्चरितुमेव त्वं याच्यसे प्रार्थ्यसे ॥२३॥

**अयं तवाग्रिमः सुतः श्रितो मनुष्यविग्रहम् ॥**
**तनूजवेश्मसौष्ठवं मृडानि पश्य कीदृशम् ॥२४॥**

अयमिति— अयं तव अग्रिमः ज्येष्ठः सुतः गणपतिः मनुष्यविग्रहं मानवदेहं श्रितः प्राप्तः। मृडानि अम्ब! तनूजवेश्मसौष्ठवं तनूजस्य पुत्रस्य वेश्मनः गृहस्य शरीरस्य सौष्ठवं सुष्ठुभावं कीदृशं, पश्य, कीदृशी सुस्थितिरस्येति वीक्षस्वेति भावः ॥२४॥

**गणेशितुर्महाकवे- रसौ प्रमाणिकावली ॥**
**मनोम्बुजे महेश्वरी- प्रपूजनेषु शब्द्यताम् ॥२५॥**

गणेशितुरिति— महाकवेः गणेशितुः गणपतेः असौ प्रमाणिकावली प्रमाणिकावृत्तनिबद्धानां श्लोकानाम् आवली संहतिः महेश्वरीप्रपूजनेषु देवीपूजनेषु मनोम्बुजे पूजकस्य चित्तकमले शब्द्यताम् उच्चार्यतां ध्वन्यतामिति यावत् ॥२५॥

त्रिंशः स्तबकः सव्याख्यः समाप्तः ॥

# एकत्रिंशः स्तबकः

एकत्रिशेऽस्मिन् स्तबके भगवतीनाममहिमानुकीर्तनं भवति ॥

**दरस्मितश्रीकपटा सुपर्व- स्रोतस्विनी पर्वतजास्यजाता ॥**
**पङ्कं मम क्षालयतादशेषं संसारमग्ने हृदये विलग्नम् ॥१॥**

दरेति– पर्वतजास्यजाता पर्वतजायाः पार्वत्याः आस्यान्मुखात् जाता उदिता दरस्मितश्रीकपटा दरस्मितश्रीः मन्दहासप्रभा कपटः व्याजः यस्याः सा, सुपर्वस्रोतस्विनी देवनदी गङ्गा संसारमग्ने संसारे जननमरणात्मके मग्ने हृदये विलग्नं सक्तम् अशेषं समस्तं मम पङ्कं पापं पक्षे कर्दमं क्षालयतात् विशोधयतु। अत्र कपटेति प्रयोगेण उपमेयभूतां दरस्मितश्रियम् असत्यां कृत्वा उपमानभूता सुपर्वस्रोतस्विनी स्थाप्यते। तस्मादपह्नुतिः अलङ्कारः। तदुक्तं प्रकाशे– 'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः' इति ॥१॥

**हराट्टहासेन समं मिलित्वा पित्रेव पुत्रो गुरुणेव शिष्यः ॥**
**विभ्राजमानो मम शं करोतु हासाङ्कुरः केसरिवाहनायाः ॥२॥**

हरेति– पित्रा समं सह पुत्र इव, गुरुणा समं शिष्य इव, हराट्टहासेन हरस्य शिवस्य अट्टहासेन अमन्दहासेन समं मिलित्वा सङ्गम्य विभ्राजमानः उज्ज्वलः केसरिवाहनायाः दुर्गादेव्याः हासाङ्कुरः मन्दहासः मम शं सुखं करोतु। पिता-पुत्राविव गुरु-शिष्याविव हराट्टहास-देवीमन्दहासौ सङ्गतौ सुखं मे कुरुताम् इति प्रार्थना। हराट्टहासो भयङ्करः देवीमन्दहासश्चारुरिति प्रसिद्धिः। पिता-पुत्रयोरिव गुरु-शिष्ययोरिव तयोः सङ्गतिः हररौद्रतायाः शान्तिं स्थापयति। अनेन सेश्वरायाः केसरिवाहनायाः मन्दहासानां रामणीयकं लोकोत्तरप्रभावश्च द्योतितौ ॥२॥

**नमश्शिवायै भणत द्विपादो युष्माकमग्र्यां धिषणां दधत्यै ॥**
**आधारचक्रेशितुरम्बिकायै ब्रह्माण्डचक्रस्य विधायिकायै ॥३॥**

नम इति– द्विपादः! द्वौ पादौ येषां ते द्विपादः, भोः मनुजा इति

सम्बोधनं, युष्माकम् अग्र्यां श्रेष्ठां धिषणां प्रज्ञां दधत्यै बिभ्रत्यै शिवायै नमः नमोवाकं भणत ब्रूत, न चेत् को विशेषो द्विपदां चतुष्पदां च जन्तूनाम्? कीदृश्यै शिवायै? आधारचक्रेशितुः मूलाधाराधिशायिनः गणपतेरम्बिकायै मात्रे ब्रह्माण्डचक्रस्य ब्रह्माण्डबृन्दस्य विधायिकायै विधात्र्यै स्रष्ट्र्यै। अध्यण्डं विश्वविधात्री अधिपिण्डं सर्वाधारमूलाधिष्ठातुः जननी देवी। तस्यै नमस्कुरुत ॥३॥

**नदन्ति गावोऽपि विशिष्टकाले- ष्वम्बेति यो नाह्वयते स किं ना ॥**
**लक्ष्यं पुनः प्राणवदस्तु सर्वं सर्वस्य चान्तर्हि पराऽस्ति शक्तिः ॥४॥**

नदन्तीति– गावोऽपि गोवत्सा अपि विशिष्टकाले दोहनसमये प्राप्ते नदन्ति अव्यक्तं शब्दायन्ते। यः विशिष्टकाले अनुग्रहप्राप्तिसमये अम्ब इति नाह्वयते स ना मनुजः किम्? गावो मातॄर्जानन्ति, तस्मान्नदन्ति स्तन्यादानाय। मनुजो न जानाति अम्बां, तत् क्व वा तामाह्वयतु? तदाह। लक्ष्यं पुनः यदुद्दिश्य सम्बोधनं क्रियेत, तल्लक्ष्यं लक्षयितुं योग्यं, लक्ष दर्शनाङ्कनयोः, दृश्यं, प्राणवत् प्राणा अस्य सन्तीति प्राणवत् सर्वम् अस्तु भवतु। हि यतः सर्वस्य चान्तः परा शक्तिः अस्तीति शेषः। यतः सर्वस्य अन्तर्वर्तिनी परा शक्तिः, ततः सर्वं लक्ष्यं भवति तां देवीमाह्वातुम्। मानुषाः यद्यम्बां न आह्वयेयुस्ते गोभ्योऽप्यधमाः ॥४॥

**आत्मन्युतान्यत्र विधाय लक्ष्यं तां शक्तिमाद्यामखिलेषु सुप्ताम् ॥**
**यावत्प्रबोधं मुहुराह्वयस्व प्रबुध्यते सा यदि किन्न्वसाध्यम् ॥५॥**

आत्मनीति– आत्मनि स्वात्मनि उत अन्यत्र स्वस्मादितरत्र च 'लक्ष्यं विधाय' धीगोचरं लक्ष्यतया हृदि निधाय अखिलेषु सर्वेषु सुप्ताम् अप्रबोधेन स्थितां तामाद्यां शक्तिं यावत्प्रबोधं यावान् प्रबोधः यावत्प्रबोधं प्रबोधपर्यन्तम् आह्वयस्व आह्वानं कुरु। सा प्रबुध्यते यदि, तवाह्वानबलात् सा प्रबुद्धा यदि, किन्न्वसाध्यम्? सर्वं शक्यमित्यर्थः ॥५॥

**ये नाम शान्तिं परमां वहन्तो नामानि शीताचलपुत्रिकायाः ॥**
**सङ्कीर्तयन्तो विजने वसन्ति जयन्ततातादपि ते जयन्ति ॥६॥**

य इति– ये जनाः परमां श्रेष्ठां शान्तिं वहन्तो बिभ्रतः शीताचलपुत्रि-

कायाः पार्वत्याः नामानि सङ्कीर्तयन्तो गायन्तः विजने विविक्ते स्थले वसन्ति। नाम सम्भाव्ये। 'नाम प्राकाश्यसम्भाव्ये क्रोधोपगमकुत्सने' इत्यमरः। ते जयन्ततातादपि जयन्तजनकादिन्द्रादपि जयन्ति उत्कर्षेण वर्तन्ते। पार्वतीनामसङ्कीर्तनपराः जनसङ्गरहिते स्थले वसन्तः कृतिनः शान्तिसम्पन्ना देवराजादप्युत्कृष्टतरजीवना भवन्तीत्यर्थः ॥६॥

**नामानि सङ्कीर्तयतां जनानां　कारुण्यवत्याः करिवक्त्रमातुः ॥**
**पुनर्जनन्या जठरे निवासा-　दायासवत्ता भवतीति मिथ्या ॥७॥**

नामानीति— कारुण्यवत्याः कृपालोः करिवक्त्रमातुः गजाननजनन्याः पार्वत्याः नामानि सङ्कीर्तयतां गायतां जनानां जनन्याः मातुः जठरे उदरे पुनः निवासाद् गर्भवासात् इत्यर्थः आयासवत्ता आयासः श्रमः तद्वत्ता पुनर्जननार्थगर्भवासदुःखमिति भावः भवतीति मिथ्या अनृतम्। देवीनामसङ्कीर्तनपराणां न पुनर्जन्म, सत्यमेतदिति भावः ॥७॥

**पापैस्समन्तात्समभिद्रुतोऽपि　विश्वस्य ते विक्रममस्मि धीरः ॥**
**न चेद्रसज्ञे भवती ब्रवीति　नामानि शीतांशुभृतो हतोऽहम् ॥८॥**

पापैरिति— भोः रसज्ञे रसं जानातीति रसज्ञा तत्सम्बुद्धिः जिह्वे! समन्तात् सर्वतः पापैः कलुषैरभिद्रुतोऽपि आक्रान्तोऽपि ते तव विक्रमं विश्वस्य श्रद्धाय धीरः अभीरुः अस्मि। शीतांशुभृतः चन्द्रधारिणः शिवस्य, अत्रोमास्तुतिप्रसङ्गात् चन्द्रधारिण्याः पार्वत्या इति वक्तव्यम्। चन्द्रचूडपत्न्यपि चन्द्रधरेति प्रसिद्धेः। नामानि भवती न ब्रवीति चेत् रसने त्वं न भणसि चेत् अहं हतो भवामीति शेषः। गत्यन्तरविरहात्। जिह्वाबले बद्धश्रद्धः देवीनामानि गायन् अहं सर्वाणि पापानि ध्वंसयितुं प्रभवामि। यदि सा जिह्वा नोच्चारयेन्नामानि, का गतिः? ॥८॥

**देहीति सम्पल्लवदर्पितानां　द्वारेषु घोषं कुरुषे परेषाम् ॥**
**भवानि भद्रे भुवनाम्ब दुर्गे　पाहीति नायाति किमम्ब जिह्वे ॥९॥**

देहीति— अम्ब जिह्वे रसने! परेषाम् अन्येषां सम्पल्लवदर्पितानां सम्पल्लवेन लक्ष्मीलेशेन दर्पितानां गर्वितानां द्वारेषु गृहद्वारेषु देहि इति घोषं

दानार्थयाच्ञाघोषं कुरुषे। भवानि भवस्य पत्नि भद्रे सर्वमङ्गले भुवनाम्ब लोकमातः दुर्गे! पाहि रक्ष इति घोषः किं नायाति नागच्छति। अल्पसम्पदाऽपि गर्वितानाश्रित्य देहीति नीचां याच्ञां विनिन्द्य, भवानीत्यादिनामकीर्तनं सर्वाभीष्टदमुत्तमं चेत्युक्तम् ॥९॥

**वाक्यानि वक्तुं यदि ते रसज्ञे रसोज्ज्वलानि व्यसनं गरीयः ॥**
**किं वा नमोन्तानि सुधां किरन्ति नामानि नो सन्ति कुमारमातुः ॥१०॥**

वाक्यानीति– रसज्ञे! रसज्ञा नामरसास्वादनपटुः तस्याः सम्बुद्धिः रसने रसोज्ज्वलानि रसैः शृङ्गारादिभिरुज्ज्वलानि देदीप्यमानानि। वाक्यानि काव्यानि वक्तुं ते तव गरीयः गुरुतरं व्यसनं तीव्रकामनं यदि भवतीत्यध्याहार्यम्। 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इत्यमरः। सुधाम् अमृतं किरन्ति विक्षिपन्ति नमोन्तानि, नमःपदान्तानि कुमारमातुः देव्याः नामानि किं वा नो सन्ति? सन्त्येव अमृतवर्षीणि देवीनामानि, यानि कीर्तितानि रसोज्ज्वलवागमृतवैभवातिशायीनि भवन्तीति भावः ॥१०॥

**यद् गीयते शैलसुताभिधानं तदेव बोध्यं सुकृतं प्रधानम् ॥**
**अज्ञानिलोकस्य कृते भणन्ति यज्ञादिपुण्यानि पराणि विज्ञाः ॥११॥**

यदिति– यत् शैलसुताभिधानं शैलसुतायाः पार्वत्याः अभिधानं नाम गीयते तदेव प्रधानं सुकृतं पुण्यं बोध्यं ज्ञेयम्। अज्ञानिलोकस्य अज्ञानिनाम् अविचारधियां लोकस्य सङ्घस्य कृते अव्ययं निमित्तेनेत्यर्थः अज्ञानिजनार्थं विज्ञाः बुधाः यज्ञानि अग्निष्टोमादीनि पराणि प्रधानानि पुण्यानि भणन्ति। यज्ञस्य परमपावनत्वमौपचारिकं वस्तुतो देवीनामकीर्तनमेव उत्तमं पुण्यमिति भावः ॥११॥

**साम्ना प्रयुक्तेन जगद्वशे स्यात् नाम्ना सदोक्तेन जगद्विनेत्री ॥**
**वेदोभयं सम्यगिदं कृती यो भवे भयं तस्य कुतोऽपि न स्यात् ॥१२॥**

साम्नेति– प्रयुक्तेन अनुष्ठितेन साम्ना प्रियवचसा प्रियवचनप्रयोगेणेत्यर्थः जगत् वशे स्यात्। सामोपायेन लोको वशयितुं शक्यः। सदा उक्तेन कीर्तितेन नाम्ना सन्ततनामसङ्कीर्तनेन जगद्विनेत्री जगन्नायिका ईश्वरी वशे

स्यात् वशंवदेति भावः। यः कृती धन्यः इदम् उभयं सम्यग्वेद जानाति, तस्य भवे जन्मनि कुतोऽपि हेतोः भयं न स्यात्। जगद्वशङ्गतं चेत् जन्मनि सुखमेव भवति, तस्मान्न ततो भयं भवति। देवी भक्तिपाशबद्धा वशंवदा यदि जन्मभयमेव न भवति। सर्वथाऽपि जन्मनो भयं न भवति जगति सामप्रयोगिणो नामभजकस्येति भावः॥१२॥

**सङ्कीर्तनात्तुष्यति शर्वयोषा　तुष्टा त्वभीष्टं न ददाति नैवा ॥**
**इमं त्वविज्ञाय जगत्युपायं　व्रजन्त्यपायं बहुधा मनुष्याः ॥१३॥**

सङ्कीर्तनादिति– शर्वयोषा शिवसुन्दरी पार्वती सङ्कीर्तनात् नामभजनात् तुष्यति तुष्टा भवति। तुष्टा सन्तुष्टा तु एषा अभीष्टम् ईप्सितं न ददातीति न ददात्येव। जगति लोके मनुष्याः इमम् उपायं कार्यसाधनम् अविज्ञायाविदित्वा बहुधा नानाप्रकारेण अपायम् अनिष्टं व्रजन्ति गच्छन्ति॥१३॥

**भाषे भुजङ्गाभरणप्रियाया　नामानि कामानितरान्विहाय ॥**
**अपि प्रपञ्चातिगघोरकृत्यं　करोतु किं मां तरणेरपत्यम् ॥१४॥**

भाष इति– भुजङ्गाभरणप्रियायाः भुजङ्गाभरणस्य नागभूषणस्य शिवस्य प्रियायाः प्रेयस्याः पार्वत्याः नामानि इतरान् कामान् विहाय परित्यज्य तदेककामो भूत्वा भाषे भणामि। प्रपञ्चातिगघोरकृत्यं प्रपञ्चमतिगच्छतीति प्रपञ्चातिगम् अचिन्त्यं घोरं चण्डं कृत्यं कर्म यस्य तमपि अचिन्त्यचण्डकर्माणमपि मां तरणेः विवस्वतोऽपत्यं वैवस्वतः अन्तकः किं करोतु? देवीनामैकरतं माम् अतिघोरकर्माणमपि न बाधितुं शक्तो यम इति भावः॥१४॥

**यज्ञेन दानैः कठिनव्रतैर्वा　सिद्धिं य इच्छेत्स ग्रहीतुमिच्छेत् ॥**
**मातुः शयानोऽङ्कतले शशाङ्कं　महेश्वरीं कीर्तयतस्तु सिद्धिः ॥१५॥**

यज्ञेनेति– यः यज्ञेन सोमयागादिना दानैः भूगवान्नादिदानैः कठिनव्रतैः तपोभिः कृच्छ्रचान्द्रायणादिभिः वा 'यज्ञो दानं तपश्चेति पावनानि मनीषिणाम्' इत्युपदिष्टैः साधनैः सिद्धिं शक्तिशान्तिसमृद्धां स्थितिम् इच्छति, स मातुः जनन्याः अङ्कतले उत्सङ्गे शयानः सन् शशाङ्कं चन्द्रम् इच्छेत्। मात्रङ्कशयितस्य बालस्य चन्द्रलब्धिरिव यज्ञादिभिः सिद्धिरिति तात्पर्यम्। महेश्वरीं कीर्तयतस्तु, देवीनाम सङ्कीर्तयत एव सिद्धिः भवतीति अध्याहार्यम्॥

अत्र यज्ञादिभिस्सिद्धीषणं मात्रङ्कशयितस्य शिशोश्चन्द्रेषणमिवेति उभयो-रुपात्तयोः अर्थयोरर्थाभेदस्सादृश्ये पर्यवस्यति। तस्मान्निदर्शनालङ्कारः। तदुक्तं जगन्नाथपण्डितैः उपात्तयोरर्थयोरर्थाभेद औपम्यपर्यवसायी निदर्शना इति ॥१५॥

**रहस्यतन्त्राणि विविच्य दूरं व्याजं विमुच्य प्रवदामि सारम् ॥**
**नामैव कामारिपुरन्ध्रिकायाः सिद्धेर्निदानं न मखो न दानम् ॥१६॥**

रहस्येति– रहस्यतन्त्राणि रहस्यानि दुर्बोधानि तन्त्राणि शास्त्राणि दूरं दीर्घं विविच्य विचार्य व्याजं कैतवं विमुच्य त्यक्त्वा निष्कपटमिति यावत् सारं मुख्यांशं प्रवदामि। किं तत्? कामारिपुरन्ध्रिकायाः शिवमहिष्याः पार्वत्याः नामैव सिद्धेः सर्वपुरुषार्थसिद्धेः निदानं मूलकारणं भवतीत्यध्याहार्यम्, न मखो यज्ञो न दानं वा ॥१६॥

**पीयूषमीषन्मधुरं भणन्ति ये नाम रामाधरपानलोलाः ॥**
**कामारिरामाह्वयगानलोलाः कवीश्वराः काञ्जिकमालपन्ति ॥१७॥**

पीयूषमिति– ये रामाधरपानलोला नाम अङ्गनाजनाधरपानसतृष्णाः प्रसिद्धाः, नाम प्राकाश्ये, ते इति अध्याहार्यम् यत्तदोर्नित्यसम्बन्धात्, पीयूषम् ईषन्मधुरं किञ्चिदेव मधुरं भणन्ति कथयन्ति। पीयूषे माधुर्यमङ्गीकुर्वन्ति, रामाधरमिव न तन्मधुरमिति तेषामनुभवः। कामारिरामाह्वयगानलोलाः कामारिरामायाः पार्वत्याः आह्वयस्य नाम्नो गाने लोलाः सतृष्णाः कवीश्वराः तत्पीयूषं काञ्जिकम् आरनालकम् आलपन्ति वदन्ति। सर्वोत्तररसातिशायि नामगानामृतमाधुर्यं ते पिबन्तीति भावः। 'आरनालकसौवीरकुल्माषाभि-षुतानि च। अवन्तीसोमधान्याम्लकुञ्जलानि च काञ्जिके' इत्यमरः ॥१७॥

**सुधाघटः कोऽप्यधरो वधूनां कविस्सुधातोयधरोऽभिधेयः ॥**
**अयं सुधावीचिवितानमाली नामप्रणादो नगकन्यकायाः ॥१८॥**

सुधेति– वधूनां स्त्रीणाम् अधरः अधरोष्ठः कोऽपि सुधाघटः पीयूषपूर्ण-कुम्भविशेषः भवतीति शेषः। कविः काव्यनिर्माता सुधातोयधरः पीयूषवर्षी मेघः अभिधेयो वाच्यः। नगकन्यकायाः पर्वतपुत्र्याः अयं नामप्रणादः नाम-

ध्वनिः सुधावीचीनां पीयूषोर्मीणां वितानानां विस्ताराणां माला पङ्क्तिरस्येति सुधावीचिवितानमाली अमृतसागर इति यावत्। कान्ताधर-कवि-देवीनाम-गत-सुधामाधुरीणां प्रमाणतोऽप्युत्तरोत्तरगरीयस्त्वं कीर्तितम्। 'ऋतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके' इत्यमरः ॥१८॥

**सुरालये भातितरां सुधैका सुधा परा वाचि महाकवीनाम् ॥**
**बिम्बाधरे कञ्जदृशां सुधाऽन्या सुधेतरा नामनि लोकमातुः ॥१९॥**

सुरेति– सुरालये स्वर्गे एका सुधा किमप्यमृतं भातितराम् अतिशयेन भाति। महाकवीनां वाचि परा अन्या सुधा अन्यदमृतं भातीति शेषः। कञ्जदृशां सुन्दरीणां बिम्बाधरे अन्या सुधा भाति। लोकमातुः नामनि इतरा सुधा। सुरालयादिषु सुधाविशेषाः वर्तन्ते। अत्र सुरालय-सुधादीनामप्रस्तुतानां लोकमातृनाम्नः प्रस्तुतस्य च एकधर्मान्वियाद्दीपकमलङ्कारः। 'वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः' इति तल्लक्षणात् ॥१९॥

**माधुर्यमाभात्यधरे वधूनां चकोरबन्धोः शकले प्रसादः ॥**
**त्रिस्रोतसो वारिणि पावनत्वं त्रयं च नाम्नि त्रिपुराम्बिकायाः ॥२०॥**

माधुर्यमिति– वधूनाम् अङ्गनानामधरे माधुर्यम् आभाति। चकोरबन्धोश्चन्द्रस्य शकले खण्डे प्रसादः प्रसन्नताऽऽभाति। त्रिस्रोतसो गङ्गायाः वारिणि तीर्थे पावनत्वं पवित्रता आभाति। त्रिपुराम्बिकायाः नाम्नि त्रयं च पूर्वोक्तमाधुर्य-प्रसाद-पावनत्वानि त्रीण्यपीत्यर्थः आभातीति शेषः। वधूजनाधर-माधुर्यादिभ्योऽपि त्रिपुराम्बिकानाम्नो वैशिष्टयाद्व्यतिरेकः अलङ्कारः ॥२०॥

**या माधुरी प्रेमभरेण दष्टे जागर्ति कान्तावरदन्तचेले ॥**
**सा दृश्यते भक्तिभरेण गीते धराधराधीशसुताभिधाने ॥२१॥**

येति– प्रेमभरेण प्रेमातिशयेन दष्टे कान्तावरदन्तचेले कान्तायाः वरे श्रेष्ठे दन्तचेले दन्तवाससि अधरे या माधुरी जागर्ति विलसति, सा माधुरी भक्तिभरेण गीते कीर्तिते धराधराधीशसुताभिधाने धराधराधीशस्य पर्वतपतेः सुतायाः उमादेव्याः अभिधाने नामनि दृश्यते ॥२१॥

**यत्ते जगल्लम्पट केऽपि वर्णा- स्तन्मेऽमृतं नाम नगात्मजायाः ॥**
**लालामयो यो मम तं ब्रवीषि सुधामयं स्त्रीदशनच्छदं त्वम् ॥२२॥**

यदिति— जगल्लम्पट जगति लोके लम्पट लोल जगद्गृध्नो ! लोकासक्तचित्तेत्यर्थः यत् नगात्मजाया पार्वत्याः नाम ते तव केऽपि वर्णाः अक्षराः केवलम् अक्षरविशेषाः प्रतिभान्तीत्यर्थः, तत् मे मम अमृतं भवति, न तु तत्रैव केऽपि वर्णा एव। यः मम लालामयः भवति, लालैव लालामयः, स्वार्थे मयट्, स्यन्दिनी 'सृणिका स्यन्दिनी लाला' इत्यमरः। मुखात् निःष्यन्दी द्रव इत्यर्थः, तं त्वं सुधामयं सुधाप्रचुर प्राचुर्ये मयट् स्त्रीदशनच्छदम् अङ्गनाधरं ब्रवीषि। एवमुभयोः रसग्रहणे विपरीतभावः ॥२२॥

**उच्चारयोच्चाटितपातकानि नामानि जिह्वे भुवनस्य मातुः ॥**
**तदा वदामो मधुचूतरम्भा- रामाधरास्ते रुचये यदि स्युः ॥२३॥**

उच्चारयेति— जिह्वे रसने ! उच्चाटितपातकानि दूरीकृतपापानि भुवनस्य मातुः जगज्जनन्याः नामानि उच्चारय भण। तदा त्वया नामसूच्चरितेषु, मधुचूतरम्भा मधु मकरन्दः चूतम् आम्रफलं रम्भा रसवती कदली रामाधर. कामिनीबिम्बाधरश्च एते ते तव रुचये अभिरुचये स्युर्यदि भवेयुर्यदि, वदामः। त्वया देवीनामसु कीर्तितेषु मध्वादयस्ते न रोचेयुरिति वयं दृढं विद्मः इति भावः। 'नगकन्यकायाः' इति च पाठः ॥२३॥

**आक्षेपमिक्षोरधिकं विधत्ते पीयूषदोषानभितोऽभिधत्ते ॥**
**कान्ताधरारब्धदुरन्तवादः कपर्दिकान्तावरनामनादः ॥२४॥**

आक्षेपेति— कान्ताधरारब्धदुरन्तवादः कान्ताधरेण अङ्गनाधरोष्ठेन आरब्धो दुरन्तवादो दुःखान्तवादो यस्य सः, कपर्दिकान्तावरनामनादः पार्वतीप्रशस्तनामध्वनिः, इक्षोः रसवत इक्षुखण्डस्याधिकम् आक्षेपं निषेधं विधत्ते करोति। अभितः सर्वतः पीयूषदोषान् अभिधत्ते अमृतस्य दोषान् ब्रूते। देवीनामनादामृतस्य कान्ताधरेणौपम्यवादो दुःखान्त एव। नामामृतेन पराभूतत्वात्तस्येति भावः ॥२४॥

**विश्वासहीनैस्सुतरामबोध्यं नामानुभावं नगकन्यकायाः ॥**
**जयन्तु सिद्धैरपि गीयमानं गायन्त्य एता उपजातयो नः ॥२५॥**

विश्वासेति– विश्वासहीनैः श्रद्धाशून्यैः सुतरामबोध्यम् अग्राह्यं, सिद्धैरपि गीयमानं नगकन्यकायाः पर्वतपुत्र्याः नामानुभावं नामप्रभावं गायन्त्यः कीर्तयन्त्यः नः अस्माकम् एता उपजातयः उपजातिवृत्तबद्धाः स्तुतयः जयन्तु ॥२५॥

एकत्रिंशः स्तबकः सव्याख्यः समाप्तः ॥

# द्वात्रिंशः स्तबकः

द्वात्रिंशेऽस्मिन् स्तबके योगिनो भक्तस्य च भेदम् उपन्यस्य अध्यात्मं हवन-भेदान् निरूपयति ॥

**विदधातु सम्पदं मे सकलजगन्नाथनयनहारिज्योत्स्नः ॥**
**शीतोऽन्धकारहारी हासशशी कश्चिदङ्कुरहितो मातुः ॥१॥**

विदधात्विति— सकलजगन्नाथनयनहारिज्योत्स्नः सकलजगन्नाथस्य सर्वलोकेश्वरस्य नयनान्यपहरति इति नयनहारिणी ज्योत्स्ना चन्द्रिका यस्य सः, मनोहरतया सर्वेश्वरनेत्रप्रीणनचन्द्रिकेति यावत्, अन्धकारहारी शीतः शीतलः तापहर इति यावत्, तिमिरध्वंसी अविद्यापहः कश्चित् अङ्कुरहितः अकलङ्कः मातुरुमायाः हासशशी हासः शशीव चन्द्र इव मे मम सम्पद विदधातु। हासशशीत्यत्रोपमितसमासः पूर्वपदार्थप्राधान्यात्। हासस्य सम्पद्विधायकत्वोपपत्तेः। अङ्कुरहितः शशीत्यनेन व्यतिरेकः। अत्र विषयिणः शशिनः विषयभूतहासात्मकतया परिणमनादेव सम्पद्विधानरूपप्रकृतोपयोगित्वसिद्धेः परिणामालङ्कारः ॥१॥

**करुणारसार्द्रहृदया हृदयान्तरनिर्यदच्छवीचिस्मेरा ॥**
**प्रमथेश्वरप्रियतमा पादप्रेष्यस्य भवतु कल्याणाय ॥२॥**

करुणेति— करुणारसार्द्रहृदया दयाभरितचित्ता, हृदयान्तरनिर्यदच्छवीचिस्मेरा हृदयान्तरान्निर्यन्तीभिः अच्छाभिः वीचिभिः स्मेरा उल्लसिता प्रमथेश्वरप्रियतमा भूतेशप्रेयसी पार्वती पादप्रेष्यस्य चरणकिङ्करस्य कल्याणाय मङ्गलाय भवतु कल्पताम्। हृदयान्तरेत्यत्र उत्तरङ्गितदयारसः हृदयात् वदने विजृम्भते अतः स्मेरत्वं तस्य बोध्यम् ॥२॥

**कारणकार्यविभेदाद् रूपद्वितयं तवाम्ब यदृषिप्रोक्तम् ॥**
**तत्रैकं भर्तुमिदं विहर्तुमन्यत्तु भूतभर्तुर्ललने ॥३॥**

कारणेति— अम्ब ! कारण-कार्यविभेदात् कारणं कार्यं च कारण-कार्ये

तयोः विभेदात् भेदात् ऋषिप्रोक्तम् ऋषिभिः द्रष्टृभिः प्रोक्तं यत् तव रूपद्वितयं रूपस्य द्वौ अवयवौ अस्येति द्वितयं द्वे रूपे इत्यर्थः, भवतीत्यध्याहार्यम्। भूतभर्तुः भूतेशस्य ललने सुन्दरि पार्वति, तत्र रूपद्वितये एकं रूपमिदं जगद्भर्तुं धातु भवतीति शेषः। अन्यद्रूपं तु विहर्तुं विलासाय भवति कारणरूपम् इदं भर्तुं, कार्यरूपमिह विहर्तुमिति भावः ॥३॥

**श्रोतुं स्तोत्रविशेषं　भक्तविशेषं च बोद्धुमयमीदृगिति ॥**
**दातुं च वाञ्छितार्थं तव मातश्चन्द्रलोकरूपं भवति ॥४॥**

श्रोतुमिति– मातः अम्ब ! स्तोत्रविशेषं श्रोतुं भक्तैर्गीतां स्तुतिमाकर्णयितुम्, अयम् ईदृक् अयमिव दृश्यत इति ईदृक् अयं भक्तः एवंविध इति भक्तविशेषं याथातथ्येन बोद्धुं ज्ञातु च वाञ्छितार्थम् अभीप्सितम् अर्थं दातुं च तव चन्द्रलोकरूपं कार्यरूपं भवति। अध्यात्मं चन्द्रलोकः सहस्रारमिति त्ववधेयम्। 'चारुयुवतिरूपं भवति' इति पाठान्तरं भवति ॥४॥

**कीशकिशोरन्यायात्　कारणरूपं तवाम्ब योगी धत्ते ॥**
**ओतुकिशोरन्यायाद्　भक्तं परिपासि कार्यरूपेण त्वम् ॥५॥**

कीशेति– अम्ब ! कीशकिशोरन्यायात् मर्कटशिशुन्यायेन 'मर्कटो वानरः कीशः' इत्यमरः। तव कारणरूपं मूलस्वरूपं योगी धत्ते धारयते। मर्कटशिशुः स्वप्रयत्नान्मातरं गृह्णाति, तद्वत् स्वात्मबलेन योगी तव स्वरूपं गृह्णाति। ओतुकिशोरन्यायात् मार्जारशिशुन्यायेन, 'ओतुर्बिडालो मार्जारः' इत्यमरः। त्वं कार्यरूपेण स्वीयेन पूर्वश्लोकोक्तेन चन्द्रलोकरूपेण चारुयुवतिरूपेण वा भक्तं परिपासि। यथा मार्जारी निजं शिशु गृहीत्वा रक्षति तथा भक्तस्य भारं देव्येव बिभर्ति। भक्तस्य योगिनश्च भेदं निरूपयितु इन्द्राणीसप्तशत्यां गीतं मदलेखाद्वयमिहोदाहरामः— 'गन्तव्यं स्वरधीशे निश्शेषार्पणशूरम्। बिभ्राणा नयसि त्वं मार्जारीव किशोरम्' ॥ 'गृह्णन्नम्बरनाथामम्बामश्लथबन्धः। कीशस्येव किशोरो योगी गच्छति गम्यम्' ॥ इति ॥५॥

**दृढधारणा न चेत्त्व-　च्च्यवते योगी महेशनयनज्योत्स्ने ॥**
**नायं ममेति भाव-　स्तव यदि सद्यः सवित्रि भक्तं त्यजसि ॥६॥**

दृढेति– महेशनयनज्योत्स्ने ईश्वरनयनचन्द्रिके भगवति ! दृढधारणा दृढा

अप्रमत्ता धारणा धृतिः न चेत् न भवति चेत् योगी त्वत् त्वत्तः च्यवते च्युतो भवति। स्वल्पेनापि प्रमादेन स्वबलावलम्बिनो योगिनः भ्रंशो भवति। सवित्रि मातः! अयं मम न, मदीयो न भवतीति यदि भावो भवति, सद्य. सपदि भक्तं त्यजसि, यः सम्पूर्णम् आत्मार्पणं न करोति स भक्तः सवित्र्या नायं मदीय इति त्यक्तु शक्यः। आत्मार्पणशूरे भक्ते विषये नायं मदीय इति भावो न जायते मातुः ॥६॥

**शिथिलधृतिर्योगी स्याद् बाह्यैर्विषयैर्नितान्तमाकृष्टो यः ॥**
**स्वीयमतिर्लुप्यति ते भक्तेऽहन्ताप्रसारकलुषे मातः ॥७॥**

शिथिलेति— मातः! शिथिलधृतिः शिथिला अदृढा धृतिः धारणा यस्य स., यो योगी बाह्यैर्विषयैः शब्दादिभि. भोग्यैर्नितान्तमधिकमाकृष्टः गृहीतो भवतीति शेषः बहिराकृष्टस्य योगिन. धारणा दृढा न भवति. अतो भ्रंशो भवतीति भावः। अहन्ताप्रसारकलुषे अहन्तायाः अहङ्कृतेः प्रसारेण व्यापनेन कलुषे अशुचौ भक्ते ते तव स्वीयमतिः स्वीय इति मतिः धीः लुप्यति लुप्ता भवति। पूर्णसमर्पणलक्षणाया. भक्तेर्लोपजननी अहन्ता। सत्या तस्या मातु. भक्तविषये स्वीयताधीर्विरमति। एव भक्तस्य भ्रंशो भवति ॥७॥

**साहङ्कृतिर्न भक्तिः सबाह्यविषया धृतिर्न सर्वेश्वरि ते ॥**
**अविजानन्तावेतद् भक्तो योगी च नैव सिद्धौ स्याताम् ॥८॥**

साहङ्कृतिरिति— सर्वेश्वरि! अहङ्कृत्या सह वर्तते इति साहङ्कृति. ते तव भक्तिः न भवति। बाह्यविषयैः सह वर्तते इति सबाह्यविषया ते तव धृतिर्धारणा न भवति। एतत्तत्त्वम् अविजानन्तौ अबुद्धवन्तौ भक्तो योगी च सिद्धौ नैव स्याता भवेताम्। भक्ति. अहङ्कृत्या असम्पृक्ता धृतिः बाह्यविषयैश्चेति भक्तो योगी च जानीयाताम्। न चेत् सिद्धि न द्रक्ष्यतः इति भावः ॥८॥

**व्यक्तित्वादपि यस्य प्रियं त्वदीयं सवित्रि पादाम्भोजम् ॥**
**सोऽद्भुतशक्तिर्भक्तो भगवति किं किं करोति नास्मिन् जगति ॥९॥**

व्यक्तित्वादिति— सवित्रि मात.! यस्य व्यक्तित्वादपि स्वस्य पृथगात्मत्वादपि त्वदीयं तवेदं पादाम्भोजं पादारविन्द प्रियं भवति, सः भक्तः अद्भुत-

शक्तिः अद्भुताः आश्चर्यकर्यः शक्तयः यस्य स सन् अस्मिन् जगति लोके किं किं न करोति ? सर्वं कर्तुम् अकर्तुम् अन्यथा कर्तुं वा प्रभवतीति भावः ॥९॥

**व्यक्तित्वलोभविवशे सिद्धः कामोऽपि भवति समवच्छिन्नः ॥**
**प्राप्तोऽपि सलिलराशिं सलिलानि घटः कियन्ति सङ्गृह्णीयात् ॥१०॥**

व्यक्तित्वेति– व्यक्तित्वलोभविवशे व्यक्तित्वे स्वीयपृथगात्मत्वे यः लोभः अभिलाषः तेन विवशे पराधीने जने कामः मनोरथः सिद्धोऽपि पूर्णोऽपि समवच्छिन्नः सर्वथा परिच्छिन्नो मितो भवतीति यावत्। सलिलराशिं सागरं प्राप्तोऽपि घटः कुम्भः कियन्ति किम्प्रमाणानि सलिलानि जलानि सङ्गृह्णीयात् आददीत ? 'स्वल्पमेवाम्बु लभते प्रस्थं प्राप्यापि सागरम्' इति प्रसिद्धोऽयं न्यायः। सर्वकामसम्पूर्तीनां निधानभूतं देवीप्रसाद प्राप्यापि अहङ्कारलोभिनः कामविशेषः पूर्णो भवन्नपि अवच्छिन्न एव भवति न तु परिच्छेदर्राहितस्य प्रसादमाहात्म्यस्य वैभवं गृह्णाति। अवज्ञालङ्कारः। अन्यस्य कामस्य अन्यदीयदेवीप्रसादगुणप्रयुक्तगुणाधानाभावादवज्ञा। 'ताभ्या तौ यदि न स्यातामवज्ञालङ्कृतिस्तु सा' इति चन्द्रालोकः। (ताभ्या गुणदोषाभ्यां तौ गुणदोषौ) ॥१०॥

**जीवन्नेव नरो यः सायुज्यं ते प्रयाति शम्भोः प्रमदे ॥**
**सर्वे कामास्तस्य प्रयान्ति वशमाशु वीतविविधभ्रान्तेः ॥११॥**

जीवन्निति– शम्भोः शिवस्य प्रमदे कान्ते भगवति ! यो नरः जीवन्नेव ते तव सायुज्यं सयुक्त्वं प्रयाति गच्छति जीवन्मुक्तो भूत्वा त्वया सन्ततं युक्तो भवतीत्यर्थः। वीतविविधभ्रान्तेः वीता विगता विविधा नानाप्रकारा भ्रान्तिः मिथ्याध्यवसितिः यस्मात् तस्य वशं सर्वे कामाः मनोरथाः प्रयान्ति गच्छन्ति। जीवन्मुक्तस्य त्वत्सायुज्यसम्पन्नस्य वशित्वं सिद्धं भवतीति भावः। 'आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्। तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी॥' इति हि स्मर्यते ॥११॥

**व्यक्तित्वं तुभ्यमिदं मनीषया मे प्रदत्तमधिकारिण्या ॥**
**बहुकालभोगबलतो विवदति देहो मदम्ब किं करवाणि ॥१२॥**

व्यक्तित्वेति– मदम्ब मम मातः ! अधिकारः योग्यता अस्या अस्तीति

अधिकारिणी तया मम मनीषया बुद्धया इदं मदीयं व्यक्तित्वं पृथगात्मत्वं प्रदत्तं समर्पितम्। बुद्धेः सस्कारविशेषजन्यो बलविशेष एव व्यक्तित्वार्पणेऽधिकारः। देहस्तु तां बुद्धिं नानुसरतीति तत्र हेतुमाहोत्तरार्धेन। देहः अयं पाञ्चभौतिकपिण्डः बहुकालभोगबलतः चिरन्तनभोगपरिचयवशात् हेतोरित्यर्थः विवदति विवादं कुरुते व्यक्तित्वमर्पयितुं बुद्धिं नानुवर्तते। किं करवाणि? तत्र त्वमेव शरणमिति भावः। 'विभाषा विप्रलापे' इति विप्रलापार्थकस्य विपूर्वकस्य वदतेरात्मनेपदविकल्पः। तस्माद्विवदतीति साधु॥१२॥

**स्थूलेन वर्ष्मणा सह सूक्ष्मा कलहं मतिर्न कर्तुं शक्ता॥**
**सुतरां बलवति मातर्बलाद् गृहाण स्वयं त्वमस्मात्स्वीयम्॥१३॥**

स्थूलेति– स्थूलेन पुष्टेन वर्ष्मणा वपुषा सह सूक्ष्मा मतिर्धीः कलहं विवादं कर्तुं न शक्ता समर्था भवति। मातः! सुतरामत्यन्तं बलवति बलाढ्ये, स्वयं त्वम् अस्मात् मत्तः स्वीयं त्वदीयं यद्वर्तते तत् बलात् प्रसह्य गृहाण आदत्स्व। व्यक्तित्वार्पणे मया बुद्धिः त्वदधीना कृता। शरीरं तु तन्न सहते, तस्मात्त्वमेव मदीय शरीरगतं व्यक्तित्वं च बलात्कृत्य कृपां कुरु॥१३॥

**सर्वेषां हृदि यस्मात्त्वमसि प्राणात्मिकाम्ब हेतोस्तस्मात्॥**
**अखिलप्राण्याराधनमाराधनर्निविशेषमगपुत्रि तव॥१४॥**

सर्वेषामिति– अम्ब! यस्माद्धेतोः त्वं सर्वेषां भूतानां हृदि हृदये प्राणात्मिका प्राणः आत्मा स्वरूपं यस्याः सा प्राणात्मा सैव प्राणात्मिका असि, तस्माद्धेतोः अगपुत्रि पर्वतपुत्रि! अखिलप्राण्याराधनं सर्वप्राणिनां प्रीणनं तवाराधनर्निविशेषं त्वदाराधनादनतिरिक्तं भवति। सर्वेषु प्राणस्वरूपेणासि, ततः प्राणिनाम् आराधनं त्वदाराधनमेवेति असंशयम्॥१४॥

**जुह्वति केऽपि कृशानौ तस्मात्प्राप्तिस्तवेति सम्पश्यन्तः॥**
**अपरे प्राणिषु जुह्वति साक्षात्प्राणात्मिकाऽसि तेष्वन्तरिति॥१५॥**

जुह्वतीति– केऽपि जनाः कृशानौ अग्नौ जुह्वति हवनं कुर्वन्ति। तस्मात् अग्नौ हवनात् तव प्राप्तिः लब्धिः भवतीति सम्पश्यन्तः ते तथा जुह्वतीति

सम्बन्धः। अग्नौ हुतं त्वां प्राप्नोतीति दृष्ट्वा अग्निहोत्रं कुर्वन्तीत्यर्थः। अपरे अन्ये प्राणिषु प्राणवत्सु जन्मिषु जुह्वति। तेषु प्राणिषु अन्तः अन्तरे साक्षात् प्रत्यक्षं प्राणात्मिका प्राणस्वरूपिणी असीति हेतोः प्राणिषु जुह्वति इति सम्बन्धः। इदमेकं प्राणाग्निहोत्र भवति ॥१५॥

**प्राणिष्वपि यः प्राणं भूतादिमनादिमात्मनि स्थितमनघम् ॥**
**सततमुपास्ते योगी तस्मिन् होमेन तेऽम्ब तृप्तिस्सुलभा ॥१६॥**

प्राणिष्विति– भूतादि भूतानाम् आदिं कारणं, अनादिम् अविद्यमान-कारणम् आत्मनि स्थितम् अनघं पवित्रं निर्लेपमिति यावत्, प्राणिषु भूतेषु प्राणं योऽपि योगी सततम् अनवरतम् उपास्ते, तस्मिन् योगिनि विषये, होमेन प्राणोपास्तिरूपेण हवनेन, अम्ब ! ते तृप्तिः सुलभा भवतीति शेषः ॥१६॥

**आत्मनि योऽम्ब श्रेष्ठे प्राणे प्राणान् जुहोति दहराभिमुखः ॥**
**त्वद्रूपे हतपापे तेन जितं सकलमीशचित्तारामे ॥१७॥**

आत्मनीति– ईशचित्तारामे ईशचित्तम् ईश्वरहृदयम् आरामः विहारो-पवनं यस्यास्तस्याः सम्बुद्धिः अम्ब ! यः दहराभिमुखः हृदयाकाशाभिमुखः सन् त्वद्रूपे तव स्वरूपभूते हतपापे अपहतपाप्मनि आत्मनि स्वात्मनि श्रेष्ठे प्राणे मुख्यप्राणे प्राणान् जुहोति, तेन पुण्यात्मना सकलं जितं भवति ॥१७॥

**उपसंहृतमखिलेभ्यो विषयेभ्यो निर्निमेषमन्तःकृष्टम् ॥**
**हृदि दृढपदेन चक्षु- स्त्वद्रूपे हूयते मदम्ब प्राणे ॥१८॥**

उपसंहृतमिति– मदम्ब मम मातः ! अखिलेभ्यो निखिलेभ्यो विषयेभ्यः बाह्येभ्यः रूपेभ्यः उपसंहृतं निवारितं निर्निमेषं निमीलनरहितम् अन्तःकृष्टम् अन्तर्मुखं कृतम् इत्यर्थ., चक्षुर्नेत्रं हृदि हृदये दृढपदेन दृढं गाढं पदं स्थान यस्य तेन योगिना त्वद्रूपे तव स्वरूपे प्राणे हूयते। हृदये लब्धस्थितिकः योगी शून्यं निर्विषयं निमेषवर्जम् अन्तर्मुखदर्शनं त्वद्रूपे प्राणे जुहोति। इदं दहर-निष्ठस्य प्राणाग्निहोत्रं भवति ॥१८॥

**अन्तस्स्वरं निगूढं श्रेष्ठप्राणस्य देवि तव भागस्य ॥**
**शृण्वदिव प्रणवाख्यं श्रवणं तत्रैव भवति जगदम्ब हुतम् ॥१९॥**

अन्तरिति– अम्ब देवि ! तव भागस्य अंशस्य श्रेष्ठप्राणस्य, अग्नेर्विष्फुलिङ्गश्रुतेः मुख्यप्राणस्य ब्रह्मणोंशत्वं सिद्धम्। तस्मात् इह देव्याः भागः श्रेष्ठः प्राण उक्तः। तस्य निगूढं नितरां गुप्तं प्रणवाख्यम् अन्तस्स्वरम् अन्तरनादं शृण्वदिव आकर्णयदिव श्रवण श्रोत्रेन्द्रियं भवतीत्यध्याहार्यम्। तत्रैव श्रेष्ठप्राणान्तःस्वरे जगत् हुत भवति। सर्वस्या अपि जगद्विषयकवृत्तेः शब्दरूपेणान्तरवस्थानात् सर्वशब्दमूलप्रकृतौ प्रणवाख्ये प्राणस्यान्तस्स्वरे जगतो हवनं भवतीत्यभिप्रायः। इद च प्राणोद्गीथोपासनमाहुरौपनिषदाः ॥१९॥

**सर्वेषां मन्त्राणां स्तोत्राणां चेशचित्तनाथे प्रकृतौ ॥**
**गूढं सदा स्वरन्त्यां प्राणन्त्यां त्वयि जुहोति मौनी वाचम् ॥२०॥**

सर्वेषामिति– ईशचित्तनाथे शिवहृदयेश्वरि ! सर्वेषां मन्त्राणा स्तोत्राणा च प्रकृतौ मूलस्वरूपभूताया गूढ गुप्त सदा स्वरन्त्या नदन्त्या प्राणन्त्या श्वसन्त्या त्वयि देव्यां मौनी शान्तिसम्पन्नः वाच जुहोति। सर्वासा वाचामुपसंहारस्तत्प्रकृतौ प्राणोद्गीथे भवति। इदं मन्त्रोद्गीथोपासनमाहु ॥२०॥

**देहे स्खलति मनश्चेत् विषयेषु हुतं दधाति विषयात्मत्वम् ॥**
**आवृत्तं यदि देहाद् सूक्ष्मायां त्वयि हुतं त्वदाकृति भवति ॥२१॥**

देह इति– 'मनः देहे स्खलति चेत्' मानसम् अन्तरात् च्युत सत् शरीरगतं भवति चेत् विषयेषु शब्दरूपादिषु हुत तन्मनः विषयात्मत्व विषयरूपता दधाति बिभर्ति। देहात् शरीरात् आवृत्त निवृत्य अन्तर्मुख जातं तदेव सूक्ष्मायां त्वयि देव्या हुत त्वदाकृति तव आकृतिरिवाकृतिः यस्य तत् त्वद्रूप भवति। बहिः विषयग्रस्तं मनो विषयरूपम्, अन्तः त्वद्गत त्वद्रूपं च भवतीत्यर्थः ॥२१॥

**त्वग्रसनघ्राणाना- मनुभूतीः प्राणशक्तिसात्कुर्वाणः ॥**
**कं नार्पयते भोगं भगवति ते सर्वलोकपार्थिववनिते ॥२२॥**

त्वगिति– सर्वलोकपार्थिववनिते सर्वलोकेश्वरकान्ते भगवति ! त्वग्रसनघ्राणाना त्वचः स्पर्शेन्द्रियस्य, रसनस्य जिह्वेन्द्रियस्य, घ्राणस्य गन्धेन्द्रियस्य चानुभूतीः प्राणशक्तिसात् प्राणशक्त्यधीनं कुर्वाण योगी क भोगं ते तुभ्यं न

अर्पयते ? सर्वमपि भोगम् अर्पयते। सर्वासामनुभूतीनां प्राणशक्तिरेवाधारभूता प्रकृतिर्भवति। अतस्तदधीनाः क्रियन्ते सर्वा अनुभूतयः। प्राणशक्तेस्त्वत्स्वरूपत्वात् त्वय्येव सर्वभोगसमर्पणं करोति योगीत्याशयः ॥२२॥

**गच्छन्कुर्वन्विसृजन् रममाणश्चाम्ब सकललोकाधीशे ॥**
**यः केवलां क्रियामपि चिन्तयते तेन नित्ययज्ञः क्रियते ॥२३॥**

गच्छन्निति– सकललोकाधीशे, सर्वलोकेश्वरि अम्ब ! यः गच्छन् पद्भ्या क्रममाणः, कुर्वन् हस्ताभ्या कर्माणि कुर्वन्, विसृजन् पायुनोत्सृजन्, रममाणः सुरते प्रवर्तमानश्च, केवला क्रिया गमनादिरमणान्तेषु पादादिकर्मेन्द्रियव्यापारेषु यत् क्रियासामान्य वर्तते तदित्यर्थः, चिन्तयते अविशिष्टा क्रिया ध्यायनि, तेन पुरुषेण नित्ययज्ञः क्रियते तस्य जीवनमेव यजनं भवति। तस्मात्स नित्ययाजी ॥२३॥

**सर्वेषामग्नीनां प्राणाग्निस्तव विभूतिरुक्तः श्रेष्ठः ॥**
**तस्मिन्हुतं तु सुहुतं द्रव्याणि धियः क्रियाश्च मन्त्रः प्रणवः ॥२४॥**

सर्वेषामिति– सर्वेषामग्नीनां श्रौताना स्मार्तानां भौतिक-वैद्युत-सौराणां वा तव विभूतिः कला प्राणाग्निः श्रेष्ठ उक्तः। तस्मिन् प्राणाग्नौ मुख्यप्राणे इत्यर्थः हुतं तु सुहुतं सुष्ठु हुतं भवति। धियः बुद्धयः क्रियाः कर्माणि च द्रव्याणि होमद्रव्याणि भवन्ति। मन्त्रस्तु प्रणवः योऽन्तःस्वरन्नुद्गीथ उच्यते ॥२४॥

**आर्यागीतीनामय- मधरीकृतमधुसुधादिमाधुर्यरसः ॥**
**वर्गो गणपतिवदना- न्निष्क्रान्तो भवतु शर्वसुदृशः प्रीत्यै ॥२५॥**

आर्येति– गणपतिवदनात् गणपतेः कवेः वदनात् मुखात् निष्क्रान्तः, अधरीकृतमधु-सुधादिमाधुर्यरसः अधरीकृताः नीचैः कृता मधु-सुधादीना मकरन्दामृतादीनाम् आदिशब्देन द्राक्षादयो ग्राह्याः, माधुर्यरसः माधुरीद्रवः येन सः आर्यागीतीनाम् एतद्वृत्तनिबद्धानां नुतीनां वर्ग. गण. शर्वसुदृश. शर्वाण्याः पार्वत्याः प्रीत्यै मुदे भवतु कल्पताम् ॥२५॥

इति श्रीमहर्षिरमणभगवत्पादान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपति-मुनेः कृतावुमावहस्रे द्वात्रिंशः स्तबकः समाप्तः ॥

समाप्तं च अष्टमं शतकम् ।

प्रभाख्या व्याख्या च समाप्ता ॥

# त्रयस्त्रिंशः स्तबकः

त्रयस्त्रिंशेऽस्मिन् स्तबके मन्त्रमूर्तिभेदानां स्वरूपफलोपन्यासेन तज्जपानां मन्त्रयोगे पर्यवसानं प्रदर्श्य, जपो योगोऽर्पणम् इति त्रयं च प्रतिपादयति ॥

**सुधां किरन्तोऽखिलतापहारिणीं तमो हरन्तः पटलेन रोचिषाम् ॥**
**श्रियं दिशन्तो दिशि दिश्यसङ्क्षयां जयन्ति शीताद्रिसुतास्मिताङ्कुराः ॥१॥**

सुधामिति– अखिलतापहारिणीं सर्वदुःखशमनी तापत्रयशमनीं पक्षे घर्मोपशमनी सुधां किरन्तः विक्षिपन्तः, रोचिषां महसां पटलेन समूहेन तमः तिमिरं बाह्यं पक्षे आन्तरम् अज्ञानं हरन्तः निवारयन्तः दिशि दिशि सर्वत्र दिक्षु असङ्क्षयां क्षयरहितां श्रियं शोभां पक्षे सम्पदं दिशन्तः प्रदर्शयन्तो शीताद्रिसुतास्मिताङ्कुराः पर्वतराजपुत्र्या मन्दहासाः जयन्ति उत्कर्षेण वर्तन्ते। सुधा-तमः-श्रीपदेषु श्लेषः। तेन स्मिताङ्कुरार्थसामर्थ्यात् शीताद्रिसुतावदनस्य चन्द्रत्वमाक्षिप्यते। श्लिष्टं रूपकमलङ्कारः ॥१॥

**कृपाकटाक्षस्तव केन वाऽऽप्यते महेशशुद्धान्तपुरन्ध्रि कर्मणा ॥**
**निरन्तरं मन्त्रजपेन वा मते- र्विशोधनेनोत मनोर्पणेन वा ॥२॥**

कृपेति– महेशशुद्धान्तपुरन्ध्रि महेश्वरान्तःपुरमहिषि ! तव कृपाकटाक्षः करुणादृगन्तपातः केन वा कर्मणा अनुष्ठितेन आप्यते लभ्यते ? निरन्तरम् अनवरतं मन्त्रजपेन मन्त्रपुरश्चरणेन वा, उत मतेः विशोधनेन चित्तशोधनेन वा, मनोर्पणेन वा, आहोस्वित् चित्तस्यैव सम्पूर्णार्पणेन वा इति विकल्पेन प्रश्नः क्रियते। एवम् उपायत्रयम् उपन्यस्य, तस्य प्रत्येकं फलमाह विशोधनादित्यादिना ॥२॥

**विशोधनाद्देवि मतेः प्रगृह्यसे मनोर्पणेनेशवधु प्रसीदसि ॥**
**जपेन मन्त्रस्य शुभस्य वर्धसे जगत्त्रयीधात्रि कलेबरान्तरे ॥३॥**

विशोधनादिति– जगत्त्रयीधात्रि त्रिलोकभर्त्रि देवि ! मतेः बुद्धेः विशो-

धनात् प्रगृह्यसे प्रकर्षेण गृह्यसे, विचारेण मतौ परीक्षितायाम् असद्वृत्तय: पलायिता: भवन्ति सद्वृत्तिरेका बोधस्वरूपिण्यवशिष्यते। तत्र बोधे देवी गृहीता भवति। ईशवधु ईश्वरकान्ते! मनोर्पणेन मनस एव सम्पूर्णदानेन प्रसीदसि प्रसन्ना भवसि। मनोर्पणेन देव्यामेव सर्वो भारो न्यस्तो भवति। तत: प्रीता माता प्रसन्ना स्वयं कर्तव्यं कर्तु भारं वहतीत्यभिप्राय:। शुभस्य मन्त्रस्य महामन्त्रस्य श्रीविद्यादे: पञ्चाक्षराष्टाक्षरादे: प्रणवस्य वा न तु क्षुद्र-मन्त्रस्य जपेन कलेबरान्तरे जप्तु: शरीरान्तरे वर्धसे वृद्धिं प्राप्नोषि। सोऽयं जपमहिमा येन जप्तु: शरीरे भगवती पुरश्चरणबलानुगुण्येन स्वयम् अभि-व्यज्यते ॥३॥

**मन:प्रतापस्य भवत्यसंशयं प्रवर्धनं वैदिकमन्त्रचिन्तनम् ॥**
**प्रशस्यते प्राणमह:प्रदीपने दयान्विते तान्त्रिकमन्त्रसेविता ॥४॥**

मन इति– दयान्विते कृपालो अम्ब! वैदिकमन्त्रचिन्तनं वैदिकानां तत्सवितुरित्यादीनां मन्त्राणाम् ऋषिदृष्टानां चिन्तनं ध्यानं मन:प्रतापस्य चित्त-प्रभावस्य प्रवर्धनं भवति, असंशयं नेह सन्देहो भवति। वेदमन्त्राणां वाक्य-बन्धात्मकतया तान्त्रिकमन्त्रापेक्षया विशिष्टम् अर्थप्राधान्यं बोध्यम्। मन्त्रा-र्थविचाराद्बोधो जायते । अत: मन:प्रतापवर्धनम् इत्युक्तम्। तान्त्रिकमन्त्र-सेविता तान्त्रिकमन्त्रान् श्रीविद्यादीन् सेवितुं शीलमस्येति तान्त्रिकमन्त्रसेवी तस्य भाव: तान्त्रिकमन्त्रसेविता तान्त्रिकमन्त्रोपासनमित्यर्थ:, प्राणमह:प्रदीपने प्राणमहस: प्राणतेजस: प्रदीपने प्रज्वलने विषये प्रशस्यते प्रशस्ततया कीर्त्यते इति भाव:। तान्त्रिकमन्त्राणा ह्रीङ्कारादिबीजाक्षराणां पुरश्चरणेन प्राण-नाडीविशुद्धिद्वारा नादाभिव्यक्तौ जातायां प्राणप्रभावो विजृम्भते। तथा च प्रागुक्तम्— 'वैदिकमन्त्रे भाववती तान्त्रिकमन्त्रे नादवती' इति (स्त. २० श्लो. १७) ॥४॥

**तवाम्बिके तान्त्रिकमन्त्रमुत्तमं स्तवातिगं य: कनकाङ्गि सेवते ॥**
**विचित्रयन्त्रादिव वैद्युतं मह- स्ततो विनिर्यद् भुवनं विगाहते ॥५॥**

तवेति– कनकाङ्गि स्वर्णशरीरे अम्बिके! य: स्तवातिगं स्तोत्रातीतम् उत्तमं श्रेष्ठं तव तान्त्रिकमन्त्रं सेवते उपास्ते, तत: तस्मादुपासकात् विचित्र-

यन्त्रादिव अद्भुतयन्त्रादिव वैद्युतं विद्युनस्तटिन इदं महो ज्योतिः विनिर्यत् विनिर्गच्छद् भुवनं जगत् विगाहते विशिष्य प्रविशति। पूर्वश्लोके तान्त्रिक-मन्त्रस्य प्राणज्वलने प्रशस्तिरुक्ता। सेह उपमया व्याख्याता। यथा लोके भौतिकसामग्रीभिरद्भ्यो विद्युच्छक्ति जनयितु यन्त्रविशेषो निर्मीयते तस्मात् यन्त्राद्विद्युच्छक्तिराविष्कृता बहिर्जगति प्रसरति, तथा तान्त्रिकमन्त्रसाधनेन साधकात् वैद्युतज्योतिराविष्कृतं सत् बहिः सर्वतः प्रसरतीत्यभिप्रायः ॥५॥

**न तस्य चेतो विकृतेर्वशे भवे- न्न तस्य दृष्टिर्विषयैर्विकृष्यते ॥**
**न तस्य रोगैरपकृष्यते वपुः सवित्रि यस्ते भजते महामनुम् ॥६॥**

नेति– सवित्रि मातः ! यः ते तव महामनु महामन्त्रं भजते सेवते, तस्य चेतः मनः विकृतेर्वशे न भवेत् विकाराधीनं न स्यात्, न विक्रियत इति यावत् धीरो भवति इत्याशयः। तस्य दृष्टि. विषयैः न विकृष्यते, दृष्टिरिति बुद्ध्युपलक्षणं तस्य बुद्धिं बलात् आक्रष्टु न प्रभवन्ति। तथाविधो बलवान् स भवति इत्याशयः। तस्य वपुः शरीरं रोगैः व्याधिभिर्नापकृष्यते। व्याधि-भिरबाधितं भवति तस्य शरीरम्। योगाग्निमयं भवति तस्य देहमिति भावः। 'न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम्' इति हि श्रूयते। कस्तर्हि स महामनुः यस्य साधनेन चेतोविकार-विषयाकृष्टि-रोगाणां तिरस्कारो भवति? आहोत्तरश्लोकेन ॥६॥

**स्मरन्ति मायां गगनाग्निशान्तिभिः सहाच्छभासा सहिताभिरम्बिके ॥**
**तथा रसज्ञां द्रुहिणाग्निशान्तिभि- र्भणन्ति दोग्ध्रीं तु खषष्ठबिन्दुभिः ॥७॥**

स्मरन्तीति– अम्बिके अम्ब ! अच्छभासा शुभ्रकिरणेन चन्द्रेण पूर्णानु-स्वारेणेति यावत्, सहिताभिः युक्ताभिः गगनाग्निशान्तिभिः गगनम् आकाशो हकारः, अग्निः रेफः, शान्तिरीकारः आभिः सह मायां स्मरन्ति अनुस्वार-युतहवर्ण-रवर्ण-ईवर्णैः ह्रीम् इत्यक्षरेण इत्यर्थः मायां वदन्ति। मायाबीजं ह्रीङ्कारमाहुः। तथा अच्छभासा चन्द्रेण अनुस्वारेण सह द्रुहिणाग्निशान्तिभिः द्रुहिणो ब्रह्मा ककारः अग्निः रेफः शान्तिरीकारः आभिः ककार-रेफ-ईकारैः क्रीम् इत्यक्षरेण रसज्ञाम् आहुः रसनाबीजं क्रीम् इति तन्त्रप्रसिद्धम्। दोग्ध्रीं धेनुबीजं तु खषष्ठबिन्दुभिः खम् आकाशः षष्ठः स्वरः ऊकारः, बिन्दुरनुस्वारः

एभिः ह्रूम् इत्यक्षरेण भणन्ति। महामनुत्रयमुक्त्वा तद्देवताः प्राहोत्तर-श्लोकेन ॥७॥

**अभण्यताद्या भुवनेश्वरी बुधै- रनन्तरा मातरगादि कालिका ॥**
**प्रचण्डचण्डी परिकीर्तितापरा त्रयोऽप्यमी ते मनवो महाफलाः ॥८॥**

अभण्यतेति– मातः! आद्या माया ह्रीङ्कारवाच्या बुधैः भुवनेश्वरी अभण्यत अभ्यधायि। यथा वैदिकः प्रणव ओंकारः, तथा तान्त्रिकः प्रणवो ह्रीकारो बोध्यः। अनन्तरा रसज्ञा क्रींकारवाच्या कालिका अगादि अवोचि। अपरा तृतीया दोग्ध्री ह्रूंकारवाच्या प्रचण्डचण्डी परिकीर्तिता। अमी त्रयोऽपि ते तव मनवः मन्त्राः महाफलाः। प्रचण्डचण्डीमेव छिन्नमस्तां वज्रवैरोचनीमाहुः ॥८॥

**उपाधिपूतं शुचि नाभसं रजो दधाति साक्षाद् भुवनेश्वरीपदम् ॥**
**तदाश्रया व्यापकशक्तिरद्भुता मनस्विनी काचन कालिकेरिता ॥९॥**

उपाधिपूतमिति– शुचि शुद्धम् अन्यसम्पर्करहितम् स्वतःसिद्धं, उपाधिभूतं सर्वस्यापि लोकस्योपादानतय। आश्रयभूत नाभस नभसः आकाशस्येद नाभस रजः रेणुरणुः इत्यर्थः। सर्वजगदुपादानमूलद्रव्यभूताकाशाणुरित्यर्थ.। 'आकाशो गोलेभ्यो यद् वितरति निजरजश्चयादन्नम्' इत्यादौ प्रथमस्तबके तद्व्याख्याने चायमर्थ· प्रपञ्चितः। तथाविध नाभस रजः भुवनेश्वरीपदं भुवनेश्वरी इति पदम् अभिधानं साक्षाद्दधाति बिभर्ति। भुवनमूलस्वरूपम् आकाशरजः भुवनेश्वरीत्यभिधीयत इति भाव·। तदाश्रया नाभसरजःसमाश्रया मनस्विनी प्राज्ञा काचन अनिर्वाच्या अद्भुता व्यापकशक्तिः कालिका ईरिता प्रोक्ता। सर्वव्यापिनी चिच्छक्तिः कालिकेत्युच्यत इति भावः ॥९॥

अथ तृतीया मूर्ति स्वरूपत आह ॥

**अमर्त्यसाम्राज्यभृतः प्रवर्तिका विशाललोकत्रयरङ्गनर्तिका ॥**
**पराक्रमाणामधिनायिकोच्यते प्रचण्डचण्डीति कला सवित्रि ते ॥१०॥**

अमर्त्येति– सवित्रि मातः! अमर्त्यसाम्राज्यभृतः देवराज्यभरस्य इन्द्रस्य परमेश्वरस्य प्रवर्तिका, तं भुवने प्रवर्तयन्ती, विशाललोकत्रयरङ्गनर्तिका विशालं

भूर्भुवः स्वरिति लोकत्रयमेव रङ्गः रङ्गस्थलं तत्र नर्तिका नटी, पराक्रमाणां विविधविक्रमाणाम् अधिनायिका अधिदेवता ते कला प्रचण्डचण्डी इति उच्यते। अनेन अस्याः शची इन्द्राणी इति नामान्तरम् उक्तं भवति। क्रियाशक्तिरेव प्रधानं प्रचण्डचण्ड्याः, व्यापिनी ज्ञानशक्तिः काल्याः, उभयमूलं भुवनेश्वरीति अत्र महामन्त्रत्रयदेवताविभूतयः परदेवतायाः प्रतिपादिताः ॥१०॥

**स्मरन्मनुं रोदिति भक्तिमांस्तव प्रगृह्य पादं मुनिरम्ब लम्बते ॥**
**फलं चिराय प्रथमः समाप्नुयात् परो मरन्दं पद एव विन्दति ॥११॥**

स्मरन्निति– अम्ब ! तव मनुं मन्त्रं स्मरन् ध्यायन् भक्तिमान् रोदिति, रोदनं च प्रसादाभ्यर्थनोपलक्षणम्। मुनिः तपस्वी नैष्ठिकः पादं त्वच्चरणं प्रगृह्य गृहीत्वा लम्बते, लम्बनं चाश्रयणलक्षकम्। प्रथमः मन्त्रध्यायी चिराय फलं समाप्नुयात् लभेत न तु सद्यः फलं लभते। परः मुनिः पदे एव मरन्दं पदारविन्दरसं विन्दते प्राप्नोति मन्त्रजापी चिराय फलं लभते, तदनन्तरमेव फलस्यान्तःसारं, पदे लम्बमानः मुनिस्तु रसं सद्य एव लभत इति पादलम्बिनो मुनेः वैशिष्टयं बोध्यम् ॥११॥

**पदं तवान्विष्टमनेकदा मुदा हृदन्तरे स्पृष्टमिवेदमम्बिके ॥**
**पलायतेऽधोऽहमनन्तरं शुचा परात्परे रोदिमि मन्त्रशब्दतः ॥१२॥**

पदमिति– परात्परे अम्बिके ! अनेकदा बहुवारं मुदा प्रीत्या हृदन्तरे हृदयस्यान्तः अन्विष्टं गवेषितम् इदं तव पदं चरणं स्पृष्टमिव भवतीत्यध्याहार्यम्। मुहूर्तमात्रं बहुकृत्वः स्पृष्टं न तु सम्यग्गृहीत्वा धृतमित्यर्थः। तथाविधस्पर्शफलमाह 'अहम् अधः पलायते' अहंधीः त्वत्पदस्पर्शमात्रेण अधो गच्छति, स्वयं गलतीत्यर्थः। अनन्तरं पुनः पदस्पर्शालाभे शुचा शोकेन मन्त्रशब्दतः मन्त्रशब्देन साधनेन सार्वविभक्तिकस्तसिल् रोदिमि। किं करवाणि ? आत्मनिष्ठां मन्त्रयोगं च पर्यायेण अनुष्ठितवान् आचार्यः कविः इत्यस्मात् अवगम्यते ॥१२॥

**भणन्ति सन्तो मरुतां सवित्रि ते महामनुं त्वत्पदभास्करातपम् ॥**
**ततो हि मूलात्स्वर एष निर्गत- स्तपत्यघौघं जरयन्महोमयः ॥१३॥**

भणन्तीति– मरुतां सवित्रि इन्द्रस्य मरुत्पतित्वात् इन्द्राणी मरुत्सवित्री

तस्याः सम्बोधनम् इन्द्राणि, प्रचण्डचण्डि ! सन्तः विद्वांसः ते तव महामनु त्वत्पदभास्करातपं त्वत्पदं त्वच्चरणमेव भास्करातपः सूर्यप्रकाशस्तं भणन्ति कथयन्ति। हि यस्मात् हेतोः, ततः तस्मात् पदात् मूलात् स्थानात् निर्गतः महोमयः ज्योतिर्मयः एषः स्वरः मन्त्रनादः अघौघं पाप्मसमूहं जरयन् क्षपयन् तपति ज्वलतीत्यर्थः। त्वन्महामन्त्रस्य स्वरः त्वत्पदज्योतिर्मयो भवति। अत एव पापानि तापयन् दीप्यति ॥१३॥

**सवित्रि साक्षाच्चरणस्य ते प्रभां विधारयँस्तज्जनिमूलमार्गणे ॥**
**मुहुर्मुहुस्सोऽहमजे धृतोद्यमः पथा महर्षी रमणो बभाण यम् ॥१४॥**

सवित्रीति– सवित्रि जननि, अजे स्वयम्भु ! साक्षात् प्रत्यक्षं ते तव चरणस्य पदस्य प्रभां दीप्ति 'महोमय एष स्वरः' इति पूर्वश्लोके प्रोक्तं, तस्मात् मन्त्रस्वरमित्यर्थः, ता विधारयन् धारयमाणः सोऽहं बहोः कालान्मन्त्रसाधनं कुर्वाणोऽहं मुहुर्मुहुः अभीक्ष्णं पथा मार्गेण तेनेत्यध्याहार्यम् उत्तरवाक्ये यच्छब्दस्थितेः। धृतोद्यमः धृतो गृहीतः उद्यमः प्रयत्नो येन सः भवामि। यं पन्थान रमणो महर्षिः बभाण। जप्यमानस्य मन्त्रस्य मूलान्वेषणं मूलस्वरूपं प्रापयति, तदेव तपस्स्वरूपमिति श्रीमहर्षिणा दर्शितः पन्थाः इति भावः ॥१४॥

**अहम्पदार्थो यदि चिल्लता तता किमेष दोग्ध्रीमनुभावतोऽपरः ॥**
**अहं यदि प्राणनिनादवैखरी न कूर्च आख्यातुमसेति शक्यते ॥१५॥**

अहमिति– अहम्पदार्थः अहमिति पदस्य अर्थः शक्यसम्बन्धी लक्ष्योऽर्थः तता विस्तृता चिल्लता प्रज्ञावल्ली भवति यदि, एषः अहमोऽर्थः दोग्ध्रीमनुभावतः दोग्ध्रीमनुः हूङ्कारः तस्य भावतः अर्थात् परः अन्यः किम् ? नेत्यर्थः। अहम् इति पदं प्राणनिनादवैखरी प्राणनादस्य स्थूलाकृतिर्यदि भवति कूर्चः हूङ्कारस्य कूर्च इति संज्ञा दोग्ध्रीमनुः असा न सा, न प्राणनिनादवैखरी इति आख्यातु वक्तु न शक्यते। अहम्पदस्य अर्थः चिदेव, दोग्ध्रीमनोरप्यर्थः चितिरेव। एवम् अहंशब्दः प्राणनादः हूङ्कारोऽपि प्राणनाद एव। तस्मात् शब्दतोऽर्थतश्च न भेदो भवत्युभयोरहम्पद-दोग्ध्रीमन्वोः इति आशयः ॥१५॥

**परे तु यां चेतनशक्तिमामन- न्त्यभाणि सा कुण्डलिनीति तान्त्रिकैः ॥**
**विलक्षणा नाम चमत्कृतिर्जडान् प्रतारयत्यागमसारदूरगान् ॥१६॥**

पर इति– परे इतरे तु पक्षान्तरे, यां चेतनशक्तिम् आमनन्ति कीर्तयन्ति, सा तान्त्रिकैः शाक्तागमिकैः कुण्डलिनी इति अभाणि अवोचि। विलक्षणा विगतलक्षणा असाधारणी चमत्कृतिः वैचित्री आगमसारदूरगान् तन्त्रशास्त्राणां सारमजानतो जडान् प्रतारयति वञ्चयति व्यामोहयतीति यावत्। नाम कुत्सायाम्। तान्त्रिकैः चितिशक्तेः कुण्डलिनीति नामकरणं विलक्षणश्चमत्कारः। कुण्डलिनीपदश्रवणात् शब्दबोधे सर्प एव उपस्थितो भवति न चेतनशक्तिः। अत एव विलक्षणोऽयं चमत्कारः ॥१६॥

**भवत्यखण्डानुभवः प्रबोधिना- मतीव सूक्ष्मानुभवश्च योगिनाम् ॥**
**करं गतास्सर्वविधाश्च शेरते महेश्वरीमन्त्रपरस्य सिद्धयः ॥१७॥**

भवतीति– प्रबोधिनां प्रबोध एषामस्तीति प्रबोधिनः ज्ञानिनः तेषाम् अखण्डानुभवो देशेन कालेन वा अपरिच्छिन्नोऽनुभवः भवति। योगिनां षट्चक्रभेदनमार्गानुयायिनाम् अतीव अत्यन्तं सूक्ष्मानुभवश्च भवति। सूक्ष्मत्वं स्थूलसूक्ष्मशरीरावस्थितस्य योगमार्गिणः अन्तर्दृष्टिगम्यत्वं, न तु अल्पत्वम्। प्रबोधिनस्तु बाह्याभ्यन्तरभेद एव न अस्तीति बोध्यम्। महेश्वरीमन्त्रपरस्य देवीमन्त्रसाधकस्य सर्वविधाः सकलप्रकाराः सिद्धयः अद्भुताः शक्तयः करङ्गताः हस्तगताः शेरते हस्ते शयिता भवन्ति, वशङ्गता इति यावत् ॥१७॥

**सहस्रसङ्ख्यानि जनूंषि वा मम प्रियाणि भक्तिस्तव चेद्भवे भवे ॥**
**तव स्मृतिं चेद् गलयेन्न सम्मदं करोति मोक्षोऽपि ममेशवल्लभे ॥१८॥**

सहस्रेति– ईशवल्लभे ईश्वरप्रिये अम्ब! भवे भवे जन्मनि जन्मनि प्रतिजन्मेति यावत्। तव सम्बन्धिनी भक्तिश्चेत् भवतीत्यध्याहार्यम्। मम त्वयि भक्तिः प्रतिजन्म स्थिता चेदित्यर्थः। सहस्रसङ्ख्यानि सहस्रं सङ्ख्या येषां तानि जनूंषि जन्मानि असङ्ख्यानि जन्मानि वा मम प्रियाण्येव स्युः, मोक्षोऽपि तव स्मृतिं त्वद्गतं मदीयं ध्यानं गलयेत् च्यावयेत् चेत् मम सम्मदमानन्दं न करोति। मम मुक्तेरपि त्वयि भक्तिरेव गरीयसीत्यर्थः ॥१८॥

**विनैव दृष्टिं यदि सत्प्रशिष्यते न सत्तयाऽर्थः फलहीनया तया ॥**
**इदं तु सत् किन्त्वसतो विशिष्यते न तात मुक्तोपलयोस्तदा भिदा ॥१९॥**

विनेति– दृष्टिं विनैव प्रज्ञां वर्जयित्वा सत् प्रशिष्यते यदि सन्मात्रमवशिष्टं भवति यदि, तया फलहीनया सत्तया अर्थो न, किमपि प्रयोजनं न भवति। इदं तु सत् अप्रज्ञतायामप्यवशिष्टं च सत् असतः विशिष्यते किं नु? ईदृशः सतः भावस्य असतः अभावस्य च शून्यस्येत्यर्थः, को विशेषः? तात, अङ्ग तदा तथाविधायां दशायां मुक्तोपलयोः मुक्तस्य पुरुषस्य उपलस्य पाषाणस्य च न भिदा भेदो न भवतीत्यर्थः। तस्मात् सर्ववृत्तिविरहितायां मुक्तावस्थायाम् अवशिष्यमाणायां सत्तायां स्यादेव प्रज्ञा, न चेत् सा निरर्थेति भावः ॥१९॥

**शुचां निवृत्तिर्यदि मुक्तिरिष्यते सुखप्रवृत्तिर्यदि नात्र विद्यते ॥**
**सदेव चेत्तत्र मतिर्न भासते जडं विमुक्ताद्वचसैव भिद्यते ॥२०॥**

शुचामिति– शुचां शोकानां निवृत्तिः मुक्तिः इष्यते यदि, सर्वदुःखनिवृत्तिर्मुक्तिः उच्यते चेत् अत्र मुक्तौ सुखप्रवृत्तिर्न विद्यते यदि, आनन्दानुभवो नास्ति चेत्, सदेव केवलम् अवशिष्यते, तत्र मतिः बुद्धिः न भासते चेत्, जडं वस्तु विमुक्तात् पुरुषात् वचसा एव वचनमात्रेण भिद्यते। जडस्य मुक्तपुरुषस्य च भेद एव न भवति। मुक्तौ न केवलं व्यतिरेकेण दुःखनिवृत्तिः अन्वयेन आनन्दप्रवृत्तिश्च भवतः। तथा न केवला सत्ता अवशिष्यते, तत्र चिदपि वर्तते, सतः चित्स्वरूपत्वात् ॥२०॥

**मतिः पराची व्यवहारकारणं भवेत्प्रतीची परमार्थसम्पदि ॥**
**उभे दिशौ यस्य मतिर्विगाहते पदा च मूर्ध्ना च स सिद्ध इष्यते ॥२१॥**

मतिरिति– पराची बहिर्मुखी मतिर्बुद्धिः व्यवहारकारणं लोके व्यवहृतिहेतुर्भवति। परमार्थसम्पदि परमपुरुषार्थप्राप्तौ प्रतीची भवेत्, मतिरन्तर्मुखी भवेत्। यस्य मतिः प्रज्ञा उभे दिशौ पराचीं प्रतीचीं च विगाहते प्रविशति, स योगी पदा च पादेन मूर्ध्ना च शिरसा च सिद्धः इष्यते।

पादो हृदयाकाशः मूर्धा सहस्रारम्। हृदयेन सिद्धः प्रत्यग्दृष्टिसिद्धः सहस्रारेण पराग्दृष्टिसिद्धः पराग्दृष्टिः सर्वेषाम् अवशतया वर्तते। प्रत्यग्दृष्टिसिद्धस्यैव पराग्दृष्टौ स्ववशतया सिद्धेः सम्भवः। जीवन्मुक्तस्य पुरुषस्यैव प्रतीच्यपि प्रज्ञा स्वां स्थितिमजहती बहिर्व्यवहारक्षमा भवति; इममेवाशयं प्रकारान्तरेण वाजसनेयिनां श्रुतिराह– 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्यु तीर्त्वा विद्यया अमृतमश्नुते॥' इति ॥२१॥

**दृढं पदं यस्य मतेः सदाऽन्तरे स ना धियोऽग्रेण बहिश्चरन्नपि ॥**
**सवित्रि मग्नस्त्वयि सम्प्रकीर्त्यते न तस्य भीः सञ्चरतोऽपि संसृतेः ॥२२॥**

दृढमिति– सवित्रि जननि! यस्य मतेः बुद्धेः पदं लक्ष्यं स्थानम् अन्तरे हृदये सदा अनवरतं दृढं गाढं भवतीत्यध्याहार्यम्। स ना मनुष्यः धियः बुद्धेः अग्रेण, न तु मूलेन, अत्यन्तबाह्यांशेनेत्यर्थः, बहिर्विषयेषु चरन् सञ्चरन्नपि त्वयि चित्स्वरूपिण्यां मग्नः गाढं प्राप्तस्थितिकः सम्प्रकीर्त्यते। हृदये स्थितिपदं प्राप्तस्य पुरुषस्य ,बुद्धिः बहिः प्रवृत्ताऽपि विषयैर्न बाध्यत इति भावः। अत एव 'सञ्चरतोऽपि तस्य संसृतेः भीः न' जनन-मरण-संसरणजन्मभयं न भवति। सिद्धस्य पुरुषस्य हृदयस्थाने दृढस्थितिपदस्य परमात्मसाक्षात्कारादमृतस्वरूपप्राप्तिः निगमागमपुराणेतिहासेषु प्रसिद्धा। तस्य जीवतो मुक्तस्य न कुतोऽपि संसृतिः संभवति। तस्मात् संसृतिभीतिरपि न जातु भवति॥२२॥

**विचिन्तने चिन्तनशक्तिमद्भुतां विलोकने लोकनशक्तिमुज्ज्वलाम् ॥**
**प्रभाषणे भाषणशक्तिमुत्तमां निभालयंस्त्वां विषयैर्न जीयते ॥२३॥**

विचिन्तन इति– विचिन्तने ध्यानकर्मणि अद्भुतां चिन्तनशक्तिं ध्यानशक्तिं त्वां निभालयन् पश्यन्, विलोकने दर्शनकर्मणि उज्ज्वलां लोकनशक्तिं दर्शनशक्तिं त्वां निभालयन्, प्रभाषणे प्रवचनकर्मणि उत्तमां भाषणशक्तिं वचनशक्तिं त्वां निभालयन् नैष्ठिकः पुरुषः विषयैः इन्द्रियाकर्षकैः न जीयते न पराभूयते। एकैवाम्बा आश्चर्यकरी चिन्तनकर्त्री, प्रदीप्ता दर्शनकर्त्री, उत्तमा वाक्छक्तिश्चेति त्रिधोपास्यमाना जितेन्द्रियत्वम् आवहत्युपासकस्येति भावः ॥२३॥

**विलोकमानस्य विलोकनं कवे- र्विलोक्यमानेषु विहाय सक्तताम् ॥**
**विलोचने सन्निहिता निरन्तरं विधूतभीतिर्विबुधस्तुता शिवा ॥२४॥**

विलोकमानस्येति– विधूतभीतिः विधूता अपहृता भीतिः मृत्युशिरस्का सकलविधा भीतिराश्रितजनस्येति शेषः यया सा, विबुधस्तुता विबुधैर्विद्वद्भि-र्देवैर्वा स्तुता नुता शिवा भगवती, विलोक्यमानेषु दृश्येषु विषयेषु सक्तता सङ्गं विहाय त्यक्त्वा विलोकनं दर्शनकर्म विलोकमानस्य पश्यतः कवेः क्रान्त-दर्शिनः काव्यस्रष्टुः विलोचने दृष्टौ सन्निहिता कृतसन्निधाना भवतीति शेषः। विषयसङ्गवर्जं विषयेषु प्रवर्तमानायाः दृष्टेः द्रष्टा भवति कविः। तस्य दृष्टौ नित्यसन्निहिता सर्वभयापहा भगवतीति भावः ॥२४॥

**अयं भयानां परिमार्जकस्सतां समस्तपापौघनिवारणक्षमः ॥**
**मनोज्ञवंशस्थगणो गणेशितु- र्मनो महेशाब्जदृशो धिनोत्वलम् ॥२५॥**

अयमिति– सतां सज्जनानां भयानां नानाविधानां परिमार्जकः निवारकः समस्तपापौघनिवारणक्षमः समस्तानां पापानाम् ओघः समूहः तस्य निवारणाय प्रध्वंसनाय क्षमः शक्तः, सकलपापसमूहविध्वंसनसमर्थः इत्यर्थः, गणेशितुः कवेः मनोज्ञवंशस्थगणः मनोज्ञो रमणीयः वंशस्थगणः वंशस्थवृत्तरचितपद्यवर्गः महे-शाब्जदृशः महेशस्य महेश्वरस्य अब्जदृशः पङ्कजाक्ष्याः महादेवसुन्दर्याः पार्वत्याः मनः चेतः अलं पर्याप्तं अत्यन्तमिति यावत् धिनोतु तर्पयतु ॥२५॥

त्रयस्त्रिंशः स्तबकः सव्याख्यः समाप्तः ॥

# चतुस्त्रिंशः स्तबकः

चतुस्त्रिंशेऽस्मिन् स्तबके मानुष्यकमाङ्गल्याय भरतखण्डक्षेमविधित्सया भगवती बहुधा प्रार्थयते।

**विदितमहिमा विश्वाधानादनेकविधाद्भुतात्**
**प्रथितचरितः शर्वालोकप्रतापविवर्धनात् ॥**
**प्रकटितगुणः पापध्वान्तप्रसारनिरोधनात्**
**प्रदिशतु शिवाहासो भासां निधिः कुशलानि मे ॥१॥**

विदितेति— अनेकविधाद्भुतात् अनेकविधानि नानाप्रकाराणि अद्भुतानि आश्चर्याणि यस्य तस्मात् विश्वाधानात् विश्वस्य सकलस्य जगतः आधानात् उत्पादनात् विदितमहिमा विदितो ज्ञातो महिमा प्रभावो यस्य स.। नानाविधाद्भुतसमृद्धजगतः सर्जनात् देवीहासस्य महिमा स्पष्टं ज्ञायत इत्यर्थः। शर्वालोकप्रतापविवर्धनात् शर्वस्य रुद्रस्य आलोकस्य दर्शनस्य प्रतापस्य विवर्धनात् पोषणात् प्रथितचरितः प्रथितं विख्यातं चरितं चेष्टितं यस्य सः। देव्याः हासः परमेश्वरदृष्टेः वीर्यवर्धन इति तस्य चर्या प्रसिद्धेति भावः। पापध्वान्तप्रसारनिरोधनात् पापान्येव ध्वान्तानि तेषां प्रसारस्य व्यापनस्य निरोधनात् प्रतिरोधनात् प्रकटितगुणः प्रकटितः प्रकाशितः गुणः तेजो-बल-वीर्यादिः यस्य सः। भासां निधिः रुचाम् आकरः शिवाहासः पार्वतीहासः मे मम कुशलानि क्षेमाणि प्रदिशतु विदधातु। अत्र विविधाद्भुतविश्वाधानात् साधनात् साध्यस्य महिम्नो ज्ञानं प्रतिपादितम्। एवं शिवदृग्वीर्यवर्धनात् साधनात् चरितस्य साध्यस्य, पापप्रसारनिरोधनात् गुणस्य चेत्यतोऽनुमानालङ्कारः, तदुक्तं साहित्यदर्पणे 'अनुमानं तु विच्छित्त्या ज्ञानं साध्यस्य साधनम्' इति। विच्छित्तिरिह वैचित्रीति बोध्यम्। यद्यप्यनुमितिकरणम् अनुमानमिति अनुमानालङ्कारलक्षणं रसगङ्गाधरकारैरुक्तं, तथाऽपि अनुमानस्यालङ्कारत्वसिद्धये स्यादेव चमत्कृतिः। कविप्रतिभोल्लसितत्वेन चमत्कारित्वे, अनुमानस्य काव्यालङ्कारता भवति। कुवलयानन्दकारैस्तु

मपि तैरुदाहृतेन पद्येन लक्षणं सुबोधं भवति— 'विलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः। विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः!' इति ॥१॥

**हृदि करुणया पूर्णा बाह्वोर्बलेन महीयसा**
**पदकमलयोर्लक्ष्म्या भक्तैर्जनैरुपजीव्यया ॥**
**मुखसितकरे लावण्येन त्रिणेत्रदृशां बलं**
**बहु विदधता काली माताऽवतात्पदसेविनम् ॥२॥**

हृदीति— हृदि हृदये करुणया पूर्णा, बाह्वोः भुजयोः महीयसा महत्तरेण बलेन पूर्णा, भक्तैर्जनैरुपजीव्यया आश्रयणीयया लक्ष्म्या, पक्षे शोभया सम्पदा वा, पदकमलयोः पादारविन्दयोः पूर्णा, त्रिणेत्रदृशां हरस्य नेत्राणां त्रयाणां बहु बलं विदधता लावण्येन रामणीयकेन मुखसितकरे वक्त्रचन्द्रे पूर्णा माता काली पदसेविनं पादभजकम् अवताद्रक्षतु। अत्र करुणादीनां हृदयाद्याश्रयभेदेन एकस्या एव मातुः काल्या बहुधोल्लेखनादुल्लेखोऽलङ्कारः ॥२॥

**जगदधिपया सिद्धं दोग्ध्र्याऽथवोत रसज्ञया**
**मुनिजननुतं देवीमन्त्रं जपेद्यदि मानवः ॥**
**अमृतजलदीभूतः पूतः प्रयोगविशेषवित्**
**स इह वसुधालोके धारा गिरामभिवर्षति ॥३॥**

जगदिति— जगदधिपया भुवनेश्वर्या अथवा दोग्ध्र्या प्रचण्डचण्ड्या, उत रसज्ञया काल्या वा इदं मूर्तित्रयं तद्बीजत्रयं च अतीते स्तबके व्याख्याते सिद्धं सम्पन्नं मुनिजननुतं तपस्विभिः स्तुतं देवीमन्त्रं मानवो मनुजः जपेद्यदि, सः अमृतजलदीभूतः अनमृतजलदः अमृतजलदः सम्पद्यमानो भूतः अमृतवर्षी जात इत्यर्थः पूतः पवित्रः प्रयोगविशेषवित् प्रयोगविशेषान् साध्येषु विषये प्रयोगभेदान् वेत्ति जानातीति प्रयोगविशेषवित् सन् इह वसुधालोके भूलोके गिरां वाचां धाराः अभिवर्षति। सर्वसुखावहा अमृतप्राया वाणीः वर्षतीति यावत् ॥३॥

**इममभिमुखीभूता शातोदरी कमलालया**
**हयगजघटापूर्णाऽभ्यर्णं समेत्य निषेवते ॥**

**सविबुधमिदं विश्वं तस्य प्रयाति पुनर्वशम्**
**प्रथितयशसां सिद्धीनां चाप्यमुं भजतेऽष्टकम् ॥४॥**

इममिति— इमं देवीमन्त्रजापिनम् अनभिमुखी अभिमुखी सम्पद्यमाना भूता अभिमुखीभूता शातोदरी कृशोदरी कमलालया लक्ष्मीः हयगजघटापूर्णा हयैरश्वैः गजानां घटया करिसमूहेन च पूर्णा सती अभ्यर्णं समीपं निषेवते । 'करिणां घटना घटा' इत्यमरः। पुनः किं च विबुधैर्देवैः सह वर्तत इति सविबुधम् इदं विश्वं जगत् तस्य वशं प्रयाति वशङ्गतं भवति। अमुम् उपासकं प्रथितयशसां विश्रुतख्यातीनां सिद्धीनामष्टकं अणिमादिसिद्ध्यष्टकं चापि भजते सेवते ॥४॥

**सुविमलधियस्तस्य क्रोधाद् दृगम्बुधुतद्युती**
**रिपुजनवधूगण्डाभोगो भवेदुत पाण्डुरः ॥**
**सपदि भुवनव्याप्तं चाप्तैः प्रमाणपुरस्सरं**
**भणितमजरं भद्रं ज्योतिः परं हृदि भासते ॥५॥**

सुविमलेति— सुविमलधियः अत्यन्तविशुद्धबुद्धेस्तस्य देवीमन्त्रभृतः क्रोधात् रोषात् रिपुजनवधूगण्डाभोगः शत्रुस्त्रीणां कपोलदेशविस्तारः दृगम्बुधुतद्युतिः सन् अश्रुजलापहृतकान्तिः सन् पाण्डुरः विच्छायः शुक्लो भवेत्। तस्य क्रोधात् शत्रूणां प्रध्वंसेन तत्स्त्रीणां वैधव्यापत्तेरश्रुधारया वदनवर्चोहरणं भवतीत्याशयः। भुवनव्याप्तं विश्वं व्याप्य स्थितम् आप्तैः वयोविद्यावृद्धैः प्रमाणपुरस्सरम् अनुभवजन्यवाक्यपूर्वकमित्यर्थः भणित प्रतिपादितम् अजयम् अविकार्यम् भद्रं शोभनं परं ज्योतिः सपदि सद्यः हृदि तस्य हृदये भासते। तस्य क्रोधे जायमाने क्षणात् तस्य हृदये सर्वव्यापि पारमैश्वरं ज्योतिः ज्वलति । अत एव स क्रोधः शत्रुस्त्रीवैधव्याधायिविक्रमो भवति। अत्र समर्थनीयस्य पूर्ववाक्यार्थगतस्य रिपुवधूगण्डाभोगपाण्डिम्नः उत्तरवाक्यार्थेन हृदयगतपारमैश्वरज्योतिर्भासनेन समर्थनात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। लक्षणं प्रागुक्तम् ॥५॥

**अदयमरिभिः क्रान्ते राष्ट्रे त्वमीश्वरि रक्षिका**
**सुमशरमुखैर्धूते चित्ते त्वमीश्वरि रक्षिका ॥**

**प्रबलदुरितैर्ग्रस्ते वंशे त्वमीश्वरि रक्षिका**
**ऽप्यसृजति जलं मेघे मोघे त्वमीश्वरि रक्षिका ॥६॥**

अदयमिति– राष्ट्रे देशे अरिभिः शत्रुभिः अदयं निष्करुणं यथा तथा क्रान्ते आक्रान्ते सति, ईश्वरि ! त्वं रक्षिका शरणमित्यर्थः। चित्ते मनसि सुमशरमुखैः कामादिभिः कामक्रोधादिभिरिति यावत् धूते चालिते सति, अपहृत इति यावत्, ईश्वरि ! त्वं रक्षिका असि वंशे मानवकुले प्रबलदुरितैः बलिष्ठपापैः ग्रस्ते गृहीते सति ईश्वरि त्वं रक्षिका भवसि, मेघे मोघे विफले, जलम् असृजति अवर्षति सति अवग्रहे इत्यर्थः ईश्वरि ! त्वं रक्षिका। सर्वत्र त्वमेव रक्षा भवसि ॥६॥

**भगवति निजौ साक्षात्पुत्रौ बृहस्पतिपावकौ**
**गणपतिगुहावेतौ वेषान्तरव्यवहारतः ॥**
**भरतधरणीखण्डे हेतोः कुतः कृतसम्भवौ**
**कलकलयुते काले देवि व्यधाः कथय द्रुतम् ॥७॥**

भगवतीति– भगवति अम्ब ! निजौ स्वीयौ साक्षात्पुत्रौ तनूजौ बृहस्पति-पावकौ बृहस्पतिर्ब्रह्मणस्पतिः पावकोऽग्निश्च एतौ वेषान्तरव्यवहारतः अन्यो वेषः वेषान्तर तेन व्यवहारः तेन सार्वविभक्तिकस्तसिल् गणपतिगुहौ बृहस्पति-रेव गणपतिवेषः, पावक एव गुहवेषः, उभौ च भरतधरणीखण्डे भारत-भूखण्डे कलकलयुते कोलाहलयुते अस्मिन् काले कुत. कस्माद्धेतोः कृतसम्भवौ स्वीकृतजन्मानौ विधेयविशेषणं व्यधाः अकार्षीः, द्रुतं कथय वद ॥७॥

**समयमयि ते धृत्वा पादाम्बुजं रमणः सुतो**
**गिरिवरगुहास्वन्तः शान्तो नयेद्यदि नाद्भुतम् ॥**
**स्थलविरहतः स्वीयस्थाने किमत्र समागतो**
**न वदसि कुतः कार्यं तस्मै कुलाचलकन्यके ॥८॥**

समयमिति– अयि अम्ब ! सुतः पुत्रः रमणः तस्य गुहावतारोक्तेः पुत्रत्वं, ते पादाम्बुजं धृत्वा गृहीत्वा, अत एव अन्तः शान्तः आत्मनिष्ठया शान्ति-सम्पन्न इत्यर्थः। गिरिवरगुहासु गिरिवरस्य अरुणाचलस्य गुहासु बहुवचनात् नैका गुहा वासभूरित्याशयः, समयं काल नयेद्यदि यापयेद्यदि न अद्भुतम् इद

नाश्चर्यजनकम्। स्वीयस्थाने जन्मभुवि स्थलविरहतः वासस्थलवियोगात स्थलाभावाद्धेतोरिति यावत्, अत्र समागतः किम्? भोः कुलाचलकन्यके पार्वति! तस्मै कुतो हेतोः कार्यं यत् कर्तव्यं तत् न वदसि? वासभुवं विहाय कार्यविशेषायैवेहागतः, न तु तत्र वासस्थलाभावात्। तस्मै त्वं कार्यं न वदसि, तस्मात्तव पादं धृत्वा शान्तिसमृद्धो जयति। तवादेश ज्ञापयसि चेत्, सत्यं तत् करिष्यत्येव निस्सङ्कल्पो महामनाः स महर्षिः ॥८॥

**परिभणति चेच्छिष्यव्यूहे महाद्भुतसङ्गती-**
**र्जननि रमणो योगीशानस्ततो बहु नो फलम् ॥**
**अमिततमया दृष्टेः शक्त्या कदा सरणिं नये-**
**दपथपतितं धात्रीलोकं तदेव वदाम्बिके ॥९॥**

परिभणतीति– जननि! योगीशानः योगीश्वरः रमणः शिष्यव्यूहे शिष्याणां उपदेशयोग्यानां व्यूहे बृन्दे महाद्भुतसङ्गतीः महतीः अद्भुताः आश्चर्यकरीः सङ्गतीर्घटनाः परिभणति कथयति चेत्, ततो तथा भणितात् नः अस्माकं बहु फलं भवति इति अध्याहार्यम्। अम्बिके, अपथपतितं न पन्थाः अपथं तत्र पतितं मार्गभ्रष्टमिति यावत् धात्रीलोकं भूलोकम् अमिततमया अनिबहुलया दृष्टेः शक्त्या वीक्षितबलेनेत्यर्थः कदा सरणिं नयेत् पन्थानं प्रापयेत् तदेव वद। नयतेर्द्विकर्मत्वात् सरणिम् अप्रधानम् कर्म धात्रीलोकं प्रधानम् ॥९॥

**अहमिह कुतो हेतोर्जातो विषण्णतमे स्थले**
**चरणकमलच्छायां मायाधिराज्ञि विहाय ते ॥**
**परमकरुणो घोरः शापः किमेष सवित्रि ते**
**किमपि भुवि वा कार्यं कर्तुं नियोजितवत्यसि ॥१०॥**

अहमिति– मायाधिराज्ञि मायेश्वरि अम्ब! ते तव चरणकमलच्छायां विहाय इह भूलोके विषण्णतमे शोभूकयिष्ठे स्थले अहं कुतो हेतोः जातः जन्म प्राप्तवान्। सवित्रि मातः! एषः परमकरुणः परमः अत्यधिकः करुणः शोकः यस्मात्स ते तव शापः किम्? वा अथवा भुवि भूमौ किमपि कार्यं कर्तुं नियोजितवती प्रचोदितवत्यसि। किमहं तव शापविशेषादिह पतितः, उत कार्यविशेषं कर्तुं त्वया प्रेषितः ॥१०॥

**व्रजति विलयं स्नेहो दूरप्रवासवशादिति**
**प्रवदति बुधः कश्चित्सत्यं प्रभाति तदम्बिके ॥**
**भगवति निजे कुक्षौ जातं दिवो धरणीगतं**
**स्मृतिसरणितो दूरे हा हा करोषि रुषा यथा ॥११॥**

व्रजतीति– अम्बिके ! दूरप्रवासवशात् प्रियजनवियोगजनकस्थलान्तरवासाद्धेतोः इत्यर्थः, स्नेहः प्रेमा विलयं नाशं गच्छतीति कश्चिद्बुधः बुद्धिमान् लोके प्रवदति तत् सत्यं प्रभाति प्रतिभाति । भगवति अम्ब ! दिवो द्युलोकात् धरणीगतं भुवं गतं, निजे स्वीये कुक्षौ उदरे जातं रुषा यथा रोषेणेव स्मृतिसरणितः स्मृतिपथात् दूरे करोषि, हा हा महत् कष्टम् इदं ! न मां स्मरसि, कोपेनेव मां दूरीकुरुषे ॥११॥

**मम तु विमला हृद्या विद्या महेश्वरि याऽभव-**
**न्मनसि च परा चित्रा शक्तिश्चिरन्तनि याऽभवत् ॥**
**वचसि च महद्भाग्यं श्लाघ्यं यदीड्यतमेऽभवत्**
**तदयि गलितं मत्तो वित्तत्रयं भवतो भुवि ॥१२॥**

ममेति– महेश्वरि ! मम या विमला शुद्धा हृद्या मनोज्ञा विद्या तु अवधारणे, निश्चितम् अभवत् । भोश्चिरन्तनि, मनसि च या परा श्रेष्ठा चित्रा अद्भुता शक्तिश्च अभवत् । ईड्यतमे अत्यन्तं स्तुत्ये, वचसि वचने वाचि चेत्यर्थः, यत् श्लाघ्यं प्रशस्यं महत् भाग्य वैभवम् अभवत्, तत् इदं वित्तत्रयं हृद्या शुद्धविद्या, मानसी चित्रा शक्तिः, वाचि वैभवमिति यत् सम्पत्त्रयं मम इह जन्मनः पुरा आसीत् तत् भुवि भूमौ भवतः जन्मनः हेतोः मत्तः मत् मम सकाशादित्यर्थः, अयि अम्ब ! गलितं विगतम् । दिव्या मम सहजोक्ता सम्पत्त्रयी भूसम्पर्कतो गलिता । अधुना तद्वासनैवावशिष्टेति गम्यम् । शुद्धविद्या विचित्रमनश्शक्तिर्वाग्वीर्यमित्येतत्त्रयस्य कविराकर इवासीज्जीवितकाले इति निर्मत्सराणां सर्वेषां विदितमेवेदम् । तस्माद् गलितशब्देन त्रयमपि वासनामात्रावशिष्टमित्युपपन्नम् ॥१२॥

**कृतमयि मया पापं घोरं सुकर्मसु सङ्गिनां**
**यदहमदयो विघ्नं नृणां मुहुर्मुहुराचरम् ॥**

**अतिकटु फलं तस्याश्नामि श्रितो नरविग्रहं**
**प्रमथनृपतेर्जाये माये जनन्यव मामिमम् ॥१३॥**

कृतमिति– अयि अम्ब ! मया घोरं भयङ्करं पापं दुष्कृतं कृतमाचरितम्। यत् यतः अहमदयोऽकरुणः सुकर्मसु सत्कर्मानुष्ठानेषु सङ्गिनाम् आसक्तानां नृणां मुहुर्मुहुः शश्वत् विघ्नम् आचरम् अकरवम्। ततो मया पापमाचरितमिति सम्बन्धः। विघ्नेश्वरो विघ्नकारीति प्रसिद्धिः। वस्तुतस्तु पूजितः स विघ्नविघातको भवति। तस्य विघ्नकर्मणः अतिकटु अत्यन्तमस्वादु फलम् अश्नामि भुनज्मि अनुभवामि। नरविग्रहं मानवशरीरं श्रितः प्राप्तोऽस्मीति शेषः। प्रमथनृपतेः भूतेशस्य शिवस्य जाये प्रेयसि, माये महामाये, जननि ! इमम् ईदृशावस्थं माम् अव रक्ष ॥१३॥

**न भवसि दृशोर्मार्गे लोकाधिराज्ञि कुतो गिरो**
**न च बहुकृपे स्वप्ने वा त्वं प्रयच्छसि दर्शनम् ॥**
**अपनयसि नो सन्देहं वा परोक्षकृपावशा-**
**दपि सुरनुते लग्ना कार्यान्तरे किमुतादया ॥१४॥**

नेति– लोकाधिराज्ञि जगदीश्वरि, बहुकृपे प्रभूतकरुणे, अम्ब ! दृशोः मार्गे कुतो न भवसि, दृक्पथं न गच्छसि, को हेतुः ? स्वप्ने वा गिरः वाचः दर्शनं वा न प्रयच्छसि ददासि, वाचं दर्शनं वा स्वप्नदशायामपि न ददासि। परोक्षकृपावशाद्वा अप्रत्यक्षं वा कृपावशतः येन केनापि निमित्तेन सन्देहं नो न अपनयसि निवारयसि। सुरनुते देवस्तुते ! अपि प्रश्ने, कार्यान्तरे लग्ना, किं त्वम् अन्यस्मिन् कार्ये सक्ता सती मम सन्देहं नापनयसि उत अदया ? किं तव नास्ति करुणा अत एवेयम् उपेक्षा ? ॥१४॥

**निरवधिशिवे माहात्म्यं ते भणन्ति महर्षयो**
**मनसि करुणा न न्यूना ते यथा प्रथिताः कथाः ॥**
**तदिदमखिलं मिथ्या स्यादित्यसाध्यमुदीरितुं**
**यदसि विमुखी पुत्रे किंवा भवेदिह कारणम् ॥१५॥**

निरवधीति– निरवधिशिवे अपरिमितकल्याणे ! महर्षयः ते तव माहात्म्यं भणन्ति। यथा कथाः त्वत्सम्बन्धिन्यः प्रथिताः प्रख्याताः तथेत्यध्या-

हार्य, ते तव करुणा न न्यूना, अधिकैव भवति। तव कारुण्यमधिकमिति चरित्राणि विश्रुतानि। तत् तस्मादिदमखिल महर्षिभिः भणितं कारुण्यप्रथन-कथाश्चेत्येतत्समस्तं मिथ्या अनृतमिति उदीरितु वक्तुम् असाध्यं अशक्यम्। पुत्रे गणपतौ मयि विमुखी पराङमुखी भवसीति यत् इह अस्मिन् विषये किं वा कारणं भवेत्? कारणं भण ॥१५॥

**भुवनभरणं नाल्पं कार्यं न देवि तव क्षणो**
**गुरु च बहुलं कृत्यं नित्यं तवास्ति न तन्मृषा ॥**
**न तव कठिनं मौनं निन्द्यं तथाऽपि न पार्वति**
**स्मर सकृदिमं दीनं पुत्रं तदेव ममाधिकम् ॥१६॥**

भुवनेति– देवि! भुवनभरणं जगत्पोषणम् अल्पं कार्यं न, तत्सुमहदेव भवति, तव क्षणो न, निर्व्यापारता कदाऽपि नैव भवति। 'निर्व्यापारस्थितिः कालविशेषोत्सवयोः क्षणे' इत्यमरः। तव नित्यं कृत्यं गुरु दुर्भरं बहु बहुलं च अस्ति। न तन्मृषा मिथ्या भवति। यद्यप्येवं समस्तं तथ्यमेव तथापि तव कठिनम् अविचाल्यं मौनम् अवचनतेत्यर्थः, न निन्द्यं न, दूष्यमेव। पार्वति अम्ब! इमं दीनं दुर्बलं पुत्रं सकृत् एकवारं स्मर चिन्तय, तदेव मम अधिक भवेदिति शेषः ॥१६॥

**न भवति सुधाधारावर्षादयं मुदितस्तनौ**
**मधुमदमुषां वाचां सर्गान्न चाप्ययमुद्धतः ॥**
**तव पदयुगे निष्ठालाभान्न तृप्यति चाप्ययं**
**भगवति चिरात् सन्देशं ते सुतः प्रतिवीक्षते ॥१७॥**

नेति– अयं तव भक्तः पुत्रः तनौ शरीरे सुधाधारावर्षात् सहस्रारामृतसम्पातात् न मुदितः न सन्तुष्टः। शरीरे योगबलादमृतवर्षेण सन्तोषहेतौ सत्यपि न भवति मे सन्तोषः। मधुमदमुषां मधुनो मकरन्दस्य मद गर्व मुष्णन्ति चोरयन्तीति मधुमदमुषः तासां वाचां सर्गात् सर्जनादित्यर्थः, अयं कविर्नोद्धतः प्रगल्भः, रसोत्तरकाव्यनिर्मित्या सत्यप्यौद्धत्यहेतौ औद्धत्यं मे न भवति। तव पदयुगे चरणारविन्दे निष्ठालाभात् च स्थितिप्राप्तेरित्यर्थः, अय न तृप्यति पदयुगनिष्ठालाभेन तृप्तिहेतौ सत्यपि नास्ति मे तृप्तिः। भगवति! सन्देशं तव वाचिकं चिरात् बहोः कालात् ते तव पुत्रः प्रतिवीक्षते प्रतिपालयन्नास्ते॥

अत्र आद्यपादत्रये, कारणेषु शरीरेऽमृतवर्षादिषु सत्स्वपि, कार्याणां मुदित्वादीनामदर्शनात् विशेषोक्तिरलङ्कारः, 'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे' इति तल्लक्षणात् । चतुर्थपादगतवाक्यार्थेन देवीसकाशात् सन्देशप्रतीक्षणेन हेतुना आद्यपादत्रयगतवाक्यार्थानां तनौ मुदितत्वाभावादीना समर्थनात् काव्यलिङ्गम् । तस्य विशेषोक्तिस्त्वङ्गम् । नीरक्षीरन्यायेनोभयोर्मेलनात् अङ्गाङ्गिभावेन सङ्करः ॥१७॥

**किमिह भुवने कर्तव्यं मे किमर्थमिहागतो-**
**ऽस्म्यवनि जगतां कं वोपायं श्रये निजशक्तये ॥**
**किमपि किमपि स्वान्ते ध्वान्ते यथा परिदृश्यते**
**स्फुटमभयदे वक्तुं किञ्चिच्छ्रमं त्वमुरीकुरु ॥१८॥**

किमिति– अभयदे सर्वभयेभ्यो रक्षिके ! इह भुवने भूलोके मम मे किं कर्तव्यम् ? इह किमर्थम् आगतः, जन्म प्राप्तवान् ? जगताम् अवनि रक्षिके ! निजशक्तये स्वीयशक्तिलब्ध्यै कं वा उपायं साधनं श्रये आश्रये ? किमपि किमपि यत्किञ्चित् मया चिन्तयितुम् अशक्यं त्वया तु दर्शयितु शक्यं तत्त्वमित्यर्थः, यथा येन प्रकारेण मम स्वान्ते मनसि ध्वान्ते अन्धकारे अपि परिदृश्यते तथा स्फुटं प्रकाशं निस्सन्देहं वक्तु किञ्चिदीषत् श्रमं प्रयासम् उरीकुरु अङ्गीकुरु ॥१८॥

**न मम परमे मुक्तावाशा न वा विभवाष्टके**
**न च गजघटापूर्णायां वा महेश्वरि सम्पदि ॥**
**न च मधुमुचां वाचां सर्गे निरर्गलवैभवे**
**मुनिभुवि कुतो जातः सोऽहं तदेव समीर्यताम् ॥१९॥**

नेति– परमे श्रेष्ठे अम्ब ! मम मुक्तौ मोक्षे इत्यर्थः, आशा दीर्घा तृष्णा न अस्ति इति शेषः, 'आशा तृष्णाऽपि चायता' इत्यमरः । विभवाष्टके अणिमाद्यष्टैश्वर्ये वा नास्त्याशा । महेश्वरि ! गजघटापूर्णायां गजसमूहसमृद्धायां सम्पदि श्रियां च नास्ति आशा । मधुमुचां मकरन्दनिःष्यन्दिनीनां वाचा गिरां निरर्गलवैभवे निष्प्रतिबन्धसमृद्धसम्पाते सर्गे सर्जने च इत्यर्थः, नास्त्याशा ।

मुनिभुवि ऋषीणां भूखण्डे अस्मिन् भारतभूमौ स त्वत्पुत्रोऽहं कुतो जातः ? ममेह जनने किं कारणम् ? तदेव कारणं समीर्यताम्, उच्यतां त्वयेति शेषः ॥१९॥

**प्रथममनघं वाञ्छाम्यन्नं सदारसुतातिथे-**
**र्भगवति ततः पादद्वन्द्वे तवाविचलां स्थितिम् ॥**
**अथ सुरजगद्वार्ताज्ञानं सवित्रि ततः परं**
**मुनिभुवि भवे हेतुं ज्ञातुं मृगाक्षि पुरद्विषः ॥२०॥**

प्रथममिति– भगवति ! प्रथमम् आदौ सदारसुतातिथेः दाराः भार्या सुताः पुत्राः अतिथयः आगन्तवश्च तैः सह वर्तते इति सदारसुतातिथिः तस्य ममेति शेषः, अनघम् अदुष्टं पावनम् अन्नं वाञ्छामि, इच्छामि। ततः अनन्तरं तव पादद्वन्द्वे अविचलां स्थिरां स्थितिं निष्ठां वाञ्छामीति शेषः। पुरद्विषः मृगाक्षि पुरारिसुन्दरि पार्वति ! अथ तदनन्तरं सुरजगद्वार्ताज्ञानं देवलोकवृत्तान्त-ज्ञानं वाञ्छामि। ततः परं मुनिभुवि भारतदेशे भवे मम जन्मनि विषये हेतुं ज्ञातुं वाञ्छामि। एवं मम वाञ्छापरम्परा भवति ॥२०॥

**यदि तव कृपा पुत्रे भक्ते पदाम्बुजवन्दिनि**
**व्रतशतकृशे शीर्षाम्भोजामृतं त्वयि जुह्वति ॥**
**भरतधरणीसेवालोले भवप्रियभामिनि**
**स्वयमुपदिशामुष्मै योग्यं विधानमनाविलम् ॥२१॥**

यदीति– भवप्रियभामिनि शिवप्रियजाये अम्ब ! पदाम्बुजवन्दिनि पादारविन्दस्तोतरि, व्रतशतकृशे व्रतशतैः व्रतानां नियमानां शतैः बहुभिः कृच्छ्र-राहारादिनियमैः कृशे शरीरे शीर्षाम्भोजामृतं सहस्रारनिःष्यन्दि अमृतं त्वयि देव्यां जुह्वति होमं कुर्वति, भरतधरणीसेवालोले भारतभूमिकैङ्कर्यनिरते भक्ते पुत्रे तव कृपा करुणा अस्ति यदि, स्वयं त्वम् अमुष्मै पुत्राय अनाविलम् अकलुषं स्वच्छमिति यावत्, योग्यम् उचितं विधानं विधिं पद्धतिमित्यर्थः उपदिश ॥२१॥

**जननि जगतां स्वल्पे कामेऽप्ययं त्वयि लम्बते**
**पुरभिदबले मध्ये कामेऽप्ययं त्वयि लम्बते ॥**

**बहुलकरुणे श्रेष्ठे कामेऽप्ययं त्वयि लम्बते**
**भगवति परे वीते कामेऽप्ययं त्वयि लम्बते ॥२२॥**

जननीति— जगतां जननि मातः! अयं जनः कामे स्वल्पेऽपि त्वयि लम्बते त्वाम् एव आश्रयते। पुरभिदबले इन्द्रसुन्दरि! कामे मध्येऽपि नाल्पे नानल्पे वा त्वयि लम्बते। बहुलकरुणे बहुकृपे! श्रेष्ठे उत्तमे कामेऽपि अयं जनः त्वयि लम्बते। भगवति परे अम्ब! कामे वीतेऽपि विगतेऽपि अयं त्वयि लम्बते। सकामो वा निष्कामो वा त्वामेवाश्रितोऽस्मि। सर्वोऽपि भारो मया त्वत्पादारविन्दयोरेव न्यस्त इति भावः ॥२२॥

**तनुभुवि मयि प्रीत्या वाऽम्ब त्रिलोकविधायिके**
**पदयुगरते वात्सल्याद्वा पुरारिपुरन्ध्रिके ॥**
**स्वविमलयशोगानासक्ते कृपावशतोऽथवा**
**परुषमजरे मौनं त्यक्त्वा स्फुटीकुरु मे गतिम् ॥२३॥**

तन्विति— त्रिलोकविधायिके त्रिजगद्धात्रि! मयि तनुभुवि पुत्रे प्रीत्या वा, पुरारिपुरन्ध्रिके शिवप्रेयसि! पदयुगरते चरणभक्ते, वात्सल्यात् भक्तानुरागाद्वा, अथवा स्वविमलयशोगानासक्ते त्वदीयपावनकीर्तिगानरते कवौ कृपावशतः कारुण्याद्वा अथवा, भोः अजरे जरारहिते देवि! परुषं कठिनं घोरं वा मौनम् अवचनत्वं त्यक्त्वा मे मम गतिं गन्तव्योपायं स्फुटीकुरु प्रकाशय। 'गतिस्तु गमने मार्गे दशायां बुद्धयुपाययोः' इति नानार्थरत्नमाला ॥२३॥

**जयतु भरतक्षोणीखण्डं विषादविवर्जितं**
**जयतु गणपस्तस्य क्षेमं विधातुमना मुनिः ॥**
**जयतु रमणस्तस्याचार्यो महर्षिकुलाचलो**
**जयतु च तयोर्माता पूता महेशविलासिनी ॥२४॥**

जयत्विति— भरतक्षोणीखण्डं भारतखण्डं विषादविवर्जितं दुःखशून्यं सत् जयतु उत्कर्षेण वर्तताम्। तस्य भारतखण्डस्य क्षेमं कल्याणं विधातुमनाः विधातु कर्तुं मनः यस्य सः मुनिस्तपस्वी गणपः गणपतिः जयतु। तस्य गणपतेर्मुनेराचार्यः महर्षिकुलाचलः महर्षिः कुलाचल इव हिमवानिव धृत्यादिगुण-

गणैर्हिमवतोपमेयो रमणः जयतु। तयोर्माता गणपति-रमणयोर्माता जननी पूता महेशविलासिनी महेश्वरकुटुम्बिनी जयतु। अत्र उत्तरोत्तरस्य पूर्वं-पूर्वविशेषणभावेन भरतखण्ड-तत्क्षेमविधायि-तदाचार्य-तन्मात्रन्तानां गृहीत-मुक्तरीतेरेकावलिरलङ्कारः। 'गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता' ॥२४॥

**गणपतिमुनेरेषा भाषा विदां हृदयङ्गमा**
**सुकविसुहृदः शब्दैरत्युज्ज्वला हरिणीततिः ॥**
**ललितचतुरैर्भावैर्यान्ती सुरूपवनान्तरं**
**मदयतु मनः कामारातेर्निशान्तमृगीदृशः ॥२५॥**

गणपतीति— सुकविसुहृदः सुकवीनां सरससत्कवीनां सुहृत् प्रियस्तस्य गणपतिमुनेः एषा भाषा वाणी विदां विदुषां हृदयङ्गमा रमणीया शब्दैः प्रयुक्तैः अत्युज्ज्वला बहुशोभमाना हरिणीततिः हरिणीवृत्तनिबद्धस्तुतिविततिः ललित-चतुरैः ललितैः कोमलैः चतुरैः पटुभिः भावैः अभिप्रायैः सुरूपवनान्तरं सुरूपाः बुधाः वनानीव सुरूपवनानि तेषाम् अन्तरं हृदयं यान्ती गच्छन्ती 'प्राप्तरूप-सुरूपाभिरूपा बुधमनोज्ञयोः' इत्यमरः। कामारातेः शिवस्य निशान्तमृगीदृशः गृहसुन्दर्याः मनः मदयतु हर्षयतु ॥

अत्र श्लेषः। तस्मात् पक्षे हरिणीततिः मृगीणां ततिः ललितचतुरैः कोमलैः कुशलैश्च भावैः रमणीयभावैः सुरूपवनान्तरं सुरूपस्य मनोज्ञस्य वनस्य अन्तरं अन्तः यान्ती प्रविशन्ती मृगीदृशः मनो मदयतु। यथा हरिणीततिः कोमलचतुरभावैः सुन्दरं वनं प्रविशन्ती मृगीदृशः मनो मदयति तथा एषा हरिणीततिर्भाषा पार्वतीमनो मदयतु इति भावः। अन्यद्व्याख्यातम्। एवं श्लेषोत्थापित उपमाध्वनिः ॥२५॥

चतुस्त्रिंशः स्तबकः सव्याख्यः समाप्तः ॥

# पञ्चत्रिंशः स्तबकः

पञ्चत्रिंशेऽस्मिन् स्तबके भगवत्याः कटाक्षं प्रार्थयमानस्तस्यां भक्तिं तत्प्रभावसङ्कीर्तनेन पुष्णाति। शक्वरीप्रस्तारगतेन इन्दुवदनावृत्तेन निबद्धोऽयं स्तबकः ॥

**अन्धतमसं शशिविभामभिदधाना**
**कान्तिमलमास्यकमलस्य विदधाना ॥**
**अन्धकविरोधिदयितास्मितलवश्री-**
**र्भातु भुवनस्य सकलस्य कुशलाय ॥१॥**

अन्धेति– शशिविभां चन्द्रप्रभाम् अन्धतमसं गाढान्धकारम् अभिदधाना भणन्ती, आस्यकमलस्य मुखपद्मस्य कान्तिं शोभाम् अलं विदधाना अलङ्कुर्वाणा अन्धकविरोधिदयितास्मितलवश्रीः अन्धकविरोधिनो हरस्य दयितायाः पार्वत्याः स्मितस्य मन्दहासस्य लवस्य लेशस्य श्रीः शोभा सकलस्य भुवनस्य कुशलाय क्षेमाय भातु भासताम्। मन्दहासशोभायाः पुरस्तात् चन्द्रस्तिमिरायते। अपि च सा मुखपद्मकान्तेर्भूषायते। उभयत्र तेजसोऽपि मूलतेजो देवीस्मितलवश्रीरिति द्योत्यते ॥१॥

**भाहि विविधा कृतिमती द्विजसमूहे**
**पाहि गतिहीनमखिलेश्वरि कुलं नः ॥**
**देहि बहुकालभजकाय वरमेतं**
**याहि नगनन्दिनि यशः शशिवलक्षम् ॥२॥**

भाहीति– अखिलेश्वरि विश्वाधिराज्ञि नगनन्दिनि पार्वति! द्विजसमूहे द्विजानां द्विजन्मनां जन्मना संस्कारेण च द्विर्जातानां ब्राह्मणानां समूहे समाजे विविधा नानाप्रकारा सती कृतिमती कृतिः प्रयत्नोऽस्या अस्तीति कृतिमती भाहि भासस्व। द्विजसमूहे तव भानात् सर्वस्यापि लोकस्य श्रेयो भवेत्।

गतिहीनम् उपायहीनं नः अस्माकं कुलं पाहि रक्ष। बहुकालभजकाय दीर्घ-कालभक्ताय मह्यम् एतं वरं देहि। गतिहीनस्य अस्माकं मानवकुलस्य भारतकुलस्य वा रक्षादानमेव वरं प्रार्थये। शशिवलक्षं चन्द्रधवलं यशः याहि प्राप्नुहि। तेन वरदानेन तव शुभं यशः स्यात् ॥२॥

**वारयति घोरतरपातकसमूहं**
**वर्धयति धर्ममपि शर्मकरमन्ते ॥**
**किङ्करजनस्य न किमावहति भव्यं**
**शङ्करपुरन्ध्रि तव पादपरिचर्या ॥३॥**

वारयतीति– शङ्करपुरन्ध्रि शिवमहिषि ! तव पादपरिचर्या पादयोः परिचर्या शुश्रूषा घोरतरपातकसमूहम् अतिभयावहपापनिवहं वारयति निवारयति। अन्ते परिणतौ शर्मकर सुखकरं धर्ममपि वर्धयति पोषयति। धर्मश्च हृदयाभ्यनुज्ञानसम्पन्नः सतामाचारो बोध्यः। किङ्करजनस्य भक्तस्य किं भव्यं कुशलं नावहति ? सर्वाणि कुशलानि धत्ते इत्यर्थः ॥३॥

**यस्य मनुजस्य हृदयेऽस्ति सदये ते**
**नाकचरसेव्यमयि पादसरसीजम् ॥**
**तं भजति पद्ममुखि पद्मवनवासा**
**लाभभवने भवतु नामरपुरोधाः ॥४॥**

यस्येति– सदये कारुण्यवति अयि अम्ब ! यस्य मनुजस्य हृदये नाकचरसेव्यं नाकचरैः स्वर्गसञ्चारिभिः देवैः सेव्यं पूज्यं ते तव पादसरसीजं चरणकमलम् अस्ति, भोः पद्ममुखि कमलवदने ! तं पद्मवनवासा कमलालया लक्ष्मीः भजति सेवते। लाभभवने प्राप्तिगृहे लक्ष्मीप्राप्तिस्थले अमरपुरोधाः देवपुरोहितः बृहस्पतिः न भवतु। तस्य पादभजकस्य देवगुरोरनुग्रहो न भवतु। मन्दबुद्धिमपि तं लक्ष्मीः प्राप्नोतीति भावः ॥४॥

**यद्यखिलमौनिगणगीतगुणजालं**
**कालभयहारिकरुणारसमरन्दम् ॥**

**अद्रितनयाङ्घ्रिजलजन्म हृदये स्या-**
**दष्टमगतोऽपि विदधातु रविजः किम् ॥५॥**

यदीति– अखिलमौनिगणगीतगुणजालम् अखिलेन समस्तेन मौनिनां नैष्ठिकानां गणेन वर्गेण गीतं कीर्तितं गुणानां कारुण्यादीनां जालं पटलं यस्य तत्, कालभयहारिकरुणारसमरन्दं कालान्मृत्योर्भयं हर्तुं शीलमस्येति कालभयहारी स करुणारसमरन्दः करुणारस एव मरन्दः मकरन्दः यस्य तत्, अद्रितनयाङ्घ्रिजलजन्म पार्वतीपादपङ्कजं हृदये स्याद्यदि भवेद्यदि, अष्टमगतोऽपि चारवशात् जन्मराशेरष्टमस्थानं प्राप्तोऽपि रविजः शनैश्चरः कि विदधातु कुरुताम्? न किमपि दुःखं दातु प्रभवतीत्यर्थः। चारवशात् चन्द्रराशेरष्टमगो मन्दी विविधान्यशुभानि तनोतीति ज्यौतिषप्रसिद्धम्। हृदयस्थं देवीचरणं ग्रहगतिवीर्यमपि जेतुं प्रभ्विति भावः ॥५॥

**लेखललनाकचसुमैः कृतबलिं ते**
**यो भजति पादघृणिमालिनमनन्ते ॥**
**निस्तरति नूनमयमस्तमितमोहः**
**शोकतिमिरं सकललोकगणमातः ॥६॥**

लेखेति– सकललोकगणमातः, सर्वजगज्जालजननि! लेखललनाकचसुमैः देवाङ्गनाजनशिरोजालङ्कारमाल्यैः कृतबलि कृतः आचरितः बलिः पूजा यस्मै तं ते तव पादघृणिमालिनं पाद एव घृणिमाली अंशुमाली सूर्यस्तं यो भजति सेवते अयं स भजकः अस्तमितमोहः अस्तमितः नाशङ्गतः मोहः अज्ञानमित्यर्थः यस्य सः, शोकतिमिरं शोक एव तिमिरम् अन्धकारः तं निस्तरति अतिगच्छति, नूनं ध्रुवम्। पादे घृणिमालिनः शोके तिमिरस्य चारोपणात् रूपकमलङ्कारः ॥६॥

**शीतकरदर्पहरवक्त्रजलजाते**
**शीतगिरिनन्दिनी तवाङ्घ्रिजलजातम् ॥**
**यः स्मरति देवि हृदि विस्मरति सोऽयं**
**विष्टपमशेषमपि कष्टततिमुक्तः ॥७॥**

शीतकरेति– शीतकरदर्पहरवक्त्रजलजाते चन्द्रगर्वापहवदनकमले, शीत-

गिरिनन्दिनि हिमवत्पुत्रि ! तव अङ्घ्रिजलजातं पादपद्मं यः हृदि हृदये स्मरति ध्यायति सोऽय कष्टततिमुक्तः कष्टततिभिः दुःखसन्ततिभिर्विमुक्तः सन् अशेषं समस्तं विष्टपं लोकमपि विस्मरति। पदध्यानजपरमानन्दपारवश्यात् जगद्विस्मृतिः, न तु निद्रा-मदादिपारवश्यादिव । कष्टततेर्निद्रादौ विस्मरणमेव भवति, न तु सा विमुक्तिः भवति ॥७॥

**सक्तिरयि यस्य तव पादसरसीजे**
**शक्तिधरमातरनलाक्षगृहनाथे ॥**
**पूर्णशशिजैत्रमुखि पुण्यपुरुषोऽसौ**
**स्वर्णशिखरीव बुधलोकशरणं स्यात् ॥८॥**

सक्तिरिति– अयि शक्तिधरमातः सुब्रह्मण्यजननि, अनलाक्षगृहनाथे अनलोऽग्निः अक्षिणि भालनेत्रे यस्य, यद्वा अनलोऽक्षि तृतीयं यस्य तस्य हरस्य गृहनाथे गृहिणि, पूर्णशशिजैत्रमुखि पूर्णचन्द्रजित्वरवदने ! यस्य तव पादसरसीजे चरणकमले सक्तिः सङ्गः असौ पुण्यपुरुषः स्वर्णशिखरीव मेरुगिरिरिव बुधलोकशरणं विद्वल्लोकरक्षणं स्यात् भवेत् ॥८॥

**वैरिगणनिर्दलनखड्गवरपाणे**
**वाससि पदोर्दशनवाससि च शोणे ॥**
**नेत्रमिषपावकविशेषितललाटे**
**पापमखिलं जहि मृगाधिपतिघोटे ॥९॥**

वैरीति– वैरिगणनिर्दलनखड्गवरपाणे शत्रुसमूहच्छेदनखड्गहस्ते ! वाससि वसने पदोश्चरणयोः दशनवाससि अधरे च शोणे रक्ते, रक्ताम्बरा अरुणचरणा बिम्बाधरा चेत्यर्थः। नेत्रमिषपावकविशेषितललाटे नेत्रस्य मिषेण व्याजेन यः पावकोऽग्निस्तेन विशेषितं भूषितं ललाटं भालं यस्याः तस्याः सम्बुद्धिः, अग्निनेत्रस्य शिवस्य पत्न्याः अपि अग्निनेत्रं भवति। मृगाधिपतिघोटे ! मृगाधिपतिः सिंहः घोटक एव घोटो वाहो यस्याः तस्याः सम्बुद्धिः सिंहवाहने इत्यर्थः। 'घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः। वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः। अखिल समस्तं पापं जहि हतं कुरु॥९॥

**वेदचयवेदिजनवादविषयस्य**
**प्रीतियुतलोकततिशोकशमनस्य ॥**
**वेतनविवर्जितभटोऽयमहमङ्घ्रेः**
**शीतकरपोतधरपुण्यवनिते ते ॥१०॥**

वेदेति– शीतकरपोतधरपुण्यवनिते ! शीतकरपोतधरस्य चन्द्रबालभृतः शिवस्य पुण्या सुन्दरी वनिता कान्ता तस्याः सम्बुद्धिः 'पुण्यं तु चार्वपि' इत्यमरः। वेदचयवेदिजनवादविषयस्य सकलवेदविज्जनभाषिताना विषयभूतस्य उद्देशभूतस्येत्यर्थः, प्रीतियुतलोकततिशोकशमनस्य भक्तलोकबृन्दगतशोकान्तकस्येत्यर्थः, ते तव अङ्घ्रेः चरणस्य अहं वेतनविवर्जितभटः भृतिं विनैव सेवकोऽस्मीति शेषः ॥१०॥

**कार्यमयि मे किमपि कार्यपटुबुद्धेः**
**पादसरसीजयुगलीपरिजनस्य ॥**
**अम्ब वद जम्भरिपुगीतगुणजाले**
**शुम्भकुलनाशकरि शम्भुकुलयोषे ॥११॥**

कार्यमिति– जम्भरिपुगीतगुणजाले ! जम्भरिपुणा इन्द्रेण गीतं कीर्तितं गुणजालं यस्यास्तस्याः सम्बुद्धिः, शुम्भकुलनाशकरि शुम्भासुरवंशविध्वंसिनि, शम्भुकुलयोषे शिवकुलाङ्गने अयि अम्ब ! कार्यपटुबुद्धेः कर्तुं योग्ये कार्ये पटुर्निपुणा बुद्धिः यस्य तस्य पादसरसीजयुगलीपरिजनस्य पादारविन्दद्वयपरिचारकस्य मे मम किमपि कार्यं वद ॥११॥

**त्वं यदि शिलावदयि नो वदसि कृत्यं**
**नास्ति तव राज्यपटुबुद्धिरिति सत्यम् ॥**
**आदिश यथार्हकरणीयकृतिनित्यं**
**राज्ञि भुवनस्य चरणाम्बुरुहभृत्यम् ॥१२॥**

त्वमिति– अयि भुवनस्य राज्ञि अम्ब ! त्वं शिलया तुल्यं शिलावत् शिलेव, कृत्यं यत् कर्तव्यं तत् नो वदसि न चेद् भणसि, तव राज्यपटुबुद्धिः राज्ये पटुः समर्था बुद्धिः नास्तीति सत्यम्। भुवनराज्ञीति त्वं प्रसिद्धाऽपि

तव राज्यकौशलं नास्तीति वक्तव्यम्। यथार्हकरणीयकृतिनित्यं यथार्हाः योग्याः करणीयाः कृतयस्तासु नित्यं स्थिरं चरणाम्बुरुहभृत्यं पादारविन्दभटम् आदिश आज्ञापय ॥१२॥

**पञ्चसु विहाय मनसः कमपि सङ्गं**
**पुत्रधनमित्रजनबान्धववधूषु ॥**
**एष भजते जननि पादजलजं ते**
**पालय नु मुञ्च नु तवोपरि स भारः ॥१३॥**

पञ्चस्विति– जननि मातः! पुत्रधनमित्रजनबान्धववधूषु पुत्रे धने मित्रजने बान्धवे वध्वा च एवं पञ्चस्वपि कमपि यथार्हं वृत्तं सङ्गं विहाय त्यक्त्वा एषोऽयं जनः ते तव पादजलज भजते सेवते। पालय नु रक्ष वा मुञ्च नु त्यज वा तवोपरि स. भारः। पुत्रादिषूज्झितसङ्गस्त्वय्यहं भार निक्षिप्तवान्। अतः पर त्वमेव प्रमाणम् ॥१३॥

**वज्रधरमुख्यसुरसञ्चयकिरीट-**
**स्थापितमहार्घमणिरञ्जितनखाय ॥**
**जीवितमदायि जगदीश्वरि मदीयं**
**पादजलजाय तव पालय नु मा वा ॥१४॥**

वज्रेति– जगदीश्वरि वज्रधरमुख्यानाम् इन्द्रादीनां सुराणां सञ्चयस्य समूहस्य किरीटैर्मुकुटैः स्थापितैर्निहितैः महार्घैः अधिकमूल्यैः मणिभिः रत्नविशेषैः रञ्जिताः अर्पितवर्णाः नखाः पदरुहाः यस्य तस्मै तव पादजलजाय पादारविन्दाय मदीयं जीवितम् अदायि दत्तमित्यर्थः। पालय नु रक्ष वा मा वा त्यज वेत्यर्थः ॥१४॥

**देहि जगदीश्वरि न वा मदभिलाषं**
**पाहि करुणावति न वा कुलमिदं नः ॥**
**शूलधरकामिनि सुरासुरनिषेव्यं**
**पादकमलं तव परे न विजहामि ॥१५॥**

देहीति– जगदीश्वरि! मदभिलाषं मम अभिलाषं मनोरथं देहि वा न

वा, करुणावति ! नः अस्माकम् इदं भारतीयं कुलं पाहि रक्ष वा न वा । शूलधरकामिनि रुद्रकान्ते परे अम्ब ! सुरासुरनिषेव्यं देवासुरसेव्यं तव पादकमलं न विजहामि त्यजामि ॥१५॥

**पासि किल पादयुगकिङ्करसमूहं**
**हंसि किल पापततिमापदि नुता त्वम् ॥**
**दन्तिवदनप्रसु वदन्ति मतिमन्तो**
**नानृतमिदं भवतु नाकिजनवर्ण्ये ॥१६॥**

पासीति– पादयुगकिङ्करसमूहं त्वच्चरणभजकलोकं पासि किल रक्षसि. किल वार्तायां, रक्षसीत्याहुरित्यर्थः । 'वार्ता सम्भाव्ययोः किल' इत्यमरः । आपदि विपदि आपतिताया नुता स्तुता त्वं पापततिं दुरितसहतिं हंसि किल ध्वंसयसीति वार्ता, भोः दन्तिवदनप्रसु गजमुखमातः ! मतिमन्तः वदन्ति एवं भणन्ति । नाकिजनवर्ण्ये स्वर्गवासिभिर्देवैः स्तुत्ये ! इदं मतिमद्भिरुच्यमानम् अनृतं न भवतु मृषा मा भूत् ॥१६॥

**शक्रमुखदेवततिवन्दितविसृष्टे**
**वक्रघनकेशि चरणे तव लुठन्तम् ॥**
**आपदि निमग्नमिममाश्रितमनाथं**
**नन्दिहयसुन्दरि न पालयसि केन ॥१७॥**

शक्रेति– वक्रघनकेशि कुटिलमेघश्यामलकचे ! शक्रमुखदेवनतिवन्दितविसृष्टे इन्द्रादिदेवबृन्दैर्वन्दिते विसृष्टे मुक्ते च तव चरणे लुठन्तं संश्लिष्यन्तम् आपदि दुरवस्थायां निमग्न, भोः नन्दिहयसुन्दरि वृषवाहनस्य शिवस्य कान्ते, अम्ब ! आश्रितं त्वां प्रपन्नम् अनाथं नाथरहितम् इमं जनं केन हेतुना न पालयसि न रक्षसि ? ॥१७॥

**घोषमयमम्ब विदधाति पदलग्नो**
**नावसि पुराणि किमु नारि बधिराऽसि ॥**
**वन्दिसुरबृन्दनुतिभाषितहृतं वा**
**कर्णयुगलं तव कपालिकुलयोषे ॥१८॥**

घोषमिति– अम्ब ! पदलग्नः पदयोः चरणयोः लग्नः सक्तः अयं घोषं

विदधाति क्रन्दतीत्यर्थः, पुराणि नारि पुरातनपुरुषि ! नावसि न पासि, बधिरा प्रहृतश्रवणेन्द्रियाऽसि किमु ? कपालिकुलयोषे शिवाङ्गने ! तव कर्णयुगलं श्रोत्र-युग्मं वन्दिसुरबृन्दनुतिभाषितहृतं वा स्तुतिपाठकदेवबृन्दस्तोत्रवचनैरपहृतं वा ? मम घोषस्य अनाकर्णनस्य किं कारणम् ? किं बाधिर्यम् ? उत सुरजनस्तोत्रे चित्तं तवावहितम् ? ॥१८॥

**अम्ब भव बिम्बफलकल्परदचेले**
**शम्बरसपत्नबलकारिबहुलीले ॥**
**प्रागमृतभानुमुकुटस्य मदयित्री**
**तं कुरु ततः परमुरीकृतमदर्थम् ॥१९॥**

अम्बेति– बिम्बफलकल्परदचेले ! ईषदूनं बिम्बफलं रक्तफलं बिम्बफल-कल्पं रदचेलं दशनवासोऽधर इत्यर्थः, यस्यास्तस्याः सम्बुद्धिः, शम्बरसपत्न-बलकारिबहुलीले ! शम्बरसपत्नस्य मन्मथस्य बलकारिण्यो बह्वयो लीला यस्यास्तस्याः सम्बोधनं, प्राक् प्रथमम् अमृतभानुमुकुटस्य चन्द्रचूडस्य शिवस्य मदयित्री हर्षयित्री भव। ततः अनन्तरं तं परम् ईश्वरम् उरीकृतमदर्थम् उरीकृतः अङ्गीकृतो मदर्थः मम विषयः यस्य तं विधेयविशेषणं कुरु। शिवं मदयितु प्रभुरसि त्वं, तस्मात् प्रथमं तं हर्षयित्वा वशय, अनन्तरं मत्प्रस्तावः क्रियतां तदङ्गीकाराय ॥१९॥

**निर्मलसुधाकरकलाकलितमस्ते**
**धर्मरतपालिनि दयावति नमस्ते ॥**
**एतमव देवि चरणाम्बुरुहबन्धुं**
**शीतधरणीधरसुते गमय नान्धुम् ॥२०॥**

निर्मलेति– निर्मलसुधाकरकलाकलितमस्ते ! निर्मलया स्वच्छया सुधा-करकलया चन्द्रकलया कलितं बद्धम् अलङ्कृतमिति यावत्, मस्तं शिरो यस्या-स्तस्याः सम्बुद्धिः। धर्मरतपालिनि धर्मासक्ताना रक्षिके, दयावति ! ते नमः। देवि ! चरणाम्बुरुहबन्धु चरणाम्बुरुहं पादारविन्दं बन्धुः यस्य तम् एतं भक्तम् अव रक्ष। शीतधरणीधरसुते पार्वति ! अन्धु कूप न गमय प्रापय, माऽस्तु ममाधोगतिः ॥२०॥

**अद्रिकुलपालककुलध्वजपताके**
**भद्रगजगामिनि दरिद्रमयि मत्या ॥**
**क्षुद्रमिव शोच्यमिममङ्घ्रिजलजाप्तं**
**रुद्रदयिते जननि पाहि न जहीहि ॥२१॥**

अद्रिकुलेति— अद्रिकुलपालककुलध्वजपताके हिमवद्वंशवैजयन्ति ! ध्वजपताकयोः सामान्यविशेषरूपयोः झटिति बोधनार्थं गोबलीवर्दन्यायेनायं प्रयोगः। नेह पुनरुक्तिः। भद्रगजगामिनि मत्तगजगमने ! 'भद्रश्चापि गजान्तरे' इत्यमरः, अयि अम्ब ! मत्या दरिद्रं, कर्मकौशलायापेक्षितायाः प्रज्ञायाः ऊनता मतिदारिद्र्यं बोध्यम्। शोच्यम् अनुकम्पनीयम् अङ्घ्रिजलजाप्तं पदारविन्दबन्धुम् इमं मां, रुद्रदयिते पार्वति ! पाहि पालय, क्षुद्रं नीचमिव न जहीहि न त्यज ॥२१॥

**अस्तु तव पादकमले स्थितिरजस्रं**
**नास्ति परदुःखविवशे हृदि तु शान्तिः ॥**
**अस्तु करुणेयमयमस्तु मतिलोपः**
**कष्टमिदमम्ब मम भूरि परिशिष्टम् ॥२२॥**

अस्त्विति— अम्ब ! तव पादकमले अजस्रं नित्यं मम स्थितिरस्तु। परदुःखविवशे परेषाम् अन्येषामस्मादृशां दुःखैः विवशे सहानुभूत्या परवशे हृदि हृदये तु मम शान्तिः नास्ति। इयं करुणा मम परदुःखपारवश्यजननी अस्तु। इयं करुणा बुद्धिहीनतैवेति चेत्, अयं मतिलोपः बुद्धिलोपश्च अस्तु भवतु। मम इदं भूरि अमितं कष्टं दुःखं परिशिष्टम् अवशिष्टम्। मतिलोपः, करुणा, अन्ते अवशिष्टं कष्टमित्येतानि सन्तु। हृदये शान्त्यभावात् तस्य तव पादकमले स्थितिं प्रार्थये ॥२२॥

**दुःखसुखभेदरहिता न मतिरासीत्**
**साधुखलभेदरहिता न मतिरासीत् ॥**
**भाग्यमतिमात्यमथ वा मम तदेत-**
**न्मातरिह सङ्गभजने यदवकाशः ॥२३॥**

दुःखेति— मातः ! दुःखसुखभेदरहिता दुःखं प्रतिकूलानुभवः, सुखम् अनु-

कूलानुभवश्च तयोर्भेदेन रहिता वर्जिता मतिर्धीर्मम नासीत्। साधुखलभेद-रहिता सज्जन-दुर्जन-भेदरहिता मतिर्मम नासीत्। शास्त्राणि समबुद्धिमुपदिशन्ति, मम तु तादृश्यभेदधीः नास्तीत्येष दोषः स्यादिति चेन्माऽस्त्वित्याह। अथवा तदेतत् अतिमान्यम् अतीव पूज्यं मम भाग्यम्। यत् यतः इह भुवि सङ्घभजने जनसमुदायसेवने अवकाशो भवति, तन्मम भाग्यमिति सम्बन्धः। असत्या सुखदुःखसाधुखलभेदबुद्धौ न स्यात्सङ्घसेवावकाशः। भेदबुद्धिर्भाग्यमिति समर्थनं दुष्करम्। तस्य सङ्घभजनावकाशलाभरूपेण वाक्यार्थेन समर्थनात् काव्यलिङ्गमलङ्कारः ॥२३॥

**अस्तु मम भेदमतिरस्तु मम पक्षो**
**यत्नपरताऽस्तु मम माऽस्तु च विमोक्षः ॥**
**मोक्षमयि वेद्मि कुलकष्टततिमोक्षं**
**प्रेषय सकृत्तव महेश्वरि कटाक्षम् ॥२४॥**

अस्त्वति— मम भेदमतिः भेदबुद्धिः साध्वसाध्वादिभेदबुद्धिरस्तु। मम पक्षः साधनयोग्यार्थः अस्तु भवतु। 'पक्षः पतत्रे कुचयोः पार्श्वे सख्यौ नृपस्य च। गजे स्याच्चुल्लिरन्ध्रे च बले साध्यविरोधयोः' इति त्रिकाण्डशेषः। मम यत्नपरता अस्तु उद्योगो भवत्वित्यर्थः। विमोक्षश्च ज्ञानलभ्यो जन्मबन्धविनिर्मोक्षश्च माऽस्तु मा भूत्। अयि, महेश्वरि अम्ब! कुलकष्टततिमोक्षं भारतीयकुलदुःखसन्ततिविमोचनमेव मोक्षं वेद्मि जानामि। तस्मात् तव कटाक्षं दृगन्तपातं सकृत् एकवार प्रेषय। येन मदभिमतम् उक्तं मोक्षं कुलकष्टनिवृत्तिरूपम् लभेयेति भावः ॥२४॥

**शाक्वरगणेन मुखरेऽत्र गणनाथे**
**विष्णुयशसीशवधु जिष्णुमुखवन्द्ये ॥**
**अम्ब करुणां कुरु शिवङ्करि निरङ्क-**
**स्वच्छकिरणार्भकविभूषितललाटे ॥२५॥**

शाक्वरगणेनेति— ईशवधु ईश्वरपुरन्ध्रि जिष्णुमुखवन्द्ये विष्ण्वादिभिः स्तुत्ये निरङ्कस्वच्छकिरणार्भकविभूषितललाटे निरङ्केण अकलङ्केन स्वच्छकिरणार्भकेण शुभ्रांशबालेन अर्धचन्द्रेणेति यावत्, विभूषितम् अलङ्कृतं ललाट यस्या-

स्तस्याः सम्बुद्धिः, शिवङ्करि क्षेमकारिणि अम्ब ! शाक्वरगणेन, चतुर्दशाक्षरा शक्वरी, शक्वर्याः शक्वरीछन्दसः इमे शाक्वराः तेषा गणेन समूहेन मुखरे शब्दायमाने विष्णुयशसि विष्णोर्यश इव यशो यस्य तस्मिन् गणनाथे गणपतौ मयि करुणां कुरु सदया भव। विष्णुयशसीत्यत्र विष्णुशब्दो विघ्नेश्वर-वाचितया ग्राह्यः। 'शुक्लाम्बरधर विष्णुम्' इति सुप्रसिद्धश्लोकेन अवयवार्थ-मजहत् विष्णुपद विभुत्वाद्विघ्नेश्वरम् अभिधत्ते ॥२५॥

पञ्चत्रिंशः स्तबकः सव्याख्यः समाप्तः ॥

# षट्त्रिंशः स्तबकः

अथ षट्त्रिंशे स्तबकेऽतिशक्वरीप्रस्तारगतेन तूणकवृत्तेन निबद्धा रमणीयशब्दार्था भगवतीस्तोत्रगीतिः ॥

**उन्नतस्तनस्थलीविलोलहारमौक्तिक-**
**व्रातदीधितिप्रतानबद्धसौहृदा सदा ॥**
**अन्धकारिकामिनीदरस्मितद्युतिर्धुनो-**
**त्वन्धकारमन्तरङ्गवासिनं घनं मम ॥१॥**

उन्नतेति— सदा सर्वदा उन्नतायामुत्तुङ्गायां स्तनस्थल्यां विलोलानां हारमौक्तिकानां कण्ठमालामुक्तामणीनां व्रातस्य समूहस्य दीधितीनां विद्युतीनां प्रताने विस्तारे बद्धं सौहृदं सख्यं यया सा, अन्धकारिकामिनीदरस्मितद्युतिः अन्धकारेः शिवस्य कामिन्याः पार्वत्याः दरस्मितस्य मन्दहासस्य द्युतिर्भाः अन्तरङ्गवासिनम् अन्तरङ्गे अन्तःकरणे वसतीति अन्तरङ्गवासी त मम घनम् अन्धकारं तिमिरम् अज्ञानमिति यावत् धुनोतु प्रहन्तु ॥१॥

**अम्बरस्थले पुरा पुरन्दरो ददर्श यां**
**यां वदन्ति पर्वतप्रसूतिमैतिहासिकाः ॥**
**सा परा पुरामरेः पुरन्ध्रिकाऽखिलाम्बिका**
**पुत्रकाय मज्जते ददातु दक्षिणं करम् ॥२॥**

अम्बरेति— अम्बरस्थले आकाशे पुरा पूर्व पुरन्दरः इन्द्रो यां ददर्श, 'स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम्' इति केनोपनिषदि श्रुतां देवीं यामिन्द्रो दृष्टवानित्यर्थः। अन्यत् प्रथमस्तबके व्याख्यातम्। याम् ऐतिहासिकाः पुरावृत्तविदः पर्वतप्रसूतिं पर्वतजाता पार्वतीं वदन्ति। सा परा शक्तिः पुरामरेः त्रिपुरान्तकस्य शिवस्य पुरन्ध्रिका महिषी अखिलाम्बिका

विश्वमाता, मज्जते अधः आपज्जलधौ मज्जते इत्यर्थः, पुत्त्रकाय मह्यं दक्षिणम् अभयदानदक्षं करं हस्तं मज्जन्तमुद्धर्तुमित्यर्थः, ददातु ॥२॥

**पादपङ्कजे धृता नरैरबाह्यभक्तिभिः**
**पाणिपङ्कजे धृता नवेन्दुखण्डधारिणा ॥**
**चारुहेमहंसका मनोज्ञरत्नकङ्कणा**
**लोकजालपालिनी पुनातु मां विलासिनी ॥३॥**

पादेति– नरैः मानवैः अबाह्यभक्तिभिरन्तरङ्गभक्तैः पादपङ्कजे धृता गृहीता, नवेन्दुखण्डधारिणा बालचन्द्रशेखरेण शिवेन पाणिपङ्कजे धृता गृहीता, शिवस्य पाणिगृहीतीत्यर्थः, चारुहेमहंसका रमणीयस्वर्णनूपुरा, मनोज्ञरत्नकङ्कणा रुचिरमणिमयहस्तवलया लोकजालपालिनी सर्वलोकरक्षिका विलासिनी रामा मां पुनातु पवित्रं करोत्वित्यर्थः ॥३॥

**उक्षराजवाहनस्य जीविताद् गरीयसी**
**पक्षिराजवाहनादिवर्ण्यमानवैभवा ॥**
**केकिलोकचक्रवर्तिवाहनेन पुत्त्रिणी**
**वारणारिसार्वभौमवाहना गतिर्मम ॥४॥**

उक्षेति– उक्षराजवाहनस्य वृषभवाहनस्य शिवस्य जीवितात् प्राणेभ्योऽपि गरीयसी अधिकतरप्रियेत्यर्थः, पक्षिराजवाहनादिवर्ण्यमानवैभवा विष्ण्वादिभिः स्तूयमानैश्वर्या, केकिलोकचक्रवर्तिवाहनेन मयूरसार्वभौमवाहनेन सुब्रह्मण्येन पुत्त्रिणी पुत्त्रवती, गुहाम्बा इत्यर्थः, वारणारिसार्वभौमवाहना सिंहराजवाहना दुर्गा मम गतिः शरणम् ॥४॥

**बालकुन्दकुट्मलालिकान्तदन्तपङ्क्तिका**
**कुण्डलानुबिम्बशोभिशुद्धगण्डमण्डला ॥**
**बिभ्रती रतीशवेत्रविभ्रमं भ्रुवोर्युगं**
**शुभ्रभानुशेखरस्य सुन्दरी प्रणम्यते ॥५॥**

बालेति– बालकुन्दकुट्मलालिकान्तदन्तपङ्क्तिका बालानाम् अप्रवृद्धानां कुन्दकुट्मलानां माघ्यमुकुलानाम् आलिः पङ्क्तिरिव माघ्यकलिकावलिरिवे-

त्यर्थः, कान्ता कमनीया दन्तपङ्क्तिर्यस्याः सा, कुण्डलानुबिम्बशोभिशुद्धगण्ड-मण्डला कुण्डलयोः ताटङ्कयोः अनुबिम्बाभ्या प्रतिबिम्बाभ्यां शोभिनौ भ्राजमानौ गण्डमण्डलौ कपोलबिम्बौ यस्याः सा, तावती दर्पणस्वच्छता गण्डस्थलयोः। रतीशवेत्रविभ्रमं रतीशवेत्रस्य मन्मथदण्डस्य विभ्रमो विलास इव विभ्रमो यस्य तत् भ्रुवोर्युगं भ्रूयुगल बिभ्रती धारयमाणा शुभ्रभानुशेखरस्य चन्द्रचूडस्य सुन्दरी देवी प्रणम्यते ।।५।।

**आजिदक्षवाहवैरियातुधानबाधितं**
**या ररक्ष देववृन्दमिन्दिरादिवन्दिता ।।**
**सा कटाक्षपातधूतभक्तलोकपातका**
**पावकाक्षसुन्दरी परात्परा गतिर्मम ।।६।।**

आजीति– आजिदक्षवाहवैरियातुधानबाधितम् आजौ सङ्ग्रामे दक्षो निपुणो वाहवैरी महिषः यातुधानो राक्षसः महिषासुर इति यावत्, तेन बाधितं देववृन्दम् इन्दिरादिवन्दिता लक्ष्म्यादिस्तुता सती या ररक्ष। सा कटाक्षपातधूतभक्तलोकपातका कटाक्षपातेन दृगन्तपातेन धूतानि निर्धूतानि भक्तलोकपातकानि भजकलोकपापानि यस्याः सा । पावकाक्षसुन्दरी वह्निनेत्रस्य रुद्रस्य सुन्दरी परात्परा अम्बिका मम गतिः शरणम् ।।६।।

**तारकाधिनाथचूडचित्तरङ्गनर्तकी**
**मन्दहाससुन्दरास्यपङ्कजा नगात्मजा ।।**
**दीनपोषकृत्यनित्यबद्धबुद्धिरव्यया**
**गृह्यते गणाधिपेन सर्वतो नृणा पदे ।।७।।**

तारकेति– तारकाधिनाथचूडचित्तरङ्गनर्तकी तारकाधिनाथः नक्षत्रपतिश्चूडायां शिखायां यस्य तस्य चित्तमेव रङ्गः नाटचस्थलं तत्र नर्तकी नृत्यं कुर्वती, शिवहृदयविलासिनीत्यर्थः। मन्दहाससुन्दरास्यपङ्कजा मन्दहासेन दरस्मितेन सुन्दरं मनोहरम् आस्यपङ्कजं वदनकमलं यस्याः सा, नगात्मजा पार्वती, दीनपोषकृत्यनित्यबद्धबुद्धिः दीनजनपोषकृत्ये नित्यं बद्धा निहिता बुद्धिः यस्याः सा, अव्यया अक्षया पदे चरणे नृणा गणाधिपेन सर्वतः सार्वात्म्येन साकल्येनेति यावत् गृह्यते ।।७।।

**अष्टमीशशाङ्कखण्डदर्पभञ्जनालिका**
**विष्टपत्रयाधिनाथमानसस्य डोलिका ॥**
**पापपुञ्जनाशकारिपादकञ्जधूलिका**
**श्रेयसे ममास्तु शैललोकपालबालिका ॥८॥**

अष्टमीति– अष्टमीशशाङ्कखण्डदर्पभञ्जनालिका अष्टम्याम् अष्टमीतिथौ यः शशाङ्कखण्डः अर्धवृत्ताकारः तस्य दर्पस्य भञ्जनम् अलिकं ललाटं यस्याः सा चन्द्रार्धाकारललाटस्थलेत्यर्थः। विष्टपत्रयाधिनाथमानसस्य त्रिलोकनाथस्य शिवस्य चित्तस्य डोलिका आन्दोलनभूता। अस्यां शिवचित्तं डोलायत इत्यर्थः। पापपुञ्जनाशकारिपादकञ्जधूलिका सकलदुरितविध्वंसिनोऽस्याः पादारविन्दरेणवः। शैललोकपालबालिका पर्वतराजपुत्रिका मम श्रेयसे अस्तु ॥८॥

**सानुमत्कुलाधिनाथबालिकालिकुन्तला**
**जङ्गमेव काऽपि तप्तहेमसालभञ्जिका ॥**
**भक्तियुक्तलोकशोकवारणाय दीक्षिता**
**शीतशीतवीक्षिता लघु स्यतादघं मम ॥९॥**

सानुमदिति– सानुमत्कुलाधिनाथबालिका सानुमत्कुलं पर्वतकुलं तस्याधिनाथस्य हिमवतः बालिका, अलिकुन्तला काऽपि तप्तहेमसालभञ्जिका तप्तकाञ्चनपाञ्चालिका जङ्गमा चरा इव दृश्यमानेत्यर्थः। भक्तियुक्तलोकशोकवारणाय भक्तजनदुःखध्वंसाय दीक्षिता धृतव्रता। शीतशीतवीक्षिता अतिशीतलदृक्पाता, मम अघं दुरितं लघु द्रुतं स्यतात् खण्डयतु ॥९॥

**पुण्यनामसंहतिः पुरारिचित्तमोहिनी**
**पुष्पबाणचापचारुझिल्लिकाऽखिलाम्बिका ॥**
**पुण्यवैरिपुष्टदुष्टदैत्यवंशनाशिनी**
**पुत्रकस्य रक्षणं पुरातनी करोतु मे ॥१०॥**

पुण्येति– पुण्यनामसंहतिः पुण्या नाम्नां संहतिः यस्याः सा। पुरारिचित्तमोहिनी शिवहृदयसम्मोहिनी। पुष्पबाणचापचारुझिल्लिका पुष्पबाणचापः मन्मथधनुः चारू रमणीये झिल्ल्यौ भ्रुवौ यस्याः सा। पुण्यवैरिपुष्ट-

दुष्टदैत्यवंशनाशिनी पुण्यस्य शुभस्य पावनकर्मणः वैरिणः शत्रवः पुष्टाः दुष्टाः दैत्याः असुराः तेषां वंशस्य नाशिनी। पुरातनी पुराणपुरुषी पुत्त्रकस्य मे मम रक्षणं करोतु ॥१०॥

**क्षाममध्यमस्थली सुधाघटोपमस्तनी**
**कृष्णसारलोचना कुमुद्वतीप्रियानना ॥**
**भ्रूविलासधूतधैर्यकाञ्चनाद्रिकार्मुका**
**काचिदिक्षुकार्मुकस्य जीविका जयत्युमा ॥११॥**

क्षामेति– क्षाममध्यमस्थली क्षामा कृशा मध्यमस्थली यस्याः सा तनुमध्येत्यर्थः, सुधाघटोपमस्तनी सुधाघटोपमौ अमृतकुम्भसन्निभौ स्तनौ यस्याः सा, कृष्णसारलोचना हरिणाक्षी, कुमुद्वतीप्रियानना कुमुद्वतीप्रियश्चन्द्रः स इवाननं यस्याः सा चन्द्रवदनेत्यर्थः, भ्रूविलासधूतधैर्यकाञ्चनाद्रिकार्मुका भ्रूविलासेन निर्धूतं धैर्यं यस्य सः काञ्चनाद्रिकार्मुकः मेरुधन्वा रुद्रः यस्याः सा, इक्षुकार्मुकस्य इक्षुधन्वनो मदनस्य काचित् जीविका जीवनोपायभूता उमा जयति ॥११॥

**लोहिताचलेश्वरस्य लोचनत्रयीहिता**
**लोहितप्रभानिमज्जदब्जजाण्डकन्दरा ॥**
**हासकान्तिवर्ध्यमानसारसारिमण्डला**
**वासमत्र मे करोतु मानसे महेश्वरि ॥१२॥**

लोहितेति– लोहिताचलेश्वरस्य अरुणाचलेश्वरस्य शिवस्य लोचनत्रयीहिता नेत्रत्रयस्याप्यनुकूला, लोहितप्रभानिमज्जदब्जजाण्डकन्दरा लोहितप्रभायाम् अरुणकान्तौ निमज्जत् अब्जजाण्डं ब्रह्माण्डं कन्दरं दरी इव यस्याः सा, हासकान्तिवर्ध्यमानसारसारिमण्डला हासकान्त्या स्मितप्रभया वर्ध्यमानः पोष्यमाणः सारसारिमण्डलः सारसारेः पङ्कजद्विषः चन्द्रस्य मण्डलो यस्याः सा, महेश्वरी अत्र मे मम मानसे वासं करोतु ॥१२॥

**दक्षिणेक्षणप्रभाविजृम्भिताम्बुसम्भवा**
**काममित्रवामनेत्रधामतृप्तकैरवा ॥**

**एकतः परः पुमान्परा वराङ्गनाऽन्यतः**
**शुभ्रकीर्तिरेकमूर्तिरादधातु नश्शिवम् ॥१३॥**

दक्षिणेति— दक्षिणेक्षणप्रभाविजृम्भिताम्बुसम्भवा दक्षिणेक्षणस्य प्रभया विजृम्भितं विकसितम् अम्बुसम्भवं पङ्कजं यस्याः सा, दक्षिणनेत्रस्य सूर्यात्मकत्वप्रसिद्धेः, काममित्रवामनेत्रधामतृप्तकैरवा काममित्रस्य मन्मथहितकारिणः वामनेत्रस्य धाम्ना तेजसा तृप्तं कैरवं कुमुदं यस्याः सा, वामनेत्रस्य चन्द्रात्मकताप्रसिद्धेः, शिवार्धशरीरिण्याः उमाया दक्षिणाक्षि शिवभागे वर्तते, तच्च उग्ररश्मिरित्युपपन्नं, वामार्धे तु शीतरश्मिरिति युक्तम् । एकतः दक्षिणभागे परः पुमान् पुरुषः अन्यतः वामभागे परा वराङ्गना स्त्री, अत एव एकमूर्तिः एकविग्रहा शुभ्रकीर्तिः विमलयशाः सर्वकल्याणाधायित्वात्, नः अस्माकं शिवं कल्याणम् आदधातु आतनोतु ॥१३॥

**शुम्भदैत्यमारिणी सुपर्वहर्षकारिणी**
**शम्भुचित्तहारिणी मुनीन्द्रचित्तचारिणी ॥**
**कामितार्थदायिनी करिप्रकाण्डगामिनी**
**वीतकल्कमादधातु विघ्नराजमम्बिका ॥१४॥**

शुम्भेति— शुम्भदैत्यमारिणी, शुम्भासुरसंहारिणी सुपर्वहर्षकारिणी सुपर्वणां देवानां हर्षकारिणी सन्तोषकारिणी, शम्भुचित्तहारिणी शिवस्य मनसः अपहारिणी, मुनीन्द्रचित्तचारिणी ऋषिजनमानसेषु विहारिणी, कामितार्थदायिनी इष्टार्थदात्री, करिप्रकाण्डवत् गजश्रेष्ठवत् गच्छतीति करिप्रकाण्डगामिनी अम्बिका विघ्नराजं गणपतिं वीतकल्कं विगतकल्मषमादधातु करोतु ॥१४॥

**देवतासपत्नवंशकानननानलच्छटा**
**वारणारिसार्वभौमवाहना घनालका ॥**
**नन्दिवाहनस्य काऽपि नेत्रनन्दिनी सुधा**
**नेत्रलाञ्छितालिका सुतं पुनातु कालिका ॥१५॥**

देवतेति— देवतासपत्नवंशकानननानलच्छटा देवतासपत्नानाम् असुराणां वंशः कुलं, पक्षे वेणुः स एव काननम् अरण्यं तस्य अनलच्छटा अग्निज्वाला, असुर-

कुलसंहर्त्रीत्यर्थः। वारणारिसार्वभौमवाहना सिंहेन्द्रवाहा दुर्गा, घनालका घन इव श्यामला अलका यस्याः सा, यद्वा सान्द्रकचभारा। नन्दिवाहनस्य वृषवाहस्य शिवस्य नेत्रनन्दिनी नयनानन्दिनी काऽपि चन्द्रिका। नेत्रलाञ्छितालिका नेत्रेण लाञ्छितम् अङ्कितम् अलिकं ललाटं यस्याः सा, ललाटनेत्रयुक्तेत्यर्थः, कालिका सुतं पुत्रं गणपतिं पुनातु शुद्धं करोतु ॥१५॥

**राजसुन्दरानना मरालराजगामिनी**
**राजमौलिवल्लभा मृगाधिराजमध्यमा ॥**
**राजमानविग्रहा विराजमानसद्गुणा**
**राजते महीधरे मदम्बिका विराजते ॥१६॥**

राजेति— राजसुन्दरानना राजा चन्द्र इव सुन्दरम् आननं यस्याः सा इन्दुमुखी इत्यर्थः, मरालराजगामिनी राजहंसगमना, राजमौलिवल्लभा चन्द्रशेखरप्रिया, राजमानविग्रहा देदीप्यमानशरीरा, विराजमानसद्गुणा शोभमानकारुण्यादिशुभगुणा, मदम्बिका ममाम्बा राजते रजतस्यायं राजतस्तस्मिन् महीधरे पर्वते कैलासे विराजते विजयते ॥१६॥

**पर्वचन्द्रमण्डलप्रभाविडम्बनानना**
**पर्वताधिनाथवंशपावनी सनातनी ॥**
**गर्वगन्धनाशिनी विभावरीविचारिणां**
**शर्वचित्तनायिका करोतु मङ्गलं मम ॥१७॥**

पर्वेति— पर्वचन्द्रमण्डलप्रभाविडम्बनानना विडम्बयतीति विडम्बनं परिहासः इत्यर्थः, पर्वचन्द्रमण्डलप्रभायाः पूर्णेन्दुबिम्बशोभायाः विडम्बनं परिहासि आननं मुखं यस्याः सा, पर्वताधिनाथवंशपावनी पर्वताधिनाथस्य हिमाचलस्य वंशस्य पावनी स्वजन्मनेति शेषः। सनातनी नित्या। विभावरीविचारिणां रात्रिञ्चराणां राक्षसानां गर्वगन्धं दर्पलेशं नाशयतीति गर्वगन्धनाशिनी। शर्वचित्तनायिका शिवहृदयेश्वरी मम मङ्गलं भद्रं करोतु ॥१७॥

**ओजसश्च तेजसश्च जन्मभूमिरच्युता**
**नीलकञ्जबन्धुबद्धमौलिरागमस्तुता ॥**

**वीतरागपाशजालनाशबद्धकङ्कणा**
**विश्वपालिनी मया महेश्वरी विचिन्त्यते ॥१८॥**

ओजस इति– ओजसः दीप्तेः 'ओजो दीप्तौ बले' इत्यमरः, तेजसः प्रतापस्य च अच्युता च्युतिरहिता स्थिरा जन्मभूमिः उद्भवस्थली, नीलकञ्जबन्धुबद्धमौलिः नीलकञ्जस्य नीलोत्पलस्य बन्धुरिन्दुः तेन बद्धा मौलिः चूडा यस्याः सा, आगमस्तुता वेदैः स्तुता। वीतरागपाशजालनाशबद्धकङ्कणा वीतरागाणां पाशजालनाशाय बद्धकङ्कणा धृतव्रता। विश्वपालिनी जगद्रक्षिका महेश्वरी मया विचिन्त्यते ध्यायते ॥१८॥

**अण्डमण्डलं यया निरन्तरं च पच्यते**
**संस्फुरत्यशेषभूतहार्दपीठिकासु या ॥**
**श्वासदृष्टिसंविदूष्मनादवारिवर्त्मभि-**
**र्यामुपासते विदो नमामि तां परात्पराम् ॥१९॥**

अण्डेति– यया च अण्डमण्डलं ब्रह्माण्डजालं निरन्तरं पच्यते परिणमनं नीयते, सर्वं विश्वम् अनयैव परिणामवशं गतं भवतीत्यर्थः। अशेषभूतहार्दपीठिकासु सकलप्राणिहृदयपीठेषु या संस्फुरति ज्वलति अहमस्मीति संविद्रूपेण जयतीत्यर्थः। श्वासदृष्टिसंविदूष्मनादवारिवर्त्मभिः श्वासः प्राणवायुः दृष्टिः दृक् संवित् चित् ऊष्मा जीवाग्निः नादः शब्दः वारि जलं रस इति यावत् एतेषां वर्त्मभिर्मार्गैः विदः विद्वांसः याम् उपासते परात्परां तां नमामि। श्वासादिवर्त्मभिरुपासितामित्यर्थः। अत्रेदमवधेयम्। श्वासोपासनं प्राणोपासनं संवर्गविद्या, दृष्टिरित्यनेन अक्षिपुरुषविद्या, संविदित्यनेन वैश्वानरविद्या, ऊष्मेत्यनेन मुख्यप्राणविद्या, नादेत्यनेन उद्गीथविद्या, वारीत्यनेन रसोपास्तिः, इमामेव सहस्रारामृतास्वादनं चन्द्रकलाविद्येति तान्त्रिकाः प्राहुः ॥१९॥

**पञ्चयुग्मवेषभृत्परात्परा सुरार्चिता**
**पञ्चवक्त्रवक्त्रपद्मचञ्चरीकलोकना ॥**
**वञ्चकान्तरङ्गशत्रुसञ्चयप्रणाशिनी**
**प्रेतमञ्चशायिनी कुलं चिराय पातु मे ॥२०॥**

पञ्चेति– पञ्चयुग्मवेषभृत् दशवेषभृत् दशमहाविद्यात्मिका हि देवी, यद्वा दशावतारशक्तिरूपत्वात् दशवेषभृत्त्वम्। परात्परा सुरार्चिता देवपूजिता,

पञ्चवक्त्रवक्त्रपद्मचञ्चरीकलोकना पञ्चवक्त्रस्य शिवस्य वक्त्रं पद्ममिव तत्र चञ्चरीक इव लोकनं दर्शनं यस्याः सा, शिववक्त्रपद्मे देव्याः दृष्टिः चञ्चरीकायत इत्यर्थः। वञ्चकान्तरङ्गशत्रुसञ्चयप्रणाशिनी वञ्चकानां द्रोहिणाम् अन्तरङ्गशत्रूणां कामक्रोधलोभमोहमदमात्सर्याणां सञ्चयस्य विनाशिनी, प्रेतो मञ्चः पर्यङ्क इव प्रेतमञ्चस्तस्मिन् शेते इति प्रेतमञ्चशायिनी 'पञ्चप्रेतासनासीना' इति कीर्तिता देवी, रुद्रप्रेतादुपरि नग्ना स्थिता कालिका आराध्यते, सर्वसंहारे कृते सा तत्प्रेतमधिशेते इति वा बोध्यम्। मे मम कुलं चिराय पातु रक्षतु ॥२०॥

**कर्मणा यथाविधि द्विजातयो यजन्ति यां**
**ब्रह्मणा यथाश्रुतं स्तुवन्ति यामधीतिनः ॥**
**चेतसा यथागुरूक्ति चिन्तयन्ति यां विदः**
**सा परा जगत्त्रयीजनन्यजा जयत्युमा ॥२१॥**

कर्मणेति– यां द्विजातयः त्रैवर्णिकाः यथाविधि विधिमनतिक्रम्य शास्त्रोक्तविधिनेत्यर्थः, कर्मणा यजन्ति पूजयन्ति। याम् अधीतिनः स्वाध्यायिनः यथाश्रुतं श्रुतमनतिक्रम्य ब्रह्मणा वेदेन स्तुवन्ति कीर्तयन्ति, यां विदः विज्ञाः यथागुरूक्ति गुरूपदेशानुसारेणेत्यर्थः। चेतसा मनसा चिन्तयन्ति ध्यायन्ति। सा परा शक्तिः जगत्त्रयीजननी त्रिलोकमाता उमा जयति ॥२१॥

**वासुदेवजायया विनम्रया निषेविता**
**वामदेवचाटुचित्रवाक्यबन्धलालिता ॥**
**वासवादिदेवताजयप्रणादहर्षिता**
**वारयत्वघानि मे वसुन्धराभृतस्सुता ॥२२॥**

वासुदेवेति– विनम्रया प्रह्वया वासुदेवजायया लक्ष्म्या निषेविता। वामदेवचाटुचित्रवाक्यबन्धलालिता वामदेवस्य शिवस्य चाटुना मधुरेण चित्रेणाद्भुतेन वाक्यबन्धेन लालिता प्रीणिता। वासवादिदेवताजयप्रणादहर्षिता इन्द्रादिसुरजनविजयघोषेण हर्षिता। वसुन्धराभृतः भूभृतः सुता पार्वती मे मम अघानि पापानि वारयतु ॥२२॥

**पूर्णिमासुधामरीचिसुन्दरास्यमण्डला**
**फुल्लपद्मपत्रदीर्घसम्प्रसन्नलोचना ॥**
**पुण्यभूनिषेवणाय पुत्रमेतमुद्यतं**
**पूर्णकाममादधातु पादलग्नमम्बिका ॥२३॥**

पूर्णिमेति– पूर्णिमासुधामरीचिसुन्दरास्यमण्डला राकेन्दुसुन्दरमुखी । फुल्लपद्मपत्रदीर्घसम्प्रसन्नलोचना स्वच्छविकसितकमलदलायताक्षी अम्बिका पुण्यभूनिषेवणाय पुण्यभुवो भारतभूमेः निषेवणायोद्यतम् एतं पादलग्नं चरणलम्बिनं पूर्णकामम् अवाप्तमनोरथम् आदधातु विधत्ताम् ॥२३॥

**लालयन्ति बालकं वतंसशीतदीधितिं**
**शीलयन्ति सूक्ष्मतां मनांसि योगिनामिव ॥**
**कालयन्तु पापिनां कुलानि संहतीस्सतां**
**पालयन्तु च स्मितानि योषितः पुरद्विषः ॥२४॥**

लालयन्तीति– वतंसशीतदीधितिं शिवशिरोभूषणचन्द्रं बालकं लालयन्ति प्रेम्णा कामयमानानि प्रीणयन्तीति यावत्, योगिनां मनांसि इव सूक्ष्मताम् अस्थूलतां तनुतां शीलयन्ति अभ्यस्यन्ति, योगिनां मनांसि यथा अभ्यासबलात् कृशतां यान्ति तथा मन्दतां यान्ति इति स्मितविशेषणम्। पुरद्विषः पुरान्तकस्य रुद्रस्य योषितः पार्वत्याः स्मितानि पापिनां कुलानि कालयन्तु अन्तयन्तु। सतां सज्जनानां संहतीः समूहान् पालयन्तु ॥२४॥

**पादसेविनः कवेर्मनोहरातिशक्वरी-**
**वर्ग एष नाटचकारिनिर्जरीगणो यथा ॥**
**लोकजालचक्रवर्तिपुण्ययोषितो मन-**
**स्सम्मदाय साधुकष्टवारणाय कल्पताम् ॥२५॥**

पादेति– पादसेविनः चरणभजकस्य कवेः गणपतेः एषः मनोहरातिशक्वरीवर्गः मनोहरः रमणीयोऽतिशक्वरीछन्दोनिबद्धस्तुतिवर्गः, यथा नाटचकारिनिर्जरीगणः तथा नाटचकारिणीनां निर्जरिणीनाम् अमरसुन्दरीणां गणः

अप्सरोगण इवेति यावत्। लोकजालचक्रवर्तिपुण्ययोषितः त्रिलोकसार्वभौमस्य परमेश्वरस्य सुन्दर्याः मनस्सम्मदाय चित्ताह्लादनाय साधुकष्टवारणाय सज्जनानिष्टनिवारणाय कल्पता प्रभवतु ॥२५॥

इति श्रीमहर्षिरमणभगवत्पादान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतिमुनेः कृतावुमासहस्रे षट्त्रिंशः स्तबकः समाप्तः।

समाप्तं च नवमं शतकम् ।

प्रभाख्या व्याख्या च समाप्ता ॥

# सप्तत्रिंशः स्तबकः

सप्तत्रिंशेऽस्मिन्नाचार्यस्तत्त्वदर्शी स्वाभिमतं तत्त्वसिद्धान्तमतिसूक्ष्मगभीराशयाभिः कारिकाभिः सङ्क्षेपतः प्रतिपादयति। स्तबकादौ मन्दहासं देव्याः सङ्कीर्तयन् तस्य स्वरूपं साक्षात् परतत्त्वमेवेति प्रस्तौति ॥

**उद्दीपयतु नश्शक्ति- मादिशक्तेर्दरस्मितम् ॥**
**तत्त्वं यस्य महस्सूक्ष्म- मानन्दो वेति संशयः ॥१॥**

उद्दीपयत्विति– आदिशक्तेः सर्वासां शक्तीनाम् इच्छाज्ञानक्रियात्मिकानां सृष्टिस्थितिलयतिरोधानानुग्रहकारिणीनां च या आदिः तस्याः मूलशक्तेः दरस्मितं मन्दहसितं वदनविकसितमिति यावत्, नः अस्माकं शक्तिम् अस्मत्सत्तायां अन्तर्गताम् अनभिव्यक्तां निद्रिताम् उद्दीपयतु उज्ज्वलयतु, अस्मासु निमग्नां शक्तिम् उद्धृत्य विजृम्भयतु। किं तत् दरस्मितं यदेवं प्रार्थ्यते? आह। यस्य दरस्मितस्य तत्त्वं स्वरूपं 'तत्त्वं विलम्बमाने स्यात् स्वरूपे परमात्मनि' इति नानार्थरत्नमाला। सूक्ष्मम् अलौकिकम् अन्तर्दृष्टिगोचरं महो ज्योतिरानन्दो वेति संशयो भवतीति शेषः। तमोपहत्वात् किमिदं मह इति दुःखापहत्वात् किमयमानन्द इति सन्देह इत्यर्थः। वस्तुतस्तु एकमेव तत्स्वरूपं ज्योतिः आनन्दश्च भवति। तत्पुरस्तात् स्पष्टं भविष्यति ॥१॥

अथ प्रथमं परतत्त्वं प्रतिपादयति—

**पूर्णं प्रज्ञात सद्ब्रह्म तस्य ज्ञानं महेश्वरी ॥**
**महिमा तेज आहोस्वि- च्छक्तिर्वा प्राण एव वा ॥२॥**

पूर्णमिति– पूर्णं पूर्णत्वावच्छिन्नं, पूर्णत्वं च स्वेतरान्यूनानतिरिक्तत्वावच्छिन्नप्रतियोगिताकम्, असमाभ्यधिकम् अद्वितीयमेकमित्यर्थः। प्रज्ञात् प्रज्ञानधर्मि विषयिचैतन्याभिव्यञ्जकं, सत् सत्ताप्रत्ययगोचरं ब्रह्म भवतीत्यध्याहार्यम्। यस्यैकस्य पूर्णत्वं प्रज्ञानं सत्तेत्येतानि स्वरूपधर्मतया स्थितानि तत् ब्रह्मत्युक्तम् 'तस्य ज्ञानं महेश्वरी' तस्य धर्मिभूतस्य ब्रह्मणः ज्ञानं महेश्वरी-

स्वरूपत्वादित्यर्थः। चित् सा चिता स्वयैव न विशिष्यते। विशिष्टप्रत्ययस्य सम्बन्धान्तरसापेक्षत्वात्। स्वस्य स्वेन विशिष्टता न सङ्गच्छत इति भावः। तस्मात् ज्ञानस्य ज्ञातृस्वरूपत्वात् गुणत्वं शङ्करेण भगवता शङ्करावतारिणा अद्वैताचार्येण भगवत्पादैरिति यावत् निराकृतम्। भाष्यग्रन्थेषु उपपत्तिपूर्वकं तथा प्रकरणग्रन्थेषु च निरस्तम् ॥४॥

अथ ज्ञातृज्ञानयोः प्रदीपप्रभयोरिवैकस्वरूपानभ्युपगमे दोषमाह —

**ज्ञातुर्ज्ञानं स्वरूपं स्या- न्न गुणो नापि च क्रिया ॥**
**यदि स्वस्य स्वरूपेण वैशिष्ट्यमनवस्थितिः ॥५॥**

ज्ञातुरिति– ज्ञातुर्विषयिचैतन्याभिव्यञ्जकस्य ज्ञानं चैतन्य स्वरूपं स्यात्। ज्ञानं ज्ञातृगतं न भवितुमर्हति। नापि च क्रिया, ज्ञातृकर्तृका क्रिया वा भवितुमर्हति। 'महिमा तेज आहोस्वित् शक्तिर्वा प्राण एव वा' इत्युक्तेः। ज्ञानं ज्ञातृगुणो मा भूत्, अस्तु ज्ञातृक्रियेति शङ्कायां तन्निरासाय न गुणो नापि क्रियेति निषेधोक्तिः। यदि स्वस्य स्वरूपेण वैशिष्ट्यं भवेत्, अनवस्थितिः स्यात् अनवस्थादोषः आपद्येत। अयं भावः। स्वस्य ज्ञातुः स्वरूपेण ज्ञानेन वैशिष्ट्यं विशेषणप्रयुक्तत्वं यदि भवेत्, स्वरूपस्य ज्ञानस्य तत्स्वरूपतया वैशिष्ट्यं, तस्यापि पुनः तत्स्वरूपेणेति अनवधिः भवेदुपपाद्योपपादकप्रवाहः। तस्मादनवधिककार्यकारणप्रवाहापत्तिः मा भूदिति ज्ञातुर्ज्ञानेन स्वरूपेण वैशिष्ट्यं नेष्यते ॥५॥

अथ ज्ञातृज्ञानयोरेक एव पदार्थश्चेत्, कुतो द्विधा व्यवहारः? ज्ञानं च ज्ञातृगतं, ज्ञातृ च ज्ञानवदिति चेदाह —

**वाचैव शक्यते कर्तुं विभागस्स्वस्वरूपयोः ॥**
**नानुभूत्या ततो द्वैतं सच्छक्त्योर्व्यावहारिकम् ॥६॥**

वाचेति– स्वस्वरूपयोः स्वस्य स्वरूपस्य च उभयोः विभागः विवेकः वाचैव कर्तुं शक्यते। वाचेति मनस उपलक्षणम्। यथा प्रदीपस्य प्रभायाश्च पृथक्करणं वाचा मनसैव वा शक्यते न तु वस्तुतः अनुभवेन, तथा ज्ञातुर्ज्ञानस्य च विभजनं वाचिकमेव न वास्तवम्, अनुभूत्या न कर्तुं शक्यते। ततस्तस्मात् सच्छक्त्योः सतः शक्तेश्च, द्वैतं द्वितैव द्वैतं, द्विधा पृथग्भाग इति

यावत्, व्यावहारिकं व्यवहारसिद्धं, न तु वस्तुगतम्। अत्र अयमभिसन्धिः। द्रव्याश्रितगुणक्रियादीना पृथक्पदार्थत्वं नाभिमतम्। शारीरकभाष्ये द्वितीयाध्यायस्य द्वितीयपादे 'अपरिग्रहाच्चात्यन्तमनपेक्षा' इति सूत्रव्याख्याने भगवत्पादैः निपुणतरमिदमुपपादितम्— 'अथ भवति द्रव्याधीनत्वं गुणादीनाम्' इति प्रकृत्य 'तस्माद् द्रव्यात्मकता गुणस्य, एतेन कर्मसामान्यविशेषसमवायानां द्रव्यात्मकता व्याख्याता' इत्यादिना। अथ च क्वचिद् गुणैः विशिष्टत्वं सतो ब्रह्मण उच्यते श्रुतिस्मृतिपुराणेष्विति चेत्, गुणाः धर्मे उपचरिताः, धर्मपरतया ग्राह्या इत्याचार्यस्याशयः। अत्रायमस्य श्लोको भवति — 'प्रज्ञानस्य गुणत्वं यत् प्रज्ञातुर्द्रव्यता च या। धर्मत्वादपि धर्मित्वात्तद् द्वयं चौपचारिकम् ॥' इति ॥६॥

उक्तं ज्ञातृज्ञानयोरेकमेव स्वरूपम्; तयोः द्विधाभावः व्यवहारमात्रः; वस्तुतो नेति। जानातेः सकर्मकत्वात् कस्तर्हि ज्ञानगोचरः? यश्च ज्ञानस्य विषयो भवति स ज्ञातुरन्य एव स्यात्। 'असति च ज्ञेये सतो ज्ञातृत्वमेव न सिद्ध्येत् इति शङ्कायामाह —

**ब्रह्मज्ञानस्य पूर्णस्य विषयो द्यौरुदीर्यते ॥**
**सा ब्रह्मणो व्यापकत्वा- द्वस्तुतो नातिरिच्यते ॥७॥**

ब्रह्मेति— पूर्णस्य अभिन्नस्य ब्रह्मज्ञानस्य ब्रह्मणः सतः ज्ञातुः ज्ञानस्य विषयः द्यौः अन्तरिक्षम् आकाश इति यावत्, उदीर्यते उच्यते। सा च द्यौः वस्तुतः सतो ब्रह्मस्वरूपत्वात् नातिरिच्यते न व्यतिरिक्ता। कुतः? ब्रह्मणो व्यापकत्वात्। द्वितीयकारिकायां व्याख्याने च 'महिमा व्यापकत्वतः' इति प्रतिपादितम्। ब्रह्मणो बृहत्त्वम् एव महत्त्वं भवति। तच्च व्यापकतया आकाशरूपेण गृह्यते। तस्मादाकाशं विभु ब्रह्म, स्वीयं व्यापकत्वं ब्रह्मज्ञानस्य विषयो भवतीत्यर्थः। तस्मादस्य वस्तुतः सतोऽव्यतिरेकः ॥७॥

आकाशस्योत्पत्तिविनाशौ श्रूयेते, कथं तत् नित्यम् अनाद्यनन्तं ब्रह्म भवतीति चेदाह —

**विकासादपि सङ्कोचात् सर्गप्रलययोर्द्वयोः ॥**
**प्रज्ञानस्य बुधैरुक्तौ जन्मनाशावुभौ दिवः ॥८॥**

विकासादिति— सर्गप्रलययोः सर्गस्य सृष्टेः प्रलयस्य च विलयस्य द्वयोः विकासाद्विजृम्भणात् सङ्कोचात् सङ्ग्रहादपि हेतोः प्रज्ञानस्य दिवः आकाशरूपिणो ब्रह्मणो जन्म-नाशौ उत्पत्तिः नाशश्चोभौ बुधैरुक्तौ। विकासात्सृष्टिः सङ्कोचाच्च प्रलयः। जगतः सृष्टिप्रलययोः सत्त्वात् तन्मूलस्य आकाशस्यापि उत्पत्ति-लयश्रुतिर्भवति। वस्तुतस्तु सः आकाशो ब्रह्मवैभवमेव भवति, तन्नोत्पद्यते। तैत्तिरीयाणामुत्पत्तिश्रुतिस्तु जगत्सृष्टयपेक्षया ॥८॥

अनुत्पन्नमाकाशं ब्रह्मानतिरेकादित्याह—

**धर्मभूतं परस्येदं　न कार्यं परमं नभः ॥**
**अखण्डत्वान्न विकृति-　र्विश्वस्मिन्नप्रकृतित्वतः ॥९॥**

धर्मभूतमिति— परस्य ब्रह्मणो धर्मभूतं धर्मतां गतम्, इह भूतशब्दः स्वरूपवाची, न तूपमार्थे, इदं परमम् उत्तमं नभः परमव्योमपदवाच्यम् अन्तरिक्षम् न कार्यं, तस्यैव ब्रह्मत्वात् विश्वकारणत्वाच्च। अत एव छान्दोग्यश्रुतिराकाशस्यानुत्पत्तिं श्रावयति प्राणस्य च। कुतोऽनुत्पत्तिः? पूर्णं ब्रह्म तन्महत्त्वं चाखण्डम्। अखण्डत्वात् हेतोः न विकृतिः। विकृतित्वे तु कार्यं स्यात्। तन्न। प्रत्युत विश्वस्मिन् सर्वत्र विक्रियमाणे अवशिष्यमाणस्य विभोराकाशस्य प्रकृतित्वं भवतीति हेतोः न विकृतिरित्यर्थः। प्रकृतित्वं च उपादानकारणं बोध्यम्। एवं परस्य ब्रह्मणो धर्मिणो धर्म एव आकाशमिति स्थितम्। धर्मश्च भावादनन्यः 'यस्मिस्तत्त्वं न विहन्यते स भावो धर्मः' इति महाभाष्यकारः। एवम् अप्युपपद्यते— 'आकाशशरीरं ब्रह्म' इत्यादिश्रुतिः। प्रज्ञातुः सतः परमात्मनः प्रज्ञानस्य विषयतया व्यापकमाकाशं स्वं वपुरित्युक्तम्। अनेन धर्मिणो वैभवं प्रतिपादितम् ॥९॥

अथ धर्मस्य वैभवमाह—

**आकाशे परमे दीप्यत्　प्रज्ञानं परमात्मनः ॥**
**एकाग्रत्वात्प्रवृद्धोष्म-　गभीरमभवन्महः ॥१०॥**

आकाश इति— आकाशे विषये स्वशरीरभूते दीप्यत् ज्वलत् परमात्मनः अस्मीति नित्यं स्फुरतः अहम्पदपरमार्थस्य आत्मनः सतः प्रज्ञानम् एकाग्रत्वात् स्वतोऽन्यस्याभावात् स्वस्मिन्नेव घनतया स्थितेर्हेतोः स्वास्थ्यादिति यावत्,

प्रवृद्धोष्मगभीरं प्रवृद्धेन ऊष्मणा घर्मेण तपसेत्यर्थः गभीरं गम्भीरं महस्तेजः अभवत्। प्रज्ञानस्य व्यापकत्वे एकाग्रतया अवस्थानात् तपोविजृम्भणेन पाचकत्वलक्षणं तेजस्त्वं समपद्यतेत्यर्थः ॥१०॥

एतावतोक्तमर्थं सङ्क्षिप्य प्रज्ञानस्य त्रिधाऽवस्थानं निष्कृष्टमाह —

**त्रिधैवं धर्मभूतस्य ज्ञानस्य विकृतिं विना ॥**
**शुद्धत्वविषयत्वाभ्यां महस्त्वाच्च दशात्रयम् ॥११॥**

त्रिधेति— धर्मभूतस्य विकृति विना विकृतिं वर्जयित्वा स्वस्थस्य अत एव प्रकृतिभूतस्य ज्ञानस्य प्रज्ञानस्य, एवम् उक्तप्रकारेण त्रिधा त्रिप्रकारेण दशात्रयम् अवस्थात्रयं भवतीति शेषः। कुतः शुद्धत्व-विषयत्वाभ्यां शुद्धत्वात् प्रकृतित्वेन स्थितेः, विषयत्वाच्च व्यापकत्वेन स्थितेः, महस्त्वात् विकृतिनिमित्तस्य तपोवैभवस्य तेजसः पाचकत्वेन स्थितेः च इति तिस्रो दशाः प्रज्ञानस्य भवन्ति इत्यर्थः। अनेन प्रज्ञानस्य धर्मस्य प्रज्ञातृगता स्वरूपेणावस्थितिः शुद्धा दशा। आकाशे विषये व्यापकता विषयदशा, तपोवैभवजा पाचकता महस्त्वदशा चेत्युक्तं भवति। एवं दशात्रयवत् प्रज्ञानं सतः प्रज्ञातुर्ब्रह्मणो धर्मो भवति, स एव महेश्वरी परा शक्तिरुच्यत इति बोध्यम्। प्रथमस्तबके व्याख्यायां च निखिलजगत्कारणप्रसङ्गे आकाशः उपादानकारणं, निमित्तकारणं तु तपः उभेऽपि कारणे एक एव सर्वशक्त इत्युपपादितं द्रष्टव्यम्। प्रज्ञानस्य दशात्रयमित्यत्र वर्तिपर्यायदशापदार्थसामर्थ्याद्यथा एकस्य दीपस्य एकस्मिन्नेव काले तिस्रो वर्तयः वर्तन्ते, तथा एकस्यैव प्रज्ञानस्य समानकालं दशात्रयमिति गम्यते। तस्मात् प्रज्ञानं त्रिमुखतया शुद्धां स्वस्थितिम् अजहत् आकाशं व्याप्य तपसा विश्वपरिपाकं विधत्त इति फलितम्। आनन्दो ब्रह्म, आकाशशरीरं ब्रह्म, यदेष आकाशो आनन्दो न स्यादित्यादिश्रुतयः आकाशस्य ब्रह्मणः विश्वोपादानकारणतां प्रतिपादयन्ति। 'तदैक्षत, स तपोऽतप्यत, सोऽकामयत' इत्यादिवाक्यानि अनतस्तपतो द्रष्टुर्ब्रह्मणः जगन्निमित्तकारणतामुद्घोषयन्ति। 'सोऽहम् अस्मीति व्याहरत् ततोऽहम् नामाभवत्' इत्यादिश्रुतिस्तु विश्वकार्यकारणभावमापन्नमपि स्वतः कार्यकारणवर्जितं शुद्धं सद्ब्रह्मेति तस्य नित्यशुद्धतां बोधयति। एवमपि दशात्रयम् उपपद्यत इत्यलम् ॥११॥

अथ तपःप्रभावादाकाशाद्विश्वस्मिन् विकसिते, तत्र अस्मदादीनां जन्मसु

च निष्पादितेषु, सर्वं जगत् स्वतन्त्रमिव स्वतःसिद्धमिव सामान्यप्रतीतिः स्थूलधियां साधारणी भवति। तत्र विचारः क्रियते विज्ञान इति—

**विज्ञाने भाति ये भान्ति भावा द्रव्यगुणादयः ॥**
**न किञ्चिदनुभूयन्ते विज्ञानोपरमे तु ते ॥१२॥**

विज्ञान इति– विज्ञाने विशिष्टज्ञाने वृत्तिविशिष्टज्ञाने भाति सति ये भावाः पदार्थाः द्रव्यगुणादयः आदिशब्देन कर्मसामान्यविशेषसमवायाः ग्राह्याः भान्ति भासन्ते धीगोचरा भवन्ति। ते भावाः विज्ञानोपरमे तु विज्ञानस्याभाने निद्रादौ न किञ्चित् नाल्पमपि अनुभूयन्ते। विज्ञानभानाधीनमेव द्रव्यादिभावानां भानमित्यर्थः ॥१२॥

अत्र विज्ञानं वृत्तिविशिष्टज्ञानं विषयिगतं बोध्यम्। तेन विषयिज्ञानस्य प्रकाशकत्वं ज्ञेयस्य विषयस्य प्रकाश्यत्वं चोक्ते भवतः। तदाह विषयः स्वतः प्रकाशो न भवतीति—

**एवं स्वतः प्रकाशत्वं विषयाणां न दृश्यते ॥**
**सिद्धिश्च परतो न स्यात् सम्बन्धं कञ्चिदन्तरा ॥१३॥**

एवमिति– विषयाणां स्वतः प्रकाशत्वं न दृश्यते। सत्येव प्रकाशके विज्ञाने विषयाः प्रकाशाः भवन्ति। परतः अन्यतः स्वतोऽन्यस्मात् कञ्चित् सम्बन्धमन्तरा केनापि सम्बन्धेन विना सिद्धिश्च न, विषयाणां विषयत्वेनावस्थितिः न स्यात्। अयमर्थः। विषयाणां विषयत्वसिद्धिः विषयिणः सम्बन्धं विना न भवति। ज्ञातुः सम्बन्धं वर्जयित्वा विषयाणां ज्ञेयत्वं न भवति। तस्मात् इदं द्वयं बोध्यम्। विषयाणां नास्ति स्वतः प्रकाशः, प्रकाशत्वं तु विज्ञानभानायत्तम्। स्वतो विषयत्वसिद्धिश्च न भवति, विषयिज्ञातृसम्बन्धात् तु भवति ॥१३॥

भवत्वेवं स्वतोऽप्रकाशत्वं स्वतःसिद्ध्यभावश्च। विषयिणो ज्ञातुः भिन्नाः भावाः वर्तन्त एवेति चेदाह—

**दृश्यते विषयाकारा ग्रहणे स्मरणे च धीः ॥**
**प्रज्ञाविषयतादात्म्यमेवं साक्षात्प्रदृश्यते ॥१४॥**

दृश्यत इति— ग्रहणे पदार्थविबोधने, स्मरणे अवबुद्धानां भावानां स्मरणे च, धी. बुद्धि: वृत्त्यात्मकं ज्ञानमित्यर्थ: विषयाकारा विषयरूपेणावस्थिता दृश्यते । एव ग्रहणस्मरणात्मकस्य विज्ञानस्य विषयाकारतयाऽवस्थानात् हेतो: प्रज्ञाविषयतादात्म्यं प्रज्ञाया. धीवृत्तेः विषयस्य च तादात्म्यं तदाकारतासम्बन्धः साक्षात्प्रदृश्यते, सर्वेपापनुभवसिद्धम् इति भाव:। प्रज्ञाया वृत्तेः विषयाद्भिन्नत्वे सति विषयादभिन्नत्वेन स्थितेः वृत्तिविषययो: तन्तुपटयोरिव तादात्म्यसम्बन्धो बोध्य: । सद्भावस्य विषयाकारतया भानं वृत्तिवैभवात्, यथा तन्तूनां पटात्मकता तन्तुवायेच्छासामर्थ्यात्, तथा एकस्यैव सत आकाशस्य ब्रह्मणः नानाभावत्वेन विषयात्मकता तपोवैभवकृतेत्यवगन्तव्यम् ॥१४॥

तदाहोत्तरकारिकया—

**न चेत्समष्टिविज्ञान- विभूतिरखिलं जगत् ॥**
**विषयव्यष्टिविज्ञान- तादात्म्यं नोपपद्यते ॥१५॥**

न चेदिति— अखिलं जगत् सर्वत: विषयाकारेणावस्थितम् इदं विश्वं समष्टिविज्ञानविभूतिर्न चेत्, समष्टेः समुदायभावापन्नस्य पूर्णस्य सतो मूलवस्तुन इत्यर्थ: विज्ञानस्य तपोमहिम्ना व्याप्य स्थितस्य विशिष्टज्ञानस्य विभूतिर्वैभवं न भवति चेत्, विषयव्यष्टिविज्ञानतादात्म्यं विषयस्य ग्रहणध्यानगोचरस्य पदार्थस्य, व्यष्टिविज्ञानस्य पृथगवभासमानविज्ञानस्य च उभयो: तादात्म्यं भेदेऽप्यभेदसम्बन्ध: नोपपद्यते न युक्तो भवति । अस्मदादीनां प्रज्ञाविषयतादात्म्यं प्रागुक्तम्। इह तस्य हेतुरुच्यते। समष्टिविज्ञानस्य जगतश्च तादात्म्यादेव समष्टेरन्त: पृथगवभासमानस्य व्यष्टिविज्ञानस्य तद्विषयस्य च तादात्म्यं सम्भवतीत्याशय: । उभयोस्तादात्म्यसम्बन्धे प्रतिपाद्यमाने तत्र भेदोऽभेदश्च स्याताम्। न चेत् सम्बन्धो न सम्भवेत् ॥१५॥

विकृत्या भेद: प्रकृत्या अभेद इति तमाचष्टे—

**यथाऽस्मदादिविज्ञाने ध्येयं बुद्धिरिति द्वयम् ॥**
**पूर्णे समष्टिविज्ञाने विकृतिः प्रकृतिस्तथा ॥१६॥**

यथेति– अस्मदादिविज्ञाने अस्मदादीनां विज्ञाने व्यष्टिविज्ञाने धीवृत्ताविति यावत्, ध्येयं ध्यानगोचरं ज्ञेयं विषयभूतं बुद्धिः ज्ञानम् इति यथा द्वयं भवति, तथा पूर्णे अखण्डे समष्टिविज्ञाने विकृतिर्विश्वात्मिका विषयाकारा ज्ञेया, प्रकृतिर्ज्ञानाकारा मूलज्ञानम् इति द्वयं भवति ॥१६॥

अथ ज्ञानस्यैव ज्ञेयाकारतया परिणामो भवतीत्याह—

**परिणामो यथा स्वप्नः सूक्ष्मस्य स्थूलरूपतः ॥**
**जाग्रत्प्रपञ्च एष स्या- त्तथेश्वरमहाचितः ॥१७॥**

परिणाम इति– यथा सूक्ष्मस्य ज्ञानस्य स्थूलरूपतः स्थूलाकारतया परिणामः विकारः स्वप्नो भवति, तथा ईश्वरमहाचितः ईश्वरस्य महाचितः महत्याः सूक्ष्मतमायाः कारणभूतायाः चितः प्रज्ञायाः समष्टिविज्ञानस्येति यावत्, परिणाम एव एष जाग्रत्प्रपञ्चः स्यात्। अस्मदादीनां जाग्रदवस्थायां यो विश्वविस्तारो स्थूलतया गोचरो भवति, स सूक्ष्मतमस्य समष्टिविज्ञानस्य परिणामविशेषोऽस्मदादीना धीपरिणामः स्वप्न इव भवति इत्यर्थः ॥१७॥

अथ प्रकृतिविकृत्योर्विशेषं ज्ञापयति—

**विकृतिस्सर्वभूतानि प्रकृतिः परदेवता ॥**
**सतः पादस्तयोराद्या त्रिपादी गीयते परा ॥१८॥**

विकृतिरिति– सर्वभूतानि सर्वाणि भूतानि जातानि भुवनानि प्राणिनो वा विकृतिरुच्यन्ते। विकृतित्वं च प्रकृतिपरिणामत्वम्। परदेवता परा देवता सती शक्तिः महेश्वरीति वाच्या परस्य ब्रह्मणो धर्मभूता प्रकृतिर्भवति। प्रज्ञानस्य दशात्रयं प्राग्व्याख्यातम्। तत्र तिसृषु दशासु एका व्यापकता आकाशरूपिणीत्युक्तम्। तदिह परदेवतायाः सर्वभूतप्रकृतित्वं स्पष्टं प्रतिपादितम्। यद्यपि सर्वाणि भूतानि सतो व्याकृतानि विकृतिरित्युक्तम्, तथाऽपि अखण्डस्य पूर्णस्य सतो ब्रह्मणोऽव्ययत्वम् अविकार्यत्वं च द्योतयितुम् अंशत एवेदं सर्वं विकृतिर्भवतीति मन्त्रवर्णं स्मारयति। तयोः द्वयोराद्या विकृतिः सर्वभूतात्मिका सतो ब्रह्मणः पादोऽल्पांशो भवति 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः। परा अन्या प्रकृतिः परदेवता त्रिपादी भूयिष्ठभागा गीयते भवति 'त्रिपादस्यामृतं दिवि' ॥१८॥

अथ प्रकृतेः पादतः विश्वविकृतिप्रादुर्भावे कथं तस्या एकस्मिन्नेव काले अविकार्यत्वं विकारहेतुत्वम् उभयमप्युपपद्यते ? तदाह—

**कबलीकृत्य सङ्कल्पा- नेकाऽपि स्याद्यथा मतिः ॥**
**भूतानि कबलीकृत्य देवताऽपि तथा परा ॥१९॥**

कबलीकृत्येति— यथा मतिः अस्मदादीनां बुद्धिः एकाऽपि सङ्कल्पाननेकान् कबलीकृत्य ग्रसित्वा आत्मसात्कृत्य स्यात्, तथा परा देवताऽदपि भूतानि सर्वाणि जातानि कबलीकृत्य स्यादिति सम्बन्धः। यथा सङ्कल्पानां बहुत्वे भिन्नत्वेऽपि, ते सर्वेऽपि पृथक् साकल्येन च बुद्धेः परिणामा भवन्ति, बुद्धेश्च सङ्कल्पात्मकपरिणामेन न हानि. ॥१९॥

एवं परस्या. देवनायाः जातानां भूतानां बहुत्वे भिन्नत्वेऽपि सर्वाणि च पृथक् साकल्येन च परदेवतापरिणामा एव भवन्ति, तस्यामेव तदाकाराणि भवन्ति इत्यर्थः। तस्माद्भेदलक्षणस्य सर्वस्य सर्गः संहृतिश्चैकत्रैवेति हेतोरेकानेकयोरविरोध इति उपपादयति भूतानामित्यादिना—

**भतानामात्मनस्सर्गे संहृतौ च तथाऽऽत्मनि ॥**
**प्रभवेद्देवता श्रेष्ठा सङ्कल्पानां यथा मतिः ॥२०॥**

भूतानामिति— आत्मनः सतः पूर्णात् परमात्मनः भूतानां सर्गे सृष्टिविषये, तथा तस्मिन्नेवात्मनि संहृतौ संहारविषये च श्रेष्ठा देवता प्रभवेत् समर्थेत्यर्थः। आत्मनः सर्वस्य भूतजातस्योत्पत्तिरात्मन्येव लयश्च भवतः, परदेवतायाः प्रभावादित्यर्थः। तच्च दृष्टान्तेन द्रढयति। यथा मतिः स्वात्मनः सङ्कल्पानामुदये स्वात्मन्येव विलये च प्रभवति, तथेति पूर्वेण सम्बन्धः। समष्टेः व्यष्टेर्वा विज्ञानस्य सङ्कोच-विकासावेव सर्ग-प्रलयौ बोध्यौ। तथा च प्रागुक्ता कारिका। सङ्कोचे प्रज्ञा शून्यवद्भवतीति हेतोः, वस्तुत पूर्णाऽपि प्रज्ञा शून्यमित्युच्यते कैश्चित्। आचार्यकृतस्तदेष श्लोको भवति— 'सङ्कोचे शून्यवत्प्रज्ञा विश्रान्ता स्वाश्रये भवेत्। तस्माच्छून्याख्यया सेयमुच्यते कैश्चिदीश्वरी'॥ इति ॥२०॥

कथं तर्हि परा देवतेयं स्वरूपतो ज्ञायतेऽस्मदादिभिरिति प्रश्ने, ब्रूते–

**अनुभूत्यात्मिका सेय- मीशशक्तिः परात्परा ॥**
**आधारचक्रे पिण्डेषु विराजति विभिन्नवत् ॥२१॥**

अनुभूत्येति– अनुभूत्यात्मिका अनुभूतिरात्मा स्वरूपं यस्याः सा, एवं कीर्तिता प्रज्ञातुः सतो धर्मभूता प्रज्ञानात् प्रकृतेः विश्वविकृतिहेतुः विज्ञानमयी इयं परात्परा ईशशक्तिः ईश्वरशक्तिः महेश्वरी एकैव पिण्डेषु पाञ्चभौतिकेषु देहेषु विभिन्नवत् विभिन्नया तुल्य पृथक् एकैकस्मिन् देहे विभक्तेव आधारचक्रे देहधारणस्य आधारभूते मूलाधाराख्यस्थाने विराजति। सर्वेषामपि देहेषु प्रत्येकं विभक्तेव अविभक्ता कुण्डलिनीशब्दवाच्या परात्परा विभासते। अनुभूत्यात्मिकेत्यत्र इदमवधेयम्। अनुभूति. साक्षाद्वेदनम्। विगलितवेद्यान्तरो घनोऽनुभवः। यद्यपि वृत्तिविषयग्रहणस्मरणादिभ्योऽयम् अनुभवो निष्पाद्यतेऽभिव्यज्यते वा तथाऽपि निष्पन्नोऽनुभवस्तु वृत्तिविषयनिरपेक्षो भासते। अत एव विगलितवेद्यान्तरोऽनुभव इति कीर्त्यते। ॥२१॥

एव विश्वकारणभूतायाः परस्याः शक्तेरधिपिण्डं मूलाधारे कुण्डलिनीरूपेण अवस्थानं प्रतिपाद्य तस्याः कारणभूतायाः सूक्ष्मस्थूलभेदेन पिण्डे शाखाद्वयीति शक्तिद्वयं निरूपयति–

**सूक्ष्मस्थूले ततः शाखे विद्युच्छक्तिसमीरवत् ॥**
**तत्राद्या ज्ञानशक्तिस्स्यात् क्रियाशक्तिरनन्तरा ॥२२॥**

सूक्ष्मेति– ततः तस्याः आधारचक्रेऽवस्थितायाः परस्याः शक्तेः सूक्ष्मस्थूले सूक्ष्मा च स्थूला च शाखे द्वे विद्युच्छक्तिसमीरवत् विद्युच्छक्तिः आकाशे सर्वत्र व्यापिनी सूक्ष्मा शक्तिः समीरः वायुः जगत्प्राणश्च ताभ्यां तुल्यं, ताविवेत्यर्थः। यद्यपि समीरोऽपि सूक्ष्म एवास्माकं, विद्युच्छक्त्यपेक्षया समीरस्य स्थूलत्वं स्पर्शगम्यत्वात्। तत्र तयोः शाखयोराद्या सूक्ष्मा विद्युच्छक्तिस्थानीया ज्ञानशक्तिः स्यात्। अनन्तरा तदनुवर्तिनी स्थूला शाखा क्रियाशक्तिः स्यादिति शेषः। अत्रैष श्रीमहर्षेः उपदेशसारश्लोको भवति– 'चित्तवायवश्चित्क्रियायुताः शाखयोर्द्वयी शक्तिमूलका' इति ॥२२॥

अथ शक्तिद्वयी विवृणोति—

**ज्ञानेन्द्रियाणि प्रथमा विभूतिर्मनसा सह ॥**
**कर्मेन्द्रियाणि त्वपरा विभूतिस्सहसा सह ॥२३॥**

ज्ञानेन्द्रियाणीति— मनसा सह ज्ञानेन्द्रियाणि चक्षुरादीनि प्रथमा विभूतिः सूक्ष्मा ज्ञानशक्तिः भवति, मनसेति अन्तःकरणस्योपलक्षणम्। सहसा सह बलेन ओजसेति यावत्, कर्मेन्द्रियाणि वागादीनि अपरा विभूतिः स्थूला क्रिया-शक्तिरिति बोध्यम् ॥२३॥

एवं परस्याः देवतायाः तत्त्वमुपदिश्य, तत्प्राप्त्युपायमाचष्टे—

**क्रियामूलमुत ज्ञान- मूलं किमिति चिन्तयन् ॥**
**आत्मशक्तिमितो विद्वा- नमृतत्वाय कल्पते ॥२४॥**

क्रियामूलमिति— क्रियामूलं क्रियाशक्तेः मूलम् उत समुच्चये ज्ञानमूलं ज्ञानशक्तेर्मूलं च किमिति चिन्तयन् ध्यायन् उभयोः मूलं क्वेति एकाग्र-ध्यानेन जिज्ञासमानः पुरुषः आत्मशक्तिं स्वशक्तिम् इतः प्राप्तः विद्वान्सन् अमृतत्वाय कल्पते प्रभवति अमृतो भवति इत्यर्थः ॥२४॥

उपसहरति स्तबकम्—

**गभीरास्सुतरामेताः कालिकातत्त्वकारिकाः ॥**
**धियो भासो गणपते- र्भवन्तु विदुषां मुदे ॥२५॥**

गभीरा इति— गणपतेः मम शुद्धाया धियः बुद्धेः भासः द्युतयः एताः स्तबके उक्ताः सुतराम् अत्यन्तं गभीराः अगाधाः कालिकातत्त्वकारिकाः कालि-कायाः परदेवतायाः तत्त्वस्य स्वरूपस्य प्रतिपादिकाः कारिकाः विदुषां मुदे प्रीतये भवन्तु ॥२५॥

सप्तत्रिंशः स्तबकः सव्याख्यः समाप्तः ॥

# अष्टत्रिंशः स्तबकः

दशमहाविद्याः पूर्वमुल्लिखिताः, तासां स्वरूपं निरूप्य तदुपास्तिफलानि व्याचष्टे अस्मिन्नष्टत्रिंशे स्तबके ॥

**दूरीकुरुताद् दुःखं निखिलं दुर्गायास्तद्दरहसितं नः ॥**
**रचितस्याम्भोमृद्भ्यां यदभू- ल्लेपनममलं ब्रह्माण्डस्य ॥१॥**

दुरीकुरुतादिति– दुर्गायाः अम्बायाः तत् दरहसितं मन्दस्मितं नः अस्माकं निखिलं दुःखं दूरीकुरुतात् दूरीकरोतु अपहरत्विति यावत्। यत् दरहसितम् अम्भोमृद्भ्याम् अम्भसा मृदा च रचितस्य निर्मितस्य ब्रह्माण्डस्य अमलं स्वच्छं लेपनं वर्णविलेपनं तेजः अभूत्। अम्भोमृद्भ्यामित्यनेन ब्रह्माण्डस्य भाण्डत्वमाक्षिप्यते। ब्रह्माण्डं तेजोऽबन्नैस्त्रिभिः धातुभिः सृष्टमिति छन्दोगानां श्रुतिः। तस्मादम्भसा अद्भिः, मृदा अन्नेन च सृष्टस्य अणिष्ठो धातुस्तेज एव मूलं सृष्टिपूरकं व्यापकं च भवति। तच्च तेजः दरहसितेनोक्तम्। तेजसा विना अबन्नमयस्य ब्रह्माण्डस्य शोभैव न स्यात्, शोभाविशेषेण रहितं च निस्तेजो भवेत् ब्रह्माण्डं, अत एव न दृश्यं स्यात्। तस्मात् ब्रह्माण्डस्य दृश्यत्वसिद्धयै शोभावहं भवति व्यापकं दरहसितम्। मृज्जलनिर्मितस्य यथा भाण्डस्य वर्णलेपेन शोभावहत्वं तथा अबन्नसृष्टस्य ब्रह्माण्डस्य व्यापकं शोभावहं तेजो भवति दरहसितमित्युपमाध्वनिः ॥१॥

**जन्तौ जन्तौ भुवि खेलन्ती भूते भूते नभसि लसन्ती ॥**
**देवे देवे दिवि दीप्यन्ती पृथगिव पूर्णा संविज्जयति ॥२॥**

जन्ताविति– भुवि भूलोके जन्तौ जन्तौ जन्तुषु प्रत्येकं खेलन्ती क्रीडन्ती, नभसि अन्तरिक्षे भुवर्लोके भूते भूते भूतेषु देवयोनिविशेषेषु प्रत्येकं लसन्ती विलसन्ती, दिवि द्युलोके स्वर्लोके देवे देवे प्रतिदेवं दीप्यन्ती ज्वलन्ती, पूर्णा संवित् चितिः एकाऽपि पृथगिव भिन्नेव जयति ॥२॥

**दहरसरोजाद् द्विदलसरोजं द्विदलसरोजाद्दशशतपत्रम् ॥**
**दशशतपत्राद्देहं देहात् सकलं विषयं संविद् व्रजति ॥३॥**

दहरेति– संवित् चितिः दहरसरोजात् हृदयकमलात् द्विदलसरोज भ्रूमध्य-कमलम् आज्ञाचक्रं, तस्य द्विदलत्वं तन्त्रेषु प्रसिद्धम्, व्रजति प्राप्नोति। द्विदल-सरोजात् आज्ञाचक्रात् दशशतपत्रं सहस्रारं व्रजति। दशशतपत्रात् देहं शरीरं व्रजति, देहात् सकलं बाह्यं विषयं व्रजति। अत्र चितो मूलस्थानं हृदयमिति तत्र प्रारम्भात् स्पष्टं भवति। स्वगुरोर्महर्षेरुपदेशोऽयं श्रीरमणगीतायां सवि-स्तरमुक्तः। 'तस्मात्प्रवहति ज्योतिः सहस्रारं सुषुम्नया। सर्वं देहं सह-स्रारात् तदा लोकानुभूतयः' ॥ (तस्मात् हृदयात्) (रमणगीता अ. '५, श्लो. ६-७.) ॥३॥

**वह्निज्वाला समिधमिवैषा सकलं देहं संवित्प्राप्ता ॥**
**पृथगिव भूता व्यपगतवीर्या भवति सधूमा संसाराय ॥४॥**

वह्नीति– एषा संवित् हृदयनिलया वह्निज्वाला अग्निज्वाला समिधमिव इन्धनम् इवेत्यर्थः। सकलं देहं व्याप्ता पृथगिव भूता वस्तुतोऽखण्डाऽपि भिन्नेव जाता अत एव व्यपगतवीर्या क्षीणबला सधूमा अस्वच्छा जडसम्पर्कादशुद्धा आवृतेति यावत्, संसाराय बन्धाय भवति। संविदः स्वस्थानात् हृदयात् देहे स्खलनं संसारहेतुरित्युक्तम् ॥४॥

अथ प्रज्ञास्खलनहेतुकसंसारस्य स्वरूपमाह—

**अत्रानुभवस्सुखदुःखाना- मत्राहङ्कृतिरनृता भवति ॥**
**अत्रैवेदं सकलं भिन्नं प्रतिभासेत प्रज्ञास्खलने ॥५॥**

अत्रेति– अत्र अस्मिन् प्रज्ञास्खलने निमित्तसप्तमी, सुखदुःखानामनुभवः। अत्र अहङ्कृतिः अनृता मृषा भवति। सत्या अहङ्कृतिस्तु पूर्णाहम्भावस्थितिः अहमाश्रयस्वरूपस्फूर्तिः, सा नैवाहङ्कृतिपदवाच्या। अहङ्कृतेरनृतत्वं तु इद-न्तास्पदे देहादौ अहन्ताप्रतीतिरेवेति बोध्यम्। अत्रैव इदं सकलं जगत् भिन्नं भेदवत् पृथगवस्थितं प्रतिभासेत। प्रज्ञायाः अस्खलने नैष दुःखानृतभेदबहुलः संसारः स्यादित्यर्थः ॥५॥

तस्मादस्य संसारस्य निवृत्त्युपायो नित्यया निष्ठया भवतीति तत्प्रकारमाह–

**दशशतपत्राद् द्विदलसरोजं द्विदलसरोजाद्दहरसरोजम् ॥**
**अवतरतीशा येषामेषा तेषामन्तर्नित्या निष्ठा ॥६॥**

दशशतपत्रादिति– ईशा ईश्वरी संवित् येषां योगिनां दशशतपत्रात् सहस्रारात् द्विदलसरोजम् आज्ञाचक्रम् अवतरति, द्विदलसरोजादाज्ञाचक्रात् दहरसरोजं हृदयकमलम् अवतरति, तेषां नित्या अन्तः अचञ्चला सिद्धा निष्ठा भवतीति शेषः। सहस्रारं मनःस्थान, स्वोदयस्थानं हृदयं विहाय शिरसि स्थितस्य विक्षेपस्तस्मात् संसारो भवति। तस्य प्रतिक्रिया सहस्रारादाज्ञाचक्रद्वारा स्वमूलस्थानप्राप्तिरेव। तत्र निष्ठा नित्येत्युक्तम् ॥६॥

अथ उपासनप्रकारान्तराण्याह—

**अथवा देहादावृत्तस्स- न्नन्यतमस्यामासु स्थल्याम् ॥**
**आधारस्थे कुलकुण्डे वा स्थितधीर्नित्यां निष्ठां लभते ॥७॥**

अथवेति– अथवा पक्षान्तरे, देहात् शरीरादावृत्तः परावृत्य अन्तर्मुखः सन् वक्ष्यमाणासु स्थलीषु अन्यतमस्याम् आसु बह्वीष्वेकस्या स्थल्यां स्थाने इत्यर्थः। आधारस्थे मूलाधारस्थे कुलकुण्डे कुण्डलिनीनिवासाग्निकुण्डे वा स्थितधीः स्थिता धीः प्रज्ञा यस्य सः प्राप्तस्थितिपदः नित्या निष्ठां लभते ॥७॥

अथ ललितात्रिपुरसुन्दर्यादीनां महाविद्याना स्वरूपाण्युपास्तीश्चाह —

**दशशतपत्रे शक्तिर्ललिता वज्रवती सा द्विदलसरोजे ॥**
**दहराम्बुरुहे भद्रा काली मूलाधारे भैरव्याख्या ॥८॥**

दशेति– दशशतपत्रे सहस्रारे महाशक्तिः ललिता त्रिपुरसुन्दरी राजते। सा शक्तिः द्विदलसरोजे भाले आज्ञाचक्रे वज्रवती ऐन्द्री शक्तिः वज्रवैरोचनी छिन्नमस्ता प्रचण्डचण्डी इति नामभिराख्याता विलसति। दहराम्बुरुहे हृदयकमले दहराकाशे भद्रा काली माङ्गल्यावहत्वात् भद्रकाली भ्राजते। मूलाधारे कुलकुण्डे भैरव्याख्या भैरवी आख्या नाम यस्याः सा शक्तिः त्रिपुरभैरवीत्यर्थः ज्वलति ॥८॥

**खेलति ललिता द्रवति स्थाने छिन्नग्रन्थिनि राजत्यैन्द्री ॥**
**बद्धकवाटे भद्रा काली तपसा ज्वलिते भैरव्याख्या ॥९॥**

खेलतीति– द्रवति अमृतं वर्षति स्थाने सहस्रारे ललिता त्रिपुरसुन्दरी खेलति विलसति। सहस्रारे ललिताविलासात् सोमरसो निःष्यन्दत इत्यर्थः। छिन्नग्रन्थिनि छिन्नो ग्रन्थिः यस्मिन् तस्मिन् स्थाने आज्ञाचक्रे इत्यर्थः, 'आज्ञाचक्रान्तरालस्था रुद्रग्रन्थिविभेदिनी' इत्युक्तेः, भाले रुद्रग्रन्थिविभेदे सति ऐन्द्री वज्रवैरोचनी राजति विद्योतते। बद्धकवाटे बद्ध कवाटम् अररं यस्य तस्मिन् हृदये भद्रा काली भवति। स्वस्थलं विहाय देहादौ व्याप्य व्यपगतवीर्या न भवति, किंतु हृदये संवित्स्थाने गुप्ता स्फुरतीत्यर्थः। तपसा ज्वलिते मूलाग्निकुण्डे भैरव्याख्या त्रिपुरभैरवी दीप्यतीत्यर्थः ॥९॥

अथ कालीछिन्नमस्तयोरधिपिण्डं भेदे सत्यपि अध्यण्डं नेत्याह—

**यद्यपि कालीवज्रेश्वर्यौ स्यातां भिन्ने इव पिण्डेषु ॥**
**ओजस्तत्त्वस्यैक्यादण्डे न द्वौ शक्तेर्भेदौ भवतः ॥१०॥**

यद्यपीति– यद्यपि कालीवज्रेश्वर्यौ भद्रा काली छिन्नमस्ता च उभे पिण्डेषु भिन्ने पृथगिव स्यातां भवेताम्, तथाऽपीति अध्याहार्यम्, ओजस्तत्त्वस्य वीर्यस्वरूपस्य ऐक्यात् एकत्वादभेदात् अण्डे ब्रह्माण्डे शक्तेः द्वौ काली, वज्रेश्वरीति भेदौ न भवतः ॥१०॥

**एवमभेदो यद्यपि कर्म- द्वैधाद् द्वैधं तत्रापि स्यात् ॥**
**सैव पचन्ती भुवनं काली सैव दहन्ती शत्रूनैन्द्री ॥११॥**

एवमिति– यद्यपि एवम् ओजस्तत्त्वस्यैक्यात् उभयोरभेदो भवति, तथाऽपि कर्मद्वैधात् कर्मणो द्वैधात् द्विप्रकारत्वात् तत्रापि ब्रह्माण्डेऽपि द्वैधं द्विप्रकारत्वं स्यात् भवेत्। किं तत् कर्मद्वैधम्? आह। सैव शक्तिः भुवनं पचन्ती काली भवति। सैव शक्तिः शत्रून् असुरादीन् दहन्ती ऐन्द्री प्रचण्डचण्डी भवति। इदं च प्रागुपन्यस्तम् ॥११॥

**पिण्डे चाण्डे जङ्गमसारः शुद्धा प्रज्ञा सुन्दर्युक्ता ॥**
**विषयदशायां देशीभूता सेयं भुवनेश्वर्याख्याता ॥१२॥**

पिण्ड इति– पिण्डे शरीरे अण्डे ब्रह्माण्डे च जङ्गमसारः जङ्गमानां चराणां भूताना सारः रसः शुद्धा निर्मला प्रज्ञा संवित् सुन्दरी त्रिपुरसुन्दरी उक्ता। अन्तर्बहिश्च सर्वत्र मूलांशतया स्थिता चितिरेव सुन्दरी। विषयदशायां विषयाकारतया अवतिष्ठमानाया देशीभूता आकाशाकारा भूत्वा सर्व व्याप्ता सा इयं चिति. भुवनेश्वरी आख्याता। शुद्धा संवित् सुन्दर्येव विषयाकारता-याम् आकाशदेशगा भुवनेश्वरीत्युक्तम् ॥१२॥

**शून्यप्रख्या या चिल्लीना प्रलये ब्रह्मणि जन्मिषु सुप्तौ ॥**
**कबलितसकलब्रह्माण्डां तां कवयः श्रेष्ठां ज्येष्ठामाहुः ॥१३॥**

शून्येति– या शून्यप्रख्या शून्याभा शून्यवत् प्रतीयते वस्तुतस्तु न शून्ये-त्यर्थः चित् संवित् प्रलये विश्वविलयदशायां ब्रह्मणि लीना उपसंहृता, सुप्तौ निद्रायां जन्मिषु देहिषु लीना लयं गता भवति, कबलितसकलब्रह्माण्डां ग्रसित-समस्तलोकां ता चितं कवयः क्रान्तदर्शिनः श्रेष्ठां प्रशस्तां ज्येष्ठा देवी-माहुः ॥१३॥

**निद्राविस्मृतिमोहालस्य- प्रविभेदैस्सा भवमग्नेषु ॥**
**एषैव स्याद्युञ्जानेषु ध्वस्तविकल्पः कोऽपि समाधिः ॥१४॥**

निद्रेति– सा ज्येष्ठा देवी भवमग्नेषु भवे जन्मनि मग्नेषु अन्तःपतितेषु संसारिषु निद्राविस्मृतिमोहालस्यप्रविभेदैः निद्रा सुप्तिः विस्मृतिः स्मृतिध्वंसः मोहः मूढता अज्ञानम् आलस्य मान्द्य च एषां प्रविभेदैः भेदैः महतस्तमसो विकारविशेषैरिति यावत्, वर्तत इति शेषः, एषैव देवी ज्येष्ठा युञ्जानेषु योगं कुर्वाणेषु योगिषु इति यावत्, ध्वस्तविकल्पः निर्विकल्पः कोऽपि समाधिः स्यात्। प्राक् जगतः सृष्टेः या चित् शून्येव स्थिता तस्याः ज्येष्ठात्वम् उप-पन्नम्। वेदेऽपि 'अप्रकेतं सलिलं' 'नासदासीन् नो सदासीत्' 'तम आसी-त्तमसा गूळ्हमग्रे' इत्यादयो मन्त्रवर्णाः श्रूयन्ते ॥१४॥

**ऐन्द्री शक्तिर्व्यक्तबला चेद् भिन्ने स्यातां शीर्षकपाले ॥**
**तस्मादेतां चतुरवचस्का परिभाषन्ते छिन्नशिरस्काम् ॥१५॥**

ऐन्द्रीति— ऐन्द्री शक्तिः प्रचण्डचण्डयाख्या व्यक्तबला चेत् योगिनि विस्पष्टविक्रमा चेत् शीर्षकपाले शिरःकपाले द्वे भिन्ने विभिन्ने स्याता भवेताम्। योगिनां कपालभेदः प्रसिद्धः। इदं च प्राग्व्याख्यातम्— 'व्यपोह्य शीर्षकपाले भूरित्यग्नौ प्रतितिष्ठति' इति श्रुतेरर्थो योगिजनानुभवैकवेद्यः। जीवत्स्वाचार्यपादेषु आसीत् कपालभेद इति प्राक्प्रपञ्चितम्। तस्मात् हेतोः एताम् ऐन्द्रीं चतुरवचस्काः चित्रभाषणाः छिन्नशिरस्कां छिन्नमस्तां परिभाषन्ते परिभाषया ब्रुवते ॥१५॥

**भवति परा वाग्भैरव्याख्या पश्यन्ती सा कथिता तारा ॥**
**रसनिधिमाप्ता जिह्वारङ्गं मातङ्गीति प्रथिता सेयम् ॥१६॥**

भवतीति— परा वाक् आधारचक्रनिलया तुरीया वागिति प्रसिद्धा भैरव्याख्या त्रिपुरभैरवी भवति। सा पश्यन्ती वाक् मणिपूरनिलया कारणावस्था वागिति तन्त्रशास्त्रेषु विश्रुता तारा देवी कथिता। सेयं वाक् रसनिधि रसानां निधिं निधानभूतं जिह्वारङ्गं रसनाभुवम् इत्यर्थः, प्राप्ता वैखरी मातङ्गी इति प्रसिद्धा दशमहाविद्यासु ॥१६॥

**पिण्डे चाण्डे स्तम्भनशक्ति- र्बगला मातस्तव महिमैकः ॥**
**सर्वे व्यक्ताः किरणाः कमला बाह्यो महिमा भुवनाम्ब तव ॥१७॥**

पिण्डे इति— मातः! पिण्डे देहे अण्डे ब्रह्माण्डे च, एक एव महिमा, स च स्तम्भनशक्तिः बगला भवति। भुवनाम्ब जगन्मातः! सर्वे व्यक्ताः स्पष्टाः किरणाः अंशवः कमला लक्ष्मीर्भवति। सा च तव बाह्यो महिमा। स सर्वत्र अन्तर्बहिश्च स्तम्भनशक्तिः बगलामुखी, जगति स्पष्टा सर्वाऽपि शोभा लक्ष्मीः ॥१७॥

एवं दशमहाविद्यानां तत्त्वानि स्थानानि च सङ्ग्रहतः प्रतिपाद्य, तासां

प्रमादलाभोपायोपास्तिविधाः उपदिशन् ललितादिकमलान्ताः विद्याः वर्णयति—

**बोधे बोधे बोद्धुश्शक्तिं   सङ्कल्पानां पश्चाद्भ्रान्तीम् ॥**
**अविमुञ्चन्यो मनुते धीरो   यत्किञ्चिद्वा ललिताऽवति तम् ॥१८॥**

बोध इति— 'सङ्कल्पानां पश्चाद्भ्रान्तीम्' उदितानां प्रत्येकं पुरः प्रवृत्तानां चित्तवृत्तीनां पश्चात् तदाधारतया साक्षित्वेन च स्फुरन्तीम्, अत एव बोधे बोधे प्रतिबोधं बोद्धुः ज्ञातुः शक्तिं ग्रहणसामर्थ्यमित्यर्थः, अविमुञ्चन् अत्यजन् यो धीरो यत्किञ्चिद्वा यत्किमपि मनुते चिन्तयति, तं ललिता त्रिपुरसुन्दरी अवति रक्षति। प्रतिसङ्कल्पं पश्चात् स्थितां बोधशक्तिं दृढं धृत्वा यः सङ्कल्पाननुमन्यते तस्य ललितायाः प्रसादो भवतीत्यर्थः। ललितात्रिपुरसुन्दर्युपास्तिरुक्ता ॥१८॥

**दृष्टौ दृष्टौ द्रष्टुश्शक्तिं   लोचनमण्डलमध्ये भान्तीम् ॥**
**अविमुञ्चन्यः पश्यति धीरो   यत्किञ्चिद्वा तमवत्यैन्द्री ॥१९॥**

दृष्टाविति— लोचनमण्डलमध्ये अक्षिपुरुषबिम्बमध्ये भान्तीं विद्योतमाना दृष्टौ दृष्टौ प्रतिदृष्टि द्रष्टुः शक्तिं दर्शनशक्तिम् अविमुञ्चन् अजहत् दृढं गृह्णन् यो धीरः यत्किञ्चिद्वा यत्किमपि पश्यति, तम् ऐन्द्री प्रचण्डचण्डी अवति रक्षति। दर्शनशक्तिं दृढं धृत्वा यः दर्शने व्याप्रियते तस्य छिन्नमस्तायाः अनुग्रहो भवतीत्यर्थः ॥१९॥

**प्राणसमीरं विदधानमिमं   नित्यां यात्रामत्र शरीरे ॥**
**चरणे चरणे परिशीलयति   स्थिरदृष्टिर्यस्तमवति काली ॥२०॥**

प्राणेति— अत्र शरीरे नित्याम् अश्रान्तां यात्रां जीवितयात्रां विदधानं समर्थयन्तम् इमं प्राणसमीरं प्राणवायुं चरणे चरणे एकैकस्मिन् यातायातसञ्चरणे यः स्थिरदृष्टिः अचञ्चलजागरूकः सन् परिशीलयति अन्ववेक्षते, तं काली अवति रक्षति। उच्छ्वासनिःश्वासगतिमनुसरन् तन्मूलं प्राप्नुवन् यः प्राणमुपास्ते, स कालीप्रसादास्पदं भवति ॥२०॥

**स्थूलविकारान्परिमुञ्चन्त्या निर्मलनभसि स्थितया दृष्ट्या ॥**
**मज्जन्त्या वा दहराकाशे लोकेश्वर्याः करुणां लभते ॥२१॥**

स्थूलेति– स्थूलविकारान् सर्वत्र बहिर्दृश्यमानान् परिमुञ्चन्त्या वर्जयन्त्या निर्मलनभसि शुद्धे रूपरहिते आकाशे स्थितया दृष्ट्या, दहराकाशे हृदये मज्जन्त्या अन्तः प्रविशन्त्या दृष्ट्या वा, उपासकः लोकेश्वर्याः भुवनेश्वर्याः करुणां कृपां लभते। बहिर्भूमानम् अन्तर्दहरं वा उपासमानः भुवनेश्वरीप्रसादभाग्भवति ॥२१॥

**सर्वविकल्पान्परिभूयान्त- र्विमलं मौनं महदवलम्ब्य ॥**
**केवलमेकस्तिष्ठति योऽन्त- स्तं सा ज्येष्ठा कुरुते मुक्तम् ॥२२॥**

सर्वेति– सर्वविकल्पान् सर्वान् विकल्पान् चित्तवृत्तीरित्यर्थः, परिभूय तिरस्कृत्य अन्तः विमलं प्रसन्नं महत् गुरु मौनं निश्शब्दभावम् अवलम्ब्य आश्रित्य यः केवलम् एक एव निरालम्बतया तिष्ठति तं सा ज्येष्ठा देवी मुक्तं मोक्षसम्पन्नं कुरुते विधत्ते। निर्विकल्पनिष्ठया ज्येष्ठानुग्रहो भवति ॥२२॥

**मूले स्थित्या भैरव्याख्यां तारां देवीमुद्गीथेन ॥**
**सेवेतार्यो विदितरहस्यो मातङ्गीं तां गुणगानेन ॥२३॥**

मूले इति– विदितरहस्यः उपास्तिरहस्यज्ञानवान् आर्यः मूले मूलाधारे स्थित्या निष्ठया भैरव्याख्यां त्रिपुरभैरवीं सेवेत भजेत। उद्गीथेन सर्वनादप्रकृतिभूतेन केवलस्वरेण ओमित्युपास्येन, तारां देवीं सेवेत। गुणगानेन स्तोत्रेण तां मातङ्गीं सेवेत। परया मूलवाचा भैरवी, कारणवाचा उद्गीथेन तारा, वैखर्या मातङ्गी च प्रसन्नाः भवन्ति ॥२३॥

**आसनबन्धादचलो भूत्वा रुद्धप्राणो बगलां भजते ॥**
**अभितो व्याप्तं व्यक्तं तेजः कलयन्कमलाकरुणां लभते ॥२४॥**

आसनेति– आसनबन्धात् आसनस्य स्थिरसुखस्य योगशास्त्रप्रसिद्धपद्मासनाद्यन्यतमस्य वा बन्धात् अचलो दृढो भूत्वा रुद्धप्राणः सिद्धकुम्भकः सन्

बगलां बगलामुखीं भजते उपास्ते। अभितः सर्वतः व्याप्तं व्यक्तं स्पष्टं तेजः कान्ति कलयन् गृह्णन् कमलाकरुणां लभते लक्ष्मीकृपां प्राप्नोति। आसन-बन्धेन स्थिरो वशितप्राणो बगलाप्रसादलाभवान् भवति। सर्वतो व्यापिनीं शोभां ध्यायन् लक्ष्मीकटाक्षपात्रं भवति ॥२४॥

स्तबकमुपसंहरति—

**एकविधादौ बहुभेदाऽथो शक्तिरनन्ता परमेशस्य ॥**
**सभजनमार्गं गणपतिमुनिना पादाकुलकैरेवं विवृता ॥२५॥**

एकेति– आदौ एकविधा एकप्रकारा मूशलक्तिः अथो ततः बहुभेदा अनेकभेदा परमेशस्य अनन्ता अन्तरहिता शक्तिः गणपतिमुनिना पादाकुलकैः वृत्तैरेवं सभजनमार्ग भजनमार्गैः उपासनोपायैः सह वर्तत इति मभजनमार्गं यथा तथा विवृता व्याख्याता ॥२५॥

अष्टत्रिंशः स्तबकः सव्याख्यः समाप्तः ॥

# एकोनचत्वारिंशः स्तबकः

अस्मिन्नेकोनचत्वारिंशे स्तबके देव्याः माहभाग्यं प्रस्तूय मन्त्र-जप-ध्यानैः योगसिद्धीः प्रतिपादयति। अत्र श्रीविद्योद्धारश्च द्रष्टव्यः।।

**व्याप्येदमिन्दोर्भुवनं य एव प्रायेण तस्यामलचन्द्रिकाऽभूत् ।।**
**मन्दस्तवार्तिं स धुनोतु हासो निश्शेषलोकेश्वरवल्लभायाः ।।१।।**

व्याप्येति— य एव प्रायेण बाहुल्येन इन्दोश्चन्द्रस्य इदं पुरो दृश्यमानं मण्डलं व्याप्य तस्य चन्द्रस्य अमलचन्द्रिका प्रसन्ना ज्योत्स्ना अभूत्, स निश्शेषलोकेश्वरवल्लभायाः समस्तजगद्राजप्रेयस्याः पार्वत्याः मन्दो हासः तव आर्तिं व्यथां धुनोतु निवारयतु। आर्तेरमृतं भेषजम्, अमृतमयत्वाच्चन्द्रिकायाः, मन्दहासश्च चन्द्रिकाभूतत्वोक्तेः। मन्दहासस्यार्तिहरत्वमुपपन्नम्। मन्दहासश्चन्द्रिका अभूदित्यत्र हासस्य चन्द्रिकासम्भावनया गम्योत्प्रेक्षा न शङ्क्या। य एव इति एवकारेण चन्द्रिकानिषेधाक्षेपात्, नेयं चन्द्रिका किंतु मन्दहास एवेति गम्यते। तस्मादपह्नवोऽलङ्कारः। 'प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः' इति तल्लक्षणात् (साहित्यदर्पणम्) ।।१।।

**पूर्णे वियत्येकतटिज्ज्वलन्ती लोकानशेषाननिशं पचन्ती ।।**
**मेघे कदाचिन्महसा स्फुरन्ती चण्डी प्रचण्डा हरतादघं नः ।।२।।**

पूर्णे इति— पूर्णे अखण्डे वियति आकाशे एकतटित् एका अद्वितीया तटित् सती ज्वलन्ती विद्योतमाना, अशेषान् समस्तान् लोकान् अनिशम् अनवरतं पचन्ती परिणमयन्ती परिपक्वान् विदधती, कदाचित् जातु मेघे महसा विद्युद्रूपेण ज्योतिषा स्फुरन्ती क्षणप्रभा, एवम्भूता प्रचण्डा चण्डी नः अस्माकम् अघं दुरितं हरतादपहरतु। सर्वत्र भूमन्याकाशे अतिसूक्ष्मा अन्तर्दृष्टिगम्यैकदेशा व्यापिनी विद्युत् विश्वपरिपाकविधात्री स्थलदृग्गोचरविद्युद्रूपेण कदाचित् स्वसत्तामंशतो व्यञ्जयन्ती महाशक्तिरैन्द्री अस्मत्पापापहाराय प्रभवतु इति तात्पर्यम् ।।२।।

प्रचण्डचण्डी-काल्योरोजस्त्वसाम्यादेकं तत्त्वं, कर्मद्वैधान्नामभेद इति बोध्यम्। कालीं पाचकशक्तिं सम्बोधयति–

**गोलानि कान्यप्यधुनोद्भवन्ति जीर्यन्ति कान्यप्यखिलेशकान्ते ॥**
**यान्त्यम्बिके कान्यपि वृद्धिमत्र पाके भवत्याः परितः प्रवृत्ते ॥३॥**

गोलानीति– अखिलेशकान्ते सर्वेश्वरसुन्दरि, अम्बिके! भवत्याः तव अत्र अस्मिन् पाके परिणमनविधाने परितः सर्वतः प्रवृत्ते प्रचलति सति, कान्यपि गोलानि गोलाकाराणि भुवनानि ब्रह्माण्डानीति यावत्, अधुना सद्यः उद्भवन्ति जायन्ते। कान्यपि गोलानि जीर्यन्ति क्षयं यान्ति। पुनः कान्यपि गोलानि वृद्धिं यान्ति वर्धन्ते। सकलभुवनजन्मवृद्धिक्षयकारी तव पाक इत्यर्थः। केषुचिद् भुवनेषु जायमानेषु, अन्यानि क्षीयमाणानि, पुनरितराणि वर्धमानानि च भवन्ति। स ते पाकस्य महिमा येन एकस्मिन् काले देशभेदेषु त्रिविधं कर्म निष्पाद्यते ॥३॥

**भासां विनेत्रा महता ग्रहैश्च भूरिप्रमाणैर्युतमीशकान्ते ॥**
**एकैकमण्डं तव लोमवच्चे- त्कस्ते महद्भाग्यमिह ब्रवीतु ॥४॥**

भासामिति– ईशकान्ते ईश्वरप्रिये! महता बहुप्रमाणेन भासां रुचां विनेत्रा सूर्येण, बहुसहस्रगुणितभूमण्डलप्रमाणः सूर्य इति खगोलतत्त्वज्ञाः प्राहुः। भूरिप्रमाणैः प्रभूतप्रमाणैः कुजादिग्रहैश्च युतम् एकैकम् अण्डं युतं ब्रह्माण्डं तव लोमवत् लोम्ना तुल्यं त्वत्तनूरुहवत् भवति चेत्, ते तव महत् भाग्यम् ऐश्वर्यम् इह अस्मासु को ब्रवीतु? न कोऽपि वक्तुं शक्तः। यथा पृथिव्या लोमवत् वनस्पतयो जायन्ते, तनूरुहाश्च अस्मदादिशरीरेभ्यः, तथा देवीशरीरात् परमाकाशात् तत्र तत्र रोहन्ति ब्रह्माण्डानि असङ्ख्येयानि। 'एतावान् अस्य महिमा' ॥४॥

**नाथस्य ते रूपमणोरणीयो मातस्त्वदीयं महतो महीयः ॥**
**जानाति यो देवि रहस्यमेतद् व्याख्यातुमेष प्रभवत्यशेषम् ॥५॥**

नाथस्येति– मातः! ते तव नाथस्य ईश्वरस्य रूपम् अणोरणीयः सूक्ष्मात् सूक्ष्मतरं भवति। त्वदीयं रूपं महतो महीयः, गुरोर्गुरुतरम् अत्यन्तं बृहदित्यर्थः

'अणोरणीयान् महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम्' इति उभे अणोरणीयस्त्व सूक्ष्मत्वात् चित्स्वरूपत्वादन्तर्निहितत्वाच्च, महतो महीयस्त्वं तु विकासित्वात् बृहत्त्वात् सर्वात्मिकत्वाच्च। देवि ! य एतद्रहस्यं जानाति स एषः अशेषं समस्तं व्याख्यातु विशेषेण वक्तु प्रभवति शक्नोति। आत्मनः पुरुषस्य द्रष्टुः अणोरणीयस्त्वम्, आत्मशक्तेः वैभवाविष्कारान्महतो महीयस्त्वं चेति बोध्यम् ॥५॥

**यद् गर्जितं वारिदघर्षणेषु शब्दस्तवायं सुगभीरघोषः ॥**
**यल्लोकराज्ञि स्फुरितं तदेत- दुज्जृम्भितं किञ्चन कान्तिवीचेः ॥६॥**

यदिति– अम्ब ! वारिदघर्षणेषु मेघानां सङ्घर्षणेषु यत् गर्जितं स्तनितं भवति, अयं सुगभीरघोषः सुतरां गम्भीरनिर्घोषः तव शब्दो भवति। स्तनितमुद्दिश्य विधेयस्य शब्दस्य प्राधान्यात् अयमिति पुँल्लिङ्गः। लोकराज्ञि जगदीश्वरि ! यत् स्फुरितं क्षणं ज्वलितं मेघेष्विति शेषः, तदेतत् कान्तिवीचेः तव प्रभोर्मेः किञ्चन उज्जृम्भितम् उल्लसितं भवति ॥६॥

**इन्द्रस्य वज्रं ज्वलितं कृशानो- र्ज्योतिस्सहस्रच्छदबान्धवस्य ॥**
**पीयूषभानोर्हसितं विसारि जीवस्य चक्षुर्मम तात दैवम् ॥७॥**

इन्द्रस्येति– तात अङ्ग ! इन्द्रस्य वज्रं विद्युद्रूपं तेजः, कृशानोरग्नेः ज्वलितं ज्वलनं, सहस्रच्छदबान्धवस्य पद्मबन्धोः सूर्यस्य ज्योतिः, पीयूषभानोरमृतांशोश्चन्द्रस्य विसारि प्रसरत् हसितं प्रकाश इत्यर्थः, जीवस्य देहिनः चक्षुः द्रष्ट तेजः, मम दैवम् सर्वत्र ज्योतिर्मयं मम दैवस्वरूपमिति भावः। एकमेव ज्योतिः इन्द्रस्य वज्रं कृशानोर्ज्वलितं सूर्यस्य ज्योतिः चन्द्रस्य महः चक्षुषस्तेज इति उपाधिभेदान्नामव्यापारभेदो भवतीत्यतः तत्परं ज्योतिरेकं ममोपास्यं दैवमित्युक्तम् ॥७॥

**यस्यैव तेजः प्रविभक्तमर्क- विद्युच्छशाङ्कानललोचनेषु ॥**
**गूढं तदाकाशगृहे समस्ता- दन्तानभिज्ञं प्रणमामि दैवम् ॥८॥**

यस्येति— यस्य दैवस्यैव तेजः अर्कविद्युच्छशाङ्कानललोचनेषु अर्के सूर्ये विद्युति क्षणप्रभायां शशाङ्के सोमे अनलेऽग्नौ लोचने चक्षुषि च प्रविभक्तं पृथगिव भिन्नं, आकाशगृहे आकाशमेव गृह तस्मिन् समन्तात् सर्वतः गूढं गुप्तम् अन्तानभिज्ञं अन्तस्य अवधेः अनभिज्ञम् अविदितावधिम् अनवधिकमिति यावत्, तत् दैवं प्रणमामि ॥८॥

**जाग्रत्सु बुद्धिर्निमिषत्सु निद्रा  शुष्केषु पक्तिस्तरुणेषु वृद्धिः ॥**
**धीरेषु निष्ठा चपलेषु चेष्टा  देवी ममापत्तिमपाकरोतु ॥९॥**

जाग्रदिति— जाग्रत्सु बुद्धिः बोधरूपेण स्थिता, निमिषत्सु निमीलितनयनेषु निद्रा सुप्तिरूपेण स्थिता, शुष्केषु विगतरसेषु पक्तिः पाकरूपिणी, तरुणेषु यौवनसम्पन्नेषु वृद्धिः पुष्टिस्वरूपा, धीरेषु विवर्जितमनोविकारेषु निष्ठा दृढा स्थितिः, चपलेषु चञ्चलेषु चेष्टा चलनयाऽवस्थिता, देवी ममापत्तिमापदम् अपाकरोतु दूरीकरोतु। एकस्या एव बुद्धिनिद्रादिभिः बहुधोल्लेखनादुल्लेखालङ्कारः ॥९॥

**विद्यावतो वादविधानशक्ति-  र्वीरस्य सङ्ग्रामविधानशक्तिः ॥**
**नारीमणेर्मोहविधानशक्ति-  र्लेशत्रयं किञ्चिदपारशक्तेः ॥१०॥**

विद्यावत इति— विद्यावतः विदुषो वादविधानशक्तिः वादनिर्वाहसमर्थता, वीरस्य विक्रमवतः सङ्ग्रामविधानशक्तिः युद्धकरणकुशलता, नारीमणेः स्त्रीरत्नस्य मोहविधानशक्तिः सम्मोहनपटुता इति शक्तित्रयम्, अपारशक्तेः अनन्तायाः महाशक्तेः किञ्चित् अल्पं लेशत्रय त्रयो लवा एव भवन्तीत्यर्थः ॥१०॥

**उत्साहयन्ती तपतां मनांसि  सञ्चोदयन्ती च महाक्रियासु ॥**
**सङ्क्षोभयन्ती हृदयं खलानां  सम्मोहयन्ती च पराऽवतान्नः ॥११॥**

उत्साहयन्तीति— तपतां तपसि निष्ठनां मनांसि उत्साहयन्ती उद्योजयन्ती तेषां मनस्सु उत्साहशक्तिं विदधतीत्यर्थः, महाक्रियासु महतीषु क्रियासु तानि सञ्चोदयन्ती प्रेरयमाणा, खलानां हृदयं सङ्क्षोभयन्ती धर्षयन्ती, सम्मोहयन्ती

तेषां हृदये व्यामोहं विदधाना परा अम्बिका नः अस्मान् अवतात् रक्षतु। तपोनिष्ठानामनुग्रहं खलानां निग्रहं च कुर्वाणा परा शक्तिरस्मद्रक्षा भवत्विति भावः ॥११॥

**सञ्चालयन्ती सकलस्य देहं व्यानस्य शक्त्या परितो लसन्त्या ॥**
**जेतुः प्रतापेऽस्ति पलायनेऽस्ति भीतस्य चेयं निखिलेशशक्तिः ॥१२॥**

सञ्चालयन्तीति– परितः सर्वतः लसन्त्या विलसन्त्या व्यानस्य वायोः व्यापनशीलस्य प्राणस्येत्यर्थः, शक्त्या सकलस्य जनस्य देह चालयन्ती निखिलेशशक्तिः सर्वेश्वरशक्तिः जेतुः युद्धे जयवतः प्रतापे अस्ति। भीतस्य युद्धात् इति शेषः, पलायने पराजयेन धावनेऽप्यस्ति। जयिनः प्रतापे, जितस्य भीत्या पलायने च, उभयत्र सैव चालकशक्तिः इति भावः॥१२॥

**एकं स्वरूपं बहुचित्रयोगात् सन्दर्शयन्ती विविधं जनेभ्यः ॥**
**सम्यग्दृशे स्वं विभुमर्पयन्ती सर्वादिमायैव महेशजाया ॥१३॥**

एकमिति– एकं स्वरूपं निजं रूपं बहुचित्रयोगात् बहुभिः चित्रकलाभिर्योगात् सम्बन्धात् अनेकाद्भुतकल्पनेनेत्यर्थः विविधं नानारूपं जनेभ्यः सन्दर्शयन्ती एकस्यैव स्वरूपस्य अद्भुतविशेषैः नानारूपतामापाद्य प्रदर्शयन्तीत्यर्थः, यद्वा यथा चित्रकलाविशषैः एकमेव बहुविधं प्रदर्श्यते, तथा स्वरूपमेकं बहुरूपं प्रदर्शयन्ती, जनेभ्यः इत्यनेन मूलस्वरूपाज्ञानिभ्यः इत्यर्थ.। सम्यग्दृशे साधुदृष्टये यथार्थदर्शनाय ज्ञानिने स्वं विभुं प्रभुम् ईश्वरम् अर्पयन्ती ददती सम्पादयन्तीत्यर्थः। एवम्भूता सर्वादिमाया सर्वस्य विश्वस्य आदिमाया मूलमाया शक्तिरेव महेशजाया महेश्वरप्रेयसी भवतीति शेषः ॥१३॥

**यस्संश्रयेताखिलसङ्गतिस्त्वां ध्यानेन मन्त्रेण गुणस्तवैर्वा ॥**
**त्रैलोक्यसाम्राज्यधुरन्धरस्य शुद्धान्तकान्ते स कृती मनुष्यः ॥१४॥**

य इति– अम्ब ! त्रैलोक्यसाम्राज्यधुरन्धरस्य त्रिभुवनराज्यभारवहस्य सर्वेश्वरस्य शुद्धान्तकान्ते अन्तःपुरसुन्दरि ! यः अखिलसङ्गतिः अखिलेन सकलेन

विश्वेन सङ्गतिः हृदयङ्गमता संवाद इति यावत्, यस्य सः, अखिलेन सङ्गतः मन् त्वां ध्यानेन अन्तर्मननेन मन्त्रेण जपेन गुणस्तवैः गुणसङ्कीर्तनैर्वा संश्रयेत, स मनुष्य कृती धन्यः ॥१४॥

**मूलाग्निमुद्दीप्य शिरश्शशाङ्कं　सन्द्राव्य यस्तर्पयते कृती त्वाम् ॥**
**तस्मिन्नगाधीश्वरकन्यके त्वं　प्रादुर्भवन्ती न किमादधासि ॥१५॥**

मूलेति– मूलाग्निं मूलाधारे कुलकुण्डाग्निम् उद्दीप्य उज्ज्वाल्य शिरश्शशाङ्कं सहस्रारसोम सन्द्राव्य स्यन्दयित्वा यः कृती धन्यस्त्वां तर्पयते प्रीतां करोति, नगाधीश्वरकन्यके पार्वति ! तस्मिन् प्रादुर्भवन्ती प्रकाशा भवन्ती त्व किं न आदधासि ? सर्वमपि तस्मिन् उत्पादयसीत्यर्थः ॥१५॥

**यस्त्वां सहस्रारसरोजमध्ये　सोमस्वरूपां भजतेऽम्ब योगी ॥**
**तस्यान्तरः शान्तिमुपैति तापो　बाह्यस्य का नाम कथाऽल्पकस्य ॥१६॥**

य इति– अम्ब ! यो योगी सहस्रारसरोजमध्ये शिरसि सहस्रारपद्मान्तरे सोमस्वरूपां चन्द्ररूपिणी त्वां भजते सेवते, तस्य योगिन आन्तरः आध्यात्मिकः तापः शान्तिम् उपैति शान्तो भवति। अल्पकस्य कुत्सायां कन्, कुत्सितस्य अल्पस्य बाह्यस्य तापस्य घर्मस्य का नाम कथा ? बाह्यतापः शान्तो भवतीति किमु वक्तव्यम् ? ॥१६॥

**दण्डेन योऽन्तर्दहरेऽवतीर्णः　प्राणेन वाचा महसा धिया वा ॥**
**प्राप्नोति सोऽयं पुरमद्वितीयं　यत्र त्वमीशा सह चित्रलीला ॥१७॥**

दण्डेनेति– यः दण्डेन वीणास्थिदण्डेन पश्चान्मार्गेण, पुरोमार्गः पश्चान्मार्ग इति मार्गद्वयं प्राक् प्रतिपादितम्। प्राणेन वायुना वा वाचा मन्त्रेण महसा तेजसा धिया बुद्ध्या वा साधनेन दहरे हृदयाकाशे अवतीर्णो भवति, सोऽयम् अद्वितीयम् एकं पुरं ब्रह्मपुरं प्राप्नोति, यत्र त्वम् ईशा ईश्वरेण सह चित्रलीला चित्राः अद्भुताः लीलाः यस्याः सा भवसि इति शेषः ॥१७॥

**तन्त्रोदितं विश्वविनेत्रि मन्त्रं यस्ते नरः संयमवानुपास्ते ॥**
**रुद्राणि सान्द्राम्बुदकेशपाशे पाशैर्विमुक्तः स जयत्यशेषम् ॥१८॥**

तन्त्रेति– विश्वविनेत्रि जगन्नायिके ! तन्त्रोदितं तन्त्रशास्त्रप्रतिपादितं मन्त्रं वीर्यवत् अक्षरात्मकं यः नरः संयमवान् 'संयमश्च धारणाध्यानसमाधय' इति पातञ्जलाः, अत्र मनोवश इत्यर्थः, तद्वान् सन् उपास्ते भजते। रुद्राणि रुद्रपत्नि, सान्द्राम्बुदकेशपाशे घनमेघकचभारे, अम्ब ! स. पाशैः अविद्यावासनेरितपुत्रदारादिसङ्गजैः बन्धैः विमुक्तः अशेषं समस्त जयति ॥१८॥

अथ तन्त्रोदितं श्रीविद्याख्यं मन्त्रराजं द्वाभ्याम् उद्धरति। श्रीविद्यायां पञ्चदशाक्षरमन्त्रस्य खण्डत्रयात्मकस्य प्राधान्यात् पञ्चदशीमाह —

**पद्मासनो द्वादशवर्णशान्ती दम्भोलिपाणिर्भुवनाधिनाथा ॥**
**गीर्वाणमार्गो भृगुरब्जयोनि- रन्ते तथाग्रे च हलां विराजी ॥१९॥**
**जम्भस्य हन्ताऽनलशान्तिचन्द्रैः संयुक्त ऊष्मा गलदेशजन्मा ॥**
**दन्तस्थलीसम्भव ऊष्मवर्णो वाणीपतिर्वज्रधरश्च लज्जा ॥२०॥**

पद्मासन इति– (युग्मम्) पद्मासनो ब्रह्मा ककारः, द्वादशवर्णशान्ती द्वादशो वर्णः स्वरः एकारः, शान्तिश्च ईकारः, दम्भोलिपाणिः वज्रहस्तः इन्द्रो लकारः, भुवनाधिनाथा भुवनेश्वरी ह्रीङ्कारः। 'क-ए-ई-ल-ह्रीम्' इति प्रथमः खण्डः। गीर्वाणमार्गः सुरवर्त्म आकाशः हकारः, भृगुः सकारः, अब्जयोनिः ब्रह्मा ककारः तथा अग्रे ककारस्य अग्रे पुरस्तात् हला हलक्षराणां अन्ते विराजत इति विराजी विभ्राजी अक्षरः हकारः, जम्भस्य हन्ता इन्द्रो लकारः। 'ह-स-क-ह-ल' इति सिद्धम्। गलदेशजन्मा कण्ठस्थानजः ऊष्मा शषसहानामेकः हकारः, अनलशान्तिचन्द्रैः अनलो रेफः, शान्तिरीकारः, चन्द्रोऽनुस्वारः, एतैः रकार-ईकार-बिन्दुभिः संयुक्तः ह्रीम् इत्येतदक्षरम्। 'ह-स-क-ह-ल-ह्रीम्' इति सिद्धम्। अयं च द्वितीयः खण्डः पञ्चदशाक्षर्याः। दन्तस्थलीसम्भवः दन्त्यः ऊष्मवर्णः सकारः, वाणीपतिः ब्रह्मा ककारः, वज्रधरः इन्द्रः लकारः, लज्जा ह्रीङ्कारः। 'स-क-ल-ह्रीम्' अयं तृतीयः खण्डः ॥१९-२०॥

**विद्या त्वियं पञ्चदशाक्षराढ्या　साक्षान्महामौनगुरूपदिष्टा ॥**
**गोप्यासु गोप्या सुकृतैरवाप्या　श्रेष्ठा विनुत्या परमेष्ठिनाऽपि ॥२१॥**

विद्येति— एवं खण्डत्रयात्मिका इयं तु पञ्चदशाक्षराढ्या 'कएईलह्रीं, हसकहलह्रीं, सकलह्रीम्' इति पञ्चदशभिरक्षरैर्युक्ता विद्या श्रीविद्या साक्षात् मौनगुरूपदिष्टा मौनगुरुणा दक्षिणामूर्तिना महादेवेन उपदिष्टा। पञ्चदश्या ऋषिः दक्षिणामूर्तिः कीर्तितः। गोप्यासु रहस्यविद्यासु गोप्या रहस्यतमा, सुकृतैः पुण्यैरवाप्या लभ्या, श्रेष्ठा सर्वासा विद्यानाम्। परमेष्ठिनाऽपि ब्रह्मणा अपि विनुत्या स्तुत्या भवतीति शेषः ॥२१॥

**देहेष्वियं कुण्डलिनी न्यगादि　भूतेषु विद्युद् भुवनेषु चाभ्रम् ॥**
**देवाङ्गनामस्तकलालिताङ्घ्रि-　र्देवी भवानी खलु देवतासु ॥२२॥**

देहेष्विति— इयं विद्या शरीरेषु कुण्डलिनी न्यगादि निगदिता। भूतेषु वस्तुषु विद्युत् न्यगादि। भुवनेषु लोकेषु अभ्रम् आकाशः न्यगादि। देवाङ्गनामस्तके लालिताङ्घ्रिः सुरसुन्दरीशिरोलालितचरणेयं देवी देवतासु भवानी। खलु वाक्यालङ्कारे ॥२२॥

**चक्षुर्विधायाचलमन्तरेण　प्राणं प्रपश्यन् मनुवर्णरूपम् ॥**
**संसेवते चेत्सकलस्य धात्रीं　सर्वेष्टलाभो विदुषः करस्थः ॥२३॥**

चक्षुरिति— चक्षुर्नेत्रम् अचलं स्थिरं विधाय अन्तरेण मनसा मनुवर्णरूपं मन्त्राक्षररूप प्राणं प्रपश्यन् सकलस्य धात्री भर्त्री संसेवते चेत् उपासक इत्यध्याहार्यम्, विदुषः तथा विद्यां सेवमानस्य सर्वेष्टलाभः करस्थः हस्तगतो भवति। इह मन्त्रयोगः उपदिष्टः। स च गुर्वनुग्रहादनुभववेद्यः। अयम् अत्र सारभूतोऽभिप्रायः। मनसा जपकर्मणि प्रवृत्तस्य उपासकस्य प्राणवायोर्यातायातयोरवहितस्य प्राण एव मन्त्रवर्णरूपो भवति। प्राण एव मन्त्रात्मना नदतीति वेदनं भवति। अयं च मन्त्रयोगो मनोनिग्रहाध्याये श्रीरमणगीतायामेव वर्णितः—'जपेन वाऽथ मन्त्राणां मनसो निग्रहो भवेत्। मानसेन तदा मन्त्रप्राणयोरेकता भवेत्। मन्त्राक्षराणा प्राणेन सायुज्य ध्यानमुच्यते।' इति।

एवम् उपास्यमानानां सर्वेषां मन्त्राणा प्राणेन सायुज्यं भवतीति तत्त्वम्। तत्र विशेषतः पञ्चदशाक्षर्याः सिद्धिः। तस्या मन्त्राक्षराण्येव देव्याः अवयवताम् भजन्त इति आगमः। तमनूद्य आनन्दलहर्या—'शिवः शक्तिः काम' इति मन्त्रोद्धारश्लोके—'भजन्ते वर्णास्ते तव जननि नामावयवताम्' इत्युक्तम्। सहस्रनामसु च—'मूलमन्त्रात्मिका मूलकूटत्रयकलेबरा' इत्यादि च कीर्तितम् ॥२३॥

**एकाक्षरीः पञ्चदशाक्षरीं वा विद्याः प्रकृष्टाः सकलेशशक्तेः ॥**
**यो भक्तियुक्तः प्रजपेदमुष्य प्राणो वशे निस्तुलसिद्धियोनिः ॥२४॥**

एकेति— एकाक्षरीः 'ह्रीं क्री ह्रूं श्रीम्' इत्याद्याः क्रमशो भुवनेश्वरी-काली-प्रचण्डचण्डी-ललितादीनां बीजाक्षररूपिणीः, पञ्चदशाक्षरीं वा, सकलेशशक्तेः परस्या देवतायाः प्रकृष्टा विद्याः दशमहाविद्या वा यो भक्तियुक्तः प्रजपेत् निस्तुलसिद्धियोनिः अनुपमसिद्धीनाम् उदयक्षेत्रभूतः प्राणः अमुष्य तस्य वशे भवेत्। वशितायां प्राणशक्तौ सर्वाः सिद्धयो हस्तगताः भवन्ति ॥२४॥

**एताः कवीनां पदकिङ्करस्य पूताः प्रमोदं परमावहन्तु ॥**
**गीतास्सभक्तिद्रवमिन्द्रवज्राः श्वेताचलाधीश्वरवल्लभायाः ॥२५॥**

एता इति— एताः पूताः पवित्राः भक्तिद्रवेण भक्तिरसेन सह वर्तत इति सभक्तिद्रवं गीताः कवीनां पदकिङ्करस्य चरणभजकस्य गणपतेः इन्द्रवज्राः इन्द्रवज्रावृत्तबद्धाः स्तुतयः श्वेताचलाधीश्वरवल्लभायाः कैलासपतिप्रेयस्याः पार्वत्याः परं श्रेष्ठं प्रमोदम् आनन्दम् आवहन्तु आदधतु ॥२५॥

एकोनचत्वारिंशः स्तबकः सव्याख्यः समाप्तः ॥

# चत्वारिंशः स्तबकः

चत्वारिंशेऽस्मिन्नुपसंहारस्तबके परदेवताया विश्वस्मिन्नन्तर्बहिश्च श्रीमत्सूर्जितेषु स्थानेषु विभूतिषु समुपास्यत्वं सुबोधं प्रतिपादयन्ति, वेदवेदान्ततान्त्रिकयोगसारभूतानि तत्त्वानि प्रकाशयन्ति, विबुधानामबुधाना च सुग्रहाणि रमणीयगानानि दैवगीतानि गीयन्ते।

**शमयतु पापं दमयतु दुःखं    हरतु विमोहं स्फुटयतु बोधम् ॥**
**प्रथयतु शक्तिं मन्दं हसितं    मनसिजशासनकुलसुदृशो नः ॥१॥**

शमयत्विति— मनसिजशासनकुलसुदृशः कामारिकुलाङ्गनायाः मन्दं हसितं दरस्मितं नः अस्माकं पापं शमयतु निवारयतु, दुःखं दमयतु ध्वंसयतु, विमोहं व्यामोहं भ्रमं हरतु अपहरतु, बोधं ज्ञानं स्फुटयतु विकासयतु, शक्तिं प्रथयतु आविष्करोतु ॥१॥

**आर्द्रा दयया पूर्णा शक्त्या    दृष्टिवशंवदविष्टपराजा ॥**
**अखिलपुरन्ध्रीपूज्या नारी    मम निश्शेषां विपदं हरतु ॥२॥**

आर्द्रेति— दयया कृपया आर्द्रा, शक्त्या पूर्णा, दृष्टिवशंवदविष्टपराजा दृष्टेः दृशः वशंवदः वशङ्गतः विष्टपानां लोकाना राजा विष्टपराजः यस्याः सा दर्शनवशितसर्वेश्वरा इत्यर्थः, अखिलपुरन्ध्रीपूज्या सकलस्त्रीजनमान्या नारी स्त्री निश्शेषां समस्तां मम विपदम् आपदं हरतु ॥२॥

इतः प्रभृति शुद्धं ब्रह्मेत्यारभ्य सृष्टौ सर्वत्र तत्र तत्र उपाधिभेदेषु उपास्यतया स्थितं दैवस्य स्वरूपं गायति—

**शुद्धब्रह्मणि मोदो दैवं    तत्र सिसृक्षति कामो दैवम् ॥**
**सृजति पदार्थान्दृष्टिर्दैवम्    तान्विभ्राणे गरिमा दैवम् ॥३॥**

शुद्धेति– शुद्धब्रह्मणि शुद्धे सकलनिष्कलविभजनाविषये द्वन्द्वातीते स्वत.-सिद्धे वस्तुनि ब्रह्मणि मोदः आनन्दो दैवम्। तत्र आनन्दः स्वरूपं दैवस्येत्यर्थः। सिसृक्षति स्रष्टुमिच्छति तत्र तस्मिन् ब्रह्मणि कामः इच्छा दैवम्। 'सोऽकामयत बहु स्यां प्रजायेय' इति श्रुतिप्रतिपादिता ब्रह्मणि या सर्जनेच्छा सैव स्वरूपं दैवस्य। एवं मोद कामः इत्यादिः दैवस्य स्वरूपमिति उत्तरत्रापि बोध्यम्। पदार्थान् भावान् वस्तूनीति यावत्, सृजति उत्पादयति ब्रह्मणि दृष्टिः दैवम्। ईक्षणादिप्रवेशान्ता सृष्टिः 'तदैक्षत' 'तदनुप्रविश्ये' त्यादिश्रुतिसिद्धा। ईक्षणात् सृष्टिर्निर्वाह्यत इति हेतोः सर्जने प्रचलति दृष्टिः दैवमित्युक्तम्। सृष्टेः प्राक् तत्कामो दैव, सृष्टौ तु दृष्टिः, उभयतः पूर्वम् आनन्दः यस्मादेव सृष्टेः सम्भवः। तान् सृष्टान् पदार्थान् बिभ्राणे धारयमाणे ब्रह्मणि महिमा सर्वत्र व्याप्य धारणात् महत्त्वं दैवम् ॥३॥

**विकृतौ विकृतौ प्रकृतिर्दैवं विषये विषये सत्ता दैवम् ॥**
**दृष्टौ दृष्टौ प्रमितिर्दैवं ध्याने ध्याने निष्ठा दैवम् ॥४॥**

विकृताविति– विकृतौ विकृतौ एकैकस्या विकृतौ प्रकृतिः अविक्रियमाणा दैवम्। वस्तुषु नामरूपाभ्यां व्याक्रियमाणेषु या अविकार्यतयाऽवशिष्यते सा प्रकृतिः दैवम्। विषये विषये सर्वेषु गोचरेषु अस्तित्वेनावभासमानेषु तत्र तत्र या अस्तित्वप्रतीतेर्हेतुर्भवति सा सत्ता दैवम्। दृष्टौ दृष्टौ प्रतिदर्शनकर्म प्रमितिः प्रमा बुद्धिरिति यावत् दैवम्। ध्याने ध्याने प्रतिध्यानं निष्ठा दृढा स्थितिः दैवम् ॥४॥

**स्फूर्तौ स्फूर्तौ माया दैवं चलने चलने शक्तिर्दैवम् ॥**
**तेजसि तेजसि लक्ष्मीर्दैवं शब्दे शब्दे वाणी दैवम् ॥५॥**

स्फूर्ताविति– स्फूर्तौ स्फूर्तौ स्फूर्तिः स्फुरण स्पन्दनं कम्पनमिति यावत् प्रतिकम्पनं तद्धेतुः या माया महाशक्तिः सा दैवम्। कम्पनहेतुत्वं ब्रह्मणः श्रुतिषु प्रसिद्धम् 'भीषास्माद्वातः पवते' 'भयादस्याग्निस्तपति' इत्याद्याः। 'कम्पनात्' इति कम्पनाधिकरणस्थस्य ब्रह्मसूत्रस्य शारीरकभाष्ये चेदं तत्त्वं सूपपादं व्याख्यातं द्रष्टव्यम्। चलने चलने प्रतिचलनं या शक्तिरावश्यकी, या

विना चलन न सम्भवति, सा दैवम्। तेजसि तेजसि प्रतितेजः प्रतिशोभ लक्ष्मीः या कान्तिः भवति सा दैवम्। शब्दे शब्दे प्रतिशब्दं वाणी वाक् ययोच्चार्यमाणः श्रवणविषयो भवति शब्द. सा दैवम्॥५॥

**हृदये हृदये जीवद्दैवं　शीर्षे शीर्षे ध्यायद्दैवम्॥**
**चक्षुषि चक्षुषि राजद्दैवं　मूले मूले प्रतपद्दैवम्॥६॥**

हृदय इति– हृदये हृदये प्रतिहृदय जीवत् प्राणत् जाग्रदिति भाव., दैवम्। शीर्षे शीर्षे शिरस्सु ध्यायत् चिन्तनकारि दैवम्। चक्षुषि चक्षुषि राजत् ज्वलत् दैवम्। मूले मूले मूलाधारचक्रे प्रतपत् प्रज्वलद् दैवम्॥६॥

**अभितो गगने प्रसरद्दैवं　पृथिवीलोके रोहद्दैवम्॥**
**दिनकरबिम्बे दीप्यद्दैवं　सितकरबिम्बे सिञ्चद्दैवम्॥७॥**

अभित इति– अभितः गगने आकाशे प्रसरत् व्याप्नुवत् दैवम्। पृथिवीलोके भूमौ रोहत् भूजं वृक्षादिरूपेण जायमानं दैवम्। दिनकरबिम्बे सूर्यमण्डले दीप्यत् भास्वर दैवम्। सितकरबिम्बे चन्द्रमण्डले सिञ्चत् अमृतं सिञ्चत् दैवम्॥७॥

**श्रावंश्रावं वेद्यं दैवम्　नामंनामं राध्यं दैवम्॥**
**स्मारंस्मारं धार्यं दैवं　वारंवारं स्तुत्यं दैवम्॥८॥**

श्रावमिति– श्रावश्रावं श्रुत्वा श्रुत्वा वेद्यं पुनः पुनः श्रवणेन आवृत्तिबलात् वेद्य ज्ञेय दैवम्, नामंनामं नत्वा नत्वा राध्यं साध्यं शश्वत्प्रणत्याराध्यं दैवम्, स्मारंस्मारं स्मृत्वा स्मृत्वा स्मरणावृत्तिबलात् धार्य धारणयोग्य दैवम्, वारंवारं वृत्वा वृत्वा बहुशो वरणेन स्तुत्यं स्तोत्रक्षम दैवम्॥८॥

**श्रुतिषु वटूनां ग्राह्यं दैवं　गृहिणामग्नौ तर्प्यं दैवम्॥**
**तपतां शीर्षे पुष्टं दैवम्　यतिनां हृदये शिष्टं दैवम्॥९॥**

श्रुतिष्विति– वटूनां ब्रह्मचारिणां स्वाध्यायिना श्रुतिषु स्वाध्यायेषु ग्राह्यं बोध्यं, तेषां स्वाध्याय एव तपः आश्रमधर्मः, तस्मात्तत्स्य दैवम्। गृहिणां

गृहमेधिनाम् अग्नौ तर्प्यम् अग्निहोत्रेण तर्पयितु योग्यं दैवम्। तपतां तपोनिष्ठानां शीर्षे शिरसि पुष्ट वृद्ध दैवम्। यतिना हृदये दहरे शिष्टं निर्वृत्तिकतया स्वरूपेणावशिष्टं दैवम् ॥९॥

**नमता पुष्पैः पूज्यं दैवं कविना पद्यैराराध्यं दैवम् ॥**
**मुनिना मनसा ध्येयं दैवं यतिना स्वात्मनि शोध्यं दैवम् ॥१०॥**

नमतेति– नमता जनेन पुष्पैः पूज्यमर्च्यं दैवम्। कविना काव्यनिर्मात्रा पद्याराध्यं पद्यैः आराध्यं तर्प्यं दैवम्। मुनिना मननशीलेन ऋषिणा मनसा ध्येयं ध्यातुं योग्यं दैवम्। यतिना यमवता नैष्ठिकेन स्वात्मनि शोध्यं शोधयितु शक्यं दैवम्। स्वमूलस्वरूपभूतं दैवम्। चित्तकालुष्यवर्जितं शुद्धम् उपासितुं युक्तो हि यती ॥१०॥

**स्तुवतां वाचो विदधद्दैवं स्मरतां चेतः स्फुटयद्दैवम् ॥**
**जपतां शक्तिं प्रथयद्दैवं नमतां दुरितं दमयद्दैवम् ॥११॥**

स्तुवतामिति– स्तुवतां स्तोत्रं कुर्वता वाचः गिरो विदधत् स्तुतिसमर्थाः कुर्वत् दैवम्। स्मरतां ध्यायतां चेतः चित्तं स्फुटयत् विकासयत् दैवम्। जपता मन्त्रजप कुर्वतां शक्ति प्रथयद्विजृम्भयत् दैवम्। नमता नतिं कुर्वतां दुरितं पापं दमयत् प्रणाशयत् दैवम् ॥११॥

**वाचो विनयद्वह्नौ दैवं प्राणान्विनयद्विद्युति दैवम् ॥**
**कामान्विनयच्चन्द्रे दैवं बुद्धीर्विनयत्सूर्ये दैवम् ॥१२॥**

वाच इति– वह्नौ अग्नौ स्थितं सत् वाचो गिरः विनयत् दैवं शिक्षयदुपदिशदिति यावत्। 'अग्निर्वै वाग्भूत्वा मुखं प्राविशत्' इति अग्निर्वाग्देवतोक्ता। विद्युति तटिति अन्तरिक्षं व्याप्ते ज्योतिषीत्यर्थः स्थितं सत् प्राणान् विनयत् शिक्षयत् दैवम्। चन्द्रे स्थितं कामान् विनयत् शिक्षयत् दैवम्। इतः प्रेत्य सकामः चन्द्रलोकं गच्छेत्। 'क्षितेः सुधाकरं गतान् पितॄन्विनेतुमव्यये' इत्यन्यत्र गीतम् (१ श०. २. स्त०.)। अत एव चन्द्रस्थं कामान्विनयद्दैवम्।

सूर्ये स्थितं बुद्धीर्विनयत् उपदिशत् दैवम्। सूर्यस्य धीविनेतृत्वं विश्रुत वेदे। तत्र 'धियो यो नः प्रचोदयात्' इति सवितृमन्त्र एवालम् ॥१२॥

**हृदये निवसद् गृह्लद्दैवं  वस्तौ निवसद्विसृजद्दैवम् ॥**
**कण्ठे निवसत्प्रवदद्दैवं  कुक्षौ निवसत्प्रपचद्दैवम् ॥१३॥**

हृदये इति— हृदये निवसत् हृदयस्थं सत् गृह्लत् बुध्यमान दैवं साक्षितया विद्यमानत्वात्। वस्तौ नाभेरधःप्रदेशे वसत् सत् विसृजत् नैर्मल्याय उत्सर्गं कुर्वत् दैवम्। कण्ठे निवसत् सत् प्रवदत् प्रवचनं कुर्वत् दैवम्। कुक्षौ उदरे निवसत् प्रपचत् भुक्तं पक्वं कुर्वत् दैवम् ॥१३॥

**देहे निवसद्विचलद्दैवं  पञ्चप्राणाकारं दैवम् ॥**
**भागि समस्तस्यान्ने दैवं  स्वाहाकारे तृप्यद्दैवम् ॥१४॥**

देह इति— देहे निवसत् स्थिरं सत् विचलच्च दैवम्। देहे अस्य न चेद्वासः, देहस्य चलनं न भवेत्। पञ्चप्राणाकारं प्राणापानौ समानश्चोदानव्यानौ च पञ्चप्राणाः तेषामाकार इव आकारो यस्य तत् दैवम्। समस्तस्य सर्वस्यापि भोक्तुरन्ने भोज्ये भागि भागवत् दैवम्। अन्नस्य भोक्तुर्मूलस्वरूपे तिष्ठत् त भोजयति। तस्मादस्य भुज्यमाने सर्वस्यान्ने भागो भवनि। स्वाहाकारे देवतृप्तिवाचके तृप्यत् प्रीयमाण दैवम् ॥१४॥

अथ स्त्रीरूपतया दैवं प्रत्यङ्गस्तवेन गायति —

**बिभ्रन्नारीवेषं दैवं  शुभ्रदरस्मितविभ्राड् दैवम् ॥**
**अभ्रमदापहृच्चिकुरं दैवं  विभ्रमवासस्थानं दैवम् ॥१५॥**

बिभ्रदिति— नारीवेष स्त्रीरूपं बिभ्रत् दैवम्। शुभ्रदरस्मितविभ्राट् शुभ्रेण सितेन दरस्मितेन मन्दस्मितेन विभ्राजते इति विभ्राट् दैवम्। अभ्रमदापहृच्चिकुरं मेघदर्पहरकचभारं दैवम्। विभ्रमवासस्थानं विलासावासस्थलं दैवम् ॥१५॥

**शीतज्योतिर्वदनं दैवं रुचिबिन्दूपमरदनं दैवम् ॥**
**लावण्यामृतसदनं दैवं स्मररिपुलोचनमदनं दैवम् ॥१६॥**

शीतज्योतिरिति– शीतज्योतिर्वदनं शीतज्योतिश्चन्द्रः स इव वदनं यस्य तद्दैवम्। रुचिबिन्दूपमरदन रुचीनां कान्तीना बिन्दुभिः पृषतैः उपमा सादृश्यं येषा ते रुचिबिन्दूपमाः, ते रदनाः दन्ताः यस्य तद्दैवम्। लावण्यामृतसदनं लावण्यं रामणीयकमेवामृतं तस्य सदनं गृहं दैवम्। स्मररिपुलोचनमदन स्मररिपोः कामारेः हरस्य लोचनानां मदनं हर्षणं दैवम् ॥१६॥

**लक्ष्मीवीचिमदलिकं दैवं प्रज्ञावीचिमदीक्षं दैवम् ॥**
**तेजोवीचिमदधरं दैवं सम्मदवीचिमदास्यं दैवम् ॥१७॥**

लक्ष्मीति– लक्ष्मीवीचिमदलिकं लक्ष्म्याः श्रियः वीचयः ऊर्मयः अस्य सन्तीति लक्ष्मीवीचिमत् तत् अलिकं ललाटं यस्य तत् दैवम्। प्रज्ञावीचिमदीक्षं प्रज्ञावीचिमती चिदूर्मिमती ईक्षा दृष्टिर्यस्य तत् दैवम्। तेजोवीचिमदधर तेजोवीचिमान् तेजःस्तरङ्गवान् अधरः अधरोष्ठो यस्य तद्दैवम्। सम्मदवीचिमदास्यं सम्मदवीचिमत् आनन्दोर्मिमत् आस्यम् आननं यस्य तत् दैवम् ॥१७॥

**करुणोल्लोलितनेत्रं दैवं श्रीकाराभश्रोत्रं दैवम् ॥**
**कुसुमसुकोमलगात्रं दैवं कविवाग्वैभवपात्रं दैवम् ॥१८॥**

करुणेति– करुणोल्लोलितनेत्रं करुणोल्लोलिते कृपातरङ्गिते नेत्रे यस्य तत् दैवम्। श्रीकाराभश्रोत्रं श्रीकारस्य नागरलिपौ आन्ध्रलिपौ वा लिख्यमानस्य 'श्री' इत्यक्षरस्य आभा इवाभा ययोः ते श्रीकाराभे ते श्रोत्रे यस्य तत् दैवम्। तथैव इन्द्राणीसप्तशत्या 'श्रीलिपिद्युतिसुन्दरकर्णा' इति गीतम्। कुसुमसुकोमलगात्रं कुसुमम् इव सुतरा कोमलं ललितं गात्रं वपुः यस्य तत् दैवम्। कविवाग्वैभवपात्रं कवेर्वाचो वैभवस्य ऐश्वर्यस्य पात्रं कविवर्णनास्पदं दैवम् ॥१८॥

**हिमवति शैले व्यक्तं दैवं   सितगिरिशिखरे क्रीडद्दैवम् ॥**
**तुम्बुरुनारदगीतं दैवं   सुरमुनिसिद्धध्यातं दैवम् ॥१९॥**

हिमवतीति– हिमवति शैले पर्वतराजे व्यक्तं स्पष्टम् उमारूपेण प्रकाशं दैवम्। सितगिरिशिखरे कैलासाद्रिशृङ्गे क्रीडत् रममाणं दैवम्। तुम्बुरुनारदगीतं तुम्बुरुणा गायकभक्तेन नारदेन भक्ताग्रेसरेण च गीतं दैवम्। सुरमुनिसिद्धध्यातं सुरैः देवैः मुनिभिः ऋषिभिः सिद्धैश्च ध्यातम् एकाग्रतया प्रणिहितं दैवम् ॥१९॥

**क्वचिदपि रतिशतललितं दैवं   क्वचिदपि सुतरां चण्डं दैवम् ॥**
**भक्तमनोनुगवेषं दैवं   योगिमनोनुगविभवं दैवम् ॥२०॥**

क्वचिदिति– क्वचिदपि रतिशतललित रतीनां क्रीडानां शतैः ललितं सौम्यं दैवम्। क्वचिदपि सुतराम् अत्यन्तं चण्डम् उग्रं दैवम्। भक्तमनोनुगवेषं भक्तमनोनुगः भक्तजनमनोनुसारी वेषः बाह्याकारः यस्य तत् दैवम्। 'यो यो यां यां तनु भक्तः श्रद्धयार्चितुमिच्छति। तस्य तस्याचला श्रद्धां तामेव विदधाम्यहम् ॥' इति। योगिमनोनुगविभवं योगिमनोनुगो योगिजनमनोनुसारी विभव ऐश्वर्य यस्य तत्। उपपद्यते चैतदमोघत्वाद्योगिजनसङ्कल्पस्य ॥२०॥

**चरिते मधुरं स्तुवतां दैवं   चरणे मधुरं नमतां दैवम् ॥**
**अधरे मधुरं शम्भोर्दैवं   मम तु स्तन्ये मधुरं दैवम् ॥२१॥**

चरित इति– स्तुवतां स्तोतॄणाम् अर्थे, चरिते स्वचर्यायां मधुरं दैवम्। रमणीयवृत्ता भगवती स्तोतृषु विषये कारुण्यप्रदर्शनात्। नमतां नमस्कुर्वतामर्थे, चरणे स्वीये पादे मधुरं रमणीयं दैवं, नमस्कुर्वतां चरणमाधुर्यं विदितम्। शम्भोः शिवस्य अर्थे, अधरे मधुरं दैवं, उमादैवस्य शिवरमणीत्वात्। मम तु गणपतेः पुत्रस्य अर्थे, स्तन्ये मधुरं दैवं मातुः स्तन्यरसं शिशुर्वेत्ति ॥२१॥

**भुजभृतविष्टपभारं दैवं पदधृतसम्पत्सारं दैवम् ॥**
**लालितनिर्जरवीरं दैवं रक्षितसात्त्विकधीरं दैवम् ॥२२॥**

भुजभृत इति – भुजभृतविष्टपभारं भुजाभ्यां बाहुभ्यां भृतः वोढः विष्टपभारः लोककार्यभारः यस्य तत् दैवम्। पदधृतसम्पत्सारं पदाभ्यां धृतः सम्पदां सारः बलं यस्य तत्। लालितनिर्जरवीरं लालिताः निर्जरवीराः देववीराः येन तत्। रक्षितसात्त्विकधीरं रक्षिताः सात्त्विकाः धीराः येन तत् दैवम् ॥२२॥

**चिच्छक्त्यात्मकमधितनु दैवं तटिदाकृत्यधिभूतं दैवम् ॥**
**श्रुतिषु शिवेति प्रथितं दैवं जयति जगत्त्रयविनुतं दैवम् ॥२३॥**

चिदिति– अधितनु तनौ शरीरे चिच्छक्त्यात्मकं चितिशक्तिस्वरूपं दैवम्। अधिभूत भूते बाह्ये वस्तुनि तटिदाकृति विद्युदाकारं दैवम्। श्रुतिषु वेदेषु शिवा इति प्रथितं विश्रुत दैवम्। जगत्त्रयविनुतं त्रिलोकसंस्तुत दैवं जयति, प्रकर्षेण वर्तते ॥२३॥

**रमणमहर्षेरन्तेवासी मध्यमपुत्रो नरसिंहस्य ॥**
**वासिष्ठोऽयं मरुतां मातु- र्गणपतिरङ्घ्रिं शरणमुपैति ॥२४॥**

रमण इति– रमणमहर्षेः अरुणाचलवासिनः अन्तेवासी शिष्यः तेनानुगृहीतत्वात्, नरसिंहस्य मध्यमपुत्रः, अनेन कवेः पित्रोः आत्मना सह त्रयः पुत्राः इति ज्ञायते। तत्र मध्यमोऽसौ वासिष्ठः वसिष्ठगोत्रजः अयं गणपतिः मरुता मातुरिन्द्राण्याः अङ्घ्रिं चरणं शरणमुपैति प्राप्नोति ॥२४॥

**त्रिभुवनभर्तुः परमा शक्ति- स्सकलसवित्री गौरी जयति ॥**
**तत्स्तुतिरेषा गणपतिरचिता पादाकुलकप्रान्ता जयति ॥२५॥**

त्रिभुवनेति– त्रिभुवनभर्तुः त्रिलोकेश्वरस्य परमा सर्वोत्कृष्टा शक्तिः सकलसवित्री विश्वजननी गौरी उमा जयति। गणपतिरचिता गणपतिनिबद्धा

पादाकुलकप्रान्ता पादाकुलकानि एतदाख्यवृत्तनिबद्धानि पद्यानि प्रान्ते प्रकृष्टे अन्ते यस्याः सा एषा तन्नुतिः तस्या. गौर्या नुतिः उमासहस्रस्तुतिः जयति उत्कर्षेण वर्तते। तदिदमुमासहस्रं वासिष्ठगणपतिमुनिप्रणीतं विजयतेतराम् विजयतेतराम् ॥२५॥

इति श्रीमहर्षिरमणभगवत्पादान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतिमुनेः कृतावुमासहस्रे चत्वारिंशः स्तबकः समाप्तः।

समाप्तं च दशमं शतकम्।

॥ उमासहस्रं समाप्तम् ॥

सैषा स्तुतिरुमां देवीमधिकृत्य महात्मना ॥
शतकैर्दशभिर्गीता चतुःस्तबकसम्मितैः ॥१॥

अत्रस्थविषयान्सर्वान्वृत्तानि च यथाक्रमम् ॥
सङ्कीर्तयामः पठतां कण्ठस्थपदलब्धये ॥२॥

आर्याभिराद्ये स्तबके व्योमात्मा स्त्रीतनुर्नुता ॥
सर्गादिवर्णनं प्रोक्तं द्वितीये पञ्चचामरैः ॥३॥

तृतीये तनुमध्याभिः सदेहायाश्च साधनम् ॥
चतुर्थे गीतिभिर्गीता आध्यात्मिकविभूतयः ॥४॥

उपजातिभिरुद्वाहः पार्वत्याः पञ्चमे स्मृतः ॥
षष्ठे तु मदलेखाभिर्माहाभाग्यं जगत्सुवः ॥५॥

मातुराकाशदेहाया मातृकादिविभूतयः ॥
वसन्ततिलकावृत्तैः सप्तमे स्तबके नुताः ॥६॥

अष्टमेऽनुष्टुभः शुभ्राः प्रणताभीष्टदायिनीम् ॥
चण्डिकामुपतिष्ठन्ते चरित्रत्रयभासिनीम् ॥७॥

नवमे स्तबके रम्ये तमस्तापहरं परम् ॥
मन्दस्मितं महेश्वर्या आर्याभिरभिवर्ण्यते ॥८॥

वृत्तैः केशादिपादान्तं सौन्दर्यं ललिताभिधैः ॥
तथा पादादिकेशान्तम् आर्याभिर्भुवनोत्तरम् ॥९॥

अभिवर्णितमम्बाया द्वयोः स्तबकयोस्ततः ॥
रथोद्धताभिः शृङ्गारवर्णनं द्वादशे कृतम् ॥१०॥
त्रयोदशे जगन्मातुः कटाक्ष उपजातिभिः ॥
चतुर्दशेऽथ स्तबके शस्ताभिरुपगीतिभिः ॥११॥
काली गौरी परा देवी गीता कुण्डलिनी तथा ॥
उदीर्णं स्वागतं देव्याः स्वागताभिरनन्तरे ॥१२॥
कुमारललितावृत्तैरध्यात्मं शक्तिवैभवम् ॥
षोडशे विवृतं सर्वमथ सप्तदशे परा ॥१३॥
शक्तिश्चम्पकमालाभिर्दिव्या मदकरी स्तुता ॥
प्रहर्षिणीभिर्धाराभिर्गिरामष्टादशे त्वथ ॥१४॥
कुण्डलिन्याः समुल्लासश्चित्रो व्याख्यायते सताम् ॥
तथा रूपविशेषाणाम् साक्षात्कारश्च कीर्त्यते ॥१५॥
एकोनविंशे स्तबके ललिताया महत्तरम् ॥
प्रमाणिकाभिरग्र्याभिर्ध्येयं रूपं प्रगीयते ॥१६॥
मणिबन्धैस्तथा विंशे सर्वसारमयी स्तुता ॥
एकविंशे हरार्धाङ्गीं सम्प्रगायन्त्यनुष्टुभः ॥१७॥
वियोगिनीभिर्द्वाविंशे गीतं हरकुटुम्बकम् ॥
अथ प्रकीर्णकौ तत्र त्वेका नरमनोरमा ॥१८॥
गायत्रीगर्भिताऽन्या तु सुप्रतिष्ठा सरत्प्रभा ॥
क्षेत्रमालेन्द्रवज्राभिः पञ्चविंशे प्रगीयते ॥१९॥
षड्विंशे दोधकैर्गीता माताऽपीतकुचाम्बिका ॥
प्रचण्डचण्डीं गायन्ति शिखरिण्यस्त्वनन्तरे ॥२०॥
वसन्ततिलकावृत्तैरष्टाविंशे मनोहरैः ॥
उज्ज्वलं स्तबके गीतं रेणुकाद्यभिवर्णनम् ॥२१॥
मदलेखाभिरेकोनत्रिंशे नवविधं लघु ॥
अनर्घं भजनं गीतं भक्तलोकमुदावहम् ॥२२॥
त्रिंशे प्रमाणिकावृत्तैर्मातुर्मानसपूजनम् ॥
एकत्रिंशेऽम्बिकानाम्नां माहात्म्यमुपजातिभिः ॥२३॥

आर्यागीतिभिराख्यातौ भक्तियोगोऽप्यनन्तरे ॥
त्रयस्त्रिंशे तु वंशस्थैर्जपो योगोऽर्पणं तथा ॥२४॥
हरिणीशक्वरीभ्यां तु क्रमशः प्रार्थना द्वयोः ॥
तथातिशक्वरीभिश्च षट्त्रिंशे तु प्रकीर्णकम् ॥२५॥
व्याचक्षतेऽथ तत्त्वानि सप्तत्रिंशे त्वनुष्टुभः ॥
ततो दशमहाविद्याः पादाकुलकगीतयः ॥२६॥
एकोनचत्वारिंशे तु स्तबके जगतीसुवः ॥
महिमा व्योमदेहाया इन्द्रवज्राभिरीडितः ॥२७॥
चत्वारिंशेऽन्तिमे स्तोत्रे पुरुषार्थकरं परम् ॥
दैवगीतं महासारं पावनानां च पावनम् ॥२८॥
इत्थं सहस्रं पद्यानामधिकृत्याखिलेश्वरीम् ॥
गीतं प्रशस्तं महतां माननीयेन सूरिणा ॥२९॥
वृतेन रत्या भारत्या प्रतिभानमहीयसा ॥
तपसोऽङ्गतया कण्ठं गतया काव्यवेधसा ॥३०॥
निर्मिता रतिनिष्पत्तिभूरम्बापदपद्मयोः ॥
स्तुतिः कामदुघा सैषा कृतिर्गणपतेर्गुरोः ॥३१॥
वेदशास्त्रादिविद्याब्धिलोडनेन महात्मना ॥
स्तोत्रसाहित्यममृतं भूसुरेण समाहृतम् ॥३२॥
सेव्यतां काव्यरसिकैर्भज्यतां भजनार्थिभिः ॥
महत्त्वकाङ्क्षिभिः सद्भिरिदमादीयतामिति ॥३३॥
व्याख्यां सहायामाबध्य प्रभामेनां मुनेर्गिराम् ॥
कृतकृत्योऽस्मि तस्यान्तेवासी पुत्र इव प्रियः ॥३४॥
सेयं प्रणीता साहित्यगुणालङ्कारसारगा ॥
जगदम्बापदप्रेमरसाविर्भावजीवना ॥३५॥
आनृण्यं लेशतो वाऽपि गुरोर्गन्तु प्रकल्पताम् ॥
इति यत्नोऽयमारब्धस्सम्पूर्णस्तत्प्रसादतः ॥३६॥
न पाण्डित्यप्रकर्षोऽत्र न वा तस्य प्रकाशनम् ॥
विद्यासन्तानविच्छेदवारणं मूलकारणम् ॥३७॥

अधीतस्तातपादेभ्यस्स्वाध्यायस्सामशाखिना ॥
बाल्ये काव्यानि शास्त्रं च तथा शब्दानुशासनम् ॥३८॥

श्रीविद्या च मया लब्धा तथैव पितृपादतः ॥
अथ दैवप्रसादेन प्राप्ताद् गणपतेर्मुनेः ॥३९॥

साहित्यशास्त्रविज्ञानं दर्शनाना गतीरपि ॥
देवतातत्त्वमीमासा मन्त्रयोगस्य साधनम् ॥४०॥

वेदार्थपद्यां गहनां रमणं परमं गुरुम् ॥
सर्वाण्येतानि सम्प्रापं गुरुनाथाद् गिरा प्रभोः ॥४१॥

तदत्र गुणलेशाश्चेद्रचितायां कपालिना ॥
समर्च्यास्तत्र गुरवो हेतव. पुरुषास्त्रयः ॥४२॥

गुरुर्विश्वेश्वरो जीयाज्जीयाद् गणपतिर्गुरुः ॥
रमणो मुनिराट् जीयाज्जीयात्स परमो गुरुः ॥४३॥

इदम्प्रसूः परा जीयादुमा जीयात्पुरातनी ॥
उमासहस्रमासूर्य जीयाज्जीयात्प्रभोज्ज्वलम् ॥४४॥

इति श्रीमहर्षिरमणभगवत्पादानुध्यातश्रीभगवद्वासिष्ठगणपतिमुनिप्रवरान्तेवासिनः पूर्णयोगाचार्यश्रीमदरविन्दभगवत्पादानुध्यातस्य भारद्वाजस्य विश्वेश्वरसूनोः कपालिनः कृतिः उमासहस्रप्रभाख्या उमासहस्रव्याख्या समाप्ता ॥

# उमासहस्रश्लोकसूचिका

श्लोकः

| श्लोकः | | | पार्श्वम् |
|---|---|---|---|

श्लोकः पार्श्वम्